✽ श्रीकृष्णं वन्दे जगद्गुरुम् ✽

✽ श्रीमते रामानुजाय नमः ✽

✽ श्रीमते वादिभीकरमहागुरवे नमः ✽



श्रीमद् वरवरमुनीन्द्रानुगृहीता 'गीतार्थसंग्रहदीपिका' नाम्नी

संस्कृतव्याख्योपेता

# ✽ श्रीमद्भगवद्गीता ✽



श्रीकाञ्चीप्रतिवादि भयङ्करमठाधीश श्रीमज्जगद्गुरु

श्री १००८ श्रीगादी वैं० *श्रीअनन्ताचार्य* स्वामिवर्यानु

गृहीता संस्कृतभूमिकायुक्ता च

विशिष्टाद्वैतसम्मतहिन्दीभाषाअनुवादकः

केशवदेव शास्त्री, वृन्दावन

सम्वत् २०४०



श्रीरस्तु

## ॥ भूमिका ॥



अस्य गीतार्थसंग्रहदीपिकाख्यस्य भगवद्गीताव्याख्यानस्यानुग्रहीतारः श्री वरवरमुनिवर्याः श्रीवैष्णवसम्प्रदायावलम्बिषु दक्षिण तैंगलाचार्य्य संज्ञानाम्प्रधानतमा आचार्यवर्याः ।

गुरुवर्योयं ताम्रपर्णीतीरे कुरुकापुर्यां श्रीशठारिदिव्यधाम्नि श्रीमल्लोकाचार्यचरणसमाश्रितस्य गोमठान्वयवंशमुक्ताफलस्य दीप्रशयनाख्यस्य गुरुवर्यस्य तनयतया वातरत् ।

आचार्योयं ४४७१ वर्षेषु कलेर्यातेषु ४४७२ तमे कल्यादिवर्षे, १२९३ तमेगता शालावाहनशकाब्दे ( A. D. 1370 ) साधारणनामनि सम्वत्सरे तुलामासे शुक्लचतुर्थ्यां मूलनक्षत्रेऽवतीर्णोभूत् ।

अस्यायमवतारकालप्रतिपादकः श्लोकः पठ्यते—

"पाथोभावाद्गतायां कलियुगशरदि श्रद्धराये शकाब्दे
वर्षे साधारणाख्ये समधिगततुले वासरे तीरसंख्ये ।
वारे जीवे चतुर्थ्यां समजनिच तिथौ शुक्लपक्षे सुकर्मा
भ्राजन्मूलाख्य तारे यतिपतिरपरो रम्यजामातृनामा ॥"

यथाविधि काले जातकर्मादिभिस्संस्कृतोऽभिरामवराधीश इति कृत नामधेयोयं मातुलगृहे शिक्किल्कडारनाम्नि अग्रहारे बाल्यमत्यवाहयत् । साङ्गोपाङ्गांश्च वेदानधीत्य कृतसमावर्तनो गार्हस्थ्यं पित्रा प्रवेशित स्साम्प्रदायिकांश्च रहस्यादिग्रन्थान् पितुस्सकाशादेवागृह्णात् ।

अथ पितरि परमपदं गते यथाविधि निर्वर्तिततदीयपैतृमेधिक कृत्यो मातुलगृहाज्जन्मभूमिं कुरुकापुरीमागत्य तत्रैव निवसन्, तदानीं तत्र श्रीवैष्णवसम्प्रदायाचार्यपदवीं निर्वहन्तमप्रतिमवैभवं ज्ञानवैराग्यशेवधिं श्रीशठारियतिराजचरणपरिचर्यैकनिरतं श्रीशठकोपदिव्यसूक्तिसुधापानैकरतान्तरंगं श्रीशैलनाथं गुरुमाश्रित्य तदेकदैवतस्तस्मादेव द्राविडप्रबन्धार्थान् शृण्वन्

तत्प्रदर्शिते श्रीरामानुजचरणकमले एवोपायत्वेनोपयेत्वेनचाध्यवस्यं श्चिरमवात्सीत् । तदैव चास्य कश्चित्तनयोप्यजायत, यो गुरोश्श्रीशैलनाथस्याज्ञया रामानुज इति विहितनामधेयोऽभूत् ।

श्रीशैलनाथो गुरुश्च चिरं श्रीरामानुजदर्शनं निरूह्य प्रातिस्विक दिव्यालयनिर्माणादिनाच श्रीरामानुजचरण.कैङ्कर्यं बहुमुखं निर्वर्त्य नित्यविभूतिमलञ्चिकीर्षुरुणशय्यामधिशयानः, पार्श्वस्थैश्शिष्यैश्च मुखवैवर्ण्यमभिवीक्ष्य शङ्कमानैस्तन्निदानजिज्ञासया विज्ञापितः "कालेऽत्रकलौ दिव्यसूरिश्रीसूक्तिषु निबद्धरुचिविश्वासः कोनाम दिव्यप्रबन्धान्प्रचारयिष्यती" ति क्लेशो मे मनसीति प्रत्युत्तरयन्, 'अयमसौ यथादेशं करिष्यती' ति अभिरामवरगुरुणा सप्रणामं विज्ञापितः, "नालमेतावतोक्तिमात्रणे" ति पुनरुक्त्वा, पुनरप्यभिरामवरेण चरणस्पर्शपूर्वकं "एवमेतत्करिष्यामी" ति प्रतिज्ञाते तुष्यन्, अभिरामवरं गुरुं समीपे समाहूय "संस्कृतशास्त्रेष्वधिकं दृष्टिमनिक्षिप्य एकदा श्रीभाष्यंश्रुत्वा, श्रीरामानुजस्य मुनेर्ममचाभिमतं श्रीमुखसूक्तप्रभृतिदिव्यसूरिप्रबन्धपरिशीलनं सदा कुर्वन्, पूर्वाचार्यवद्भगवन्मङ्गलाशासनपर श्श्रीरंगे नित्यं सुखमास्व" त्याज्ञाप्य, अन्येभ्यश्च शिष्येभ्योभिरामवरं गुरुं प्रदर्श्यास्मिन्नवतारविशेषबुद्धिं बध्नन्सस्सादरं तिष्ठतेत्युपदिश्य, कृतकृत्यो निर्भरस्स्वाचार्यचरणकमले समनुध्यायन् श्रीवैकुण्ठमभजत् ।

अथ गुरुरयं सहस्रब्रह्मचारिभिर्गुरोश्श्रीशैलनाथस्य ब्रह्ममेधं यथाविधि निर्वर्त्य तदाज्ञामनुपालयन् द्राविडप्रबन्धरहस्यग्रन्थादीनेव विशेषतोनुशीलयन्नवसत्तत्रैव कञ्चित्कालम् । तदात्वेच सुन्दरवरदविष्वक्सेनगुरुप्रभृतयो बहव एनमशिश्रयन् ।

गते कतिपये काले श्रीरङ्गनाथं सिषेविषुः कुरुकापुरीतः प्रस्थाय गतिक्रमेण श्रीरङ्गनगरं प्राप्य श्रीरङ्गनाथं संसेव्य तदाज्ञया तत्रैव च रहस्यग्रन्थान् जीर्णान् पुनरुज्जीवयन् कञ्चनकालमनयत् । अथ ततश्श्रीश्रीनिवासदर्शनेच्छया श्रीवेङ्कटाद्रिं गत्वा प्रतिनिवर्तमानः कांच्यां दयानिधिं देवाधिराजं संसेव्य भूतपुरीं गत श्श्रीरामानुजं प्रणम्य तदाज्ञया पुनः कांचीमागत्य घटाम्बुवंशसम्भवस्य कृष्णगुरोरन्तिके श्रीभाष्यमधीत्य श्रीरंगं प्रतिनिवृत्तोभूत् ।

एकदाच कुरुकापुरीत स्समागतैः कैश्चिदाशौचे कस्मिंश्चिन्निवेदिते, तेन श्रीरङ्गनाथस्य सेवायां प्रतिबद्धायां निर्विद्यमान स्संसारसम्बन्धस्य सर्वथा भगवत्कैङ्कर्यविरोधितामनुसन्दधान स्सर्वसङ्ग परित्यागपूर्वकं तदैव सन्न्यासमास्थितोऽभूत् ।





इत्थं तुरीयमाश्रमं प्रविश्य भगवत्कैङ्कर्यैकनिरतस्तदीयमङ्गलाशासनपरश्श्रीरङ्गनाथस्य नित्यनैमित्तिकसमाराधनादीनि यथाविधि कालेषु कैङ्कर्यपरैः कारयन् द्राविडप्रबन्धतद्व्याख्यानलोकाचार्यानुगृहीतरहस्यग्रन्थादीन् शिष्येभ्यउपदिशन् नानाविधांश्च ग्रन्थान्निर्मायाष्टदिग्गजसंज्ञांतत्सिंहासनाधिपतीन्प्रतिष्ठाप्य त्रिसप्ततिं सम्वत्सरान्भूमण्डलमलंकृत्य ततः परम्पदमलमकरोत् ।

अस्यच गुरोश्चरणयुगलमाश्रिता बहवआचार्याः । तेषुप्रधाना अष्टदिग्गजसंज्ञा अष्टौ आचार्याः । तेषु त्रयस्सन्यासिनः पंचगृहस्थाः । वानाद्रियोगी, भट्टनाथमुनिः, श्रीनिवासयतिः, इतित्रयस्सन्यासिनः । प्रतिवादिभयङ्करगुरुः, देवराजगुरुः, वाधूलवरदनारायणगुरुः, रामानुज गुरुः, तत्सूतगुरुः, इतिपञ्चगृहस्थाः ।

श्रीशठकोपदिव्यसूक्तिभूत श्रीसहस्रगीतिव्याख्यायां श्रीकृष्णपादगुरुविरचितायां षट्त्रिंशत्साहस्र्यामस्य गुरोरप्रतिमं प्रावीण्यमभवत् । षट्त्रिंशत्साहस्रीस्रावक इत्येवास्य नाम जगति प्रथितमासीत् । एकदास्य वैभवं प्रकटीचिकीर्षुर्भगवान् श्रीरङ्गनाथस्स्वास्थानमण्डपे प्रतिदिनं षट्त्रिंशत्साहस्रीमुपन्यसितुमेनमाज्ञाप्य, तस्मिन्नुपन्यस्यति स्वयंच सपरिवारस्तत्र सन्निहित स्समाकर्णयन्नन्ते बालकवेषेण स्वयमेव "श्रीशैलेशदयापात्रं धीभक्त्यादिगुणार्णवम् । यतीन्द्रप्रवणं वन्दे रम्यजामारं मुनिम्" इत्येतद्विषकंपद्यं प्रकटयन्, ततः प्रभृतिदिव्यप्रबन्धपाठस्यारम्भे समाप्तौ च पद्यस्यास्यानुसन्धानं सर्वैरपि कर्तव्यमित्याज्ञापयामास । इत्येवं गुरोरस्यचरितं प्रतिपादयत्सु ग्रन्थेषु वर्ण्यते ।

गुरुरयं नित्यसूरिषु प्रधानतमस्यादिशेषस्यावतारभूत इति चरिते प्रतिपाद्यते । जीवनकालेचानेन स्वीयाशेषांशता स्फुटमेव प्राकाश्यत बहुधेति च तत्रैवस्फुटम् ।

"शेषश्श्रीमानजनि स पुन स्सौम्यजामातृयोगी
भोगीन्द्रोय स्तदनु महितो राघवस्यानुजोऽभूत् ।
भूत्वा भूयो वरवरमुनिर्भूयसा भासमानो
रक्षत्यस्मान् रघुकुलपते राश्रितो भद्रपीठम् ।।

इत्यस्य शेषावतारताप्रतिपादकः प्राचीनश्लोकः ।

गुरुरयं श्रीवैष्णवसम्प्रदायावलम्बिषु दक्षिणकलाचार्याणां गुरुपरम्परायां लक्ष्मीपतिमारभ्याष्टादश आचार्याः ।

अयमत्र परम्पराक्रमः—

(१) लक्ष्मीनाथः ।
(२) श्रीः ।
(३) विष्वक्सेनः ।
(४) शठकोपः ।
(५) नाथमुनिः ।
(६) पुण्डरीकाक्षः ।
(७) राममिश्रः ।
(८) यामुनाचार्यः ।
(९) महापूर्णः ।
(१०) श्रीमान् रामानुजमुनिः ।
(११) गोविन्दाचार्यः ।
(१२) पराशरभट्टारकः ।
(१३) वेदान्तिसूरिः ।
(१४) कलिवैरी ।
(१५) श्रीकृष्णपादगुरुः ।
(१६) लोकाचार्यः ।
(१७) श्रीशैलनाथः ।
(१८) वरवरमुनिः ।

इति ।

आचार्यवर्येणानेन प्रणीता ग्रन्थाश्च—(१) श्रीवचनभूषणव्याख्यानं, (२) रहस्यत्रयव्याख्यानं, (३) तत्वत्रयव्याख्यानं, (४) आर्तिप्रबन्धः, (५) उपदेशरत्नमाला, (६) श्रीमुखसूक्तशतान्तादिः [ तिरुवाय्मोलिनूतन्तादि ] (७) यतिराजविंशतिः, (८) भगवदाराधनविधिः, (९) गीतार्थसंग्रहदीपिका, (१०) श्रीविष्णुचित्तश्रीसूक्त (पेरियाल्वार्तिरुमोलि) व्याख्यानं, (११) श्रीरामानुजशतान्तादि (नूत्तन्तादि) टीका, (१२) षट्त्रिंशत्साहस्री प्रमाणसंग्रहः, (१३) ज्ञानसारव्याख्यानम्, (१४) प्रमेयसार व्याख्यानम्, (१५) सप्तगाथाव्याख्यानम्, (१६) आचार्यहृदयव्याख्यानम्, इत्यादयः । एषु "यतिराजविंशतिं' 'गीतार्थसंग्रहदीपिकां,प्रमाणसंग्रहग्रन्थांश्च विनान्ये सर्वेपि ग्रन्था स्संस्कृतमिश्रद्राविडभाषामयाः । 'उपदेशरत्नमाला' 'श्रीमुखसूक्तशतान्तादिः' इत्येतौ पुनर्द्राविडगाथारूपौ ।

अत्र केचिदर्वाचीना गीतार्थसंग्रहदीपिकाख्यस्यास्य भगवद्गीता





व्याख्यानस्य श्रीवरवरमुनिप्रणीततां नानुमन्यन्ते । न केवलमुत्तरकलाचार्यविभागप्रविष्टाः, दक्षिणकलाचार्यविभागान्तर्गता अपि केचित्तथाविधा दृश्यन्ते; परन्तु न वयं तथाविधसन्देहगन्धस्यापि कारणमुत्पश्यामः । येपि नामाक्षिपन्ति, तेषामप्येतावतास्य ग्रन्थस्य तदीयदृष्ट्यगोचरत्वं, आचार्यस्यास्य संस्कृतसन्यासप्रवाद इत्यादिकमेवाक्षेपस्य मूलमितिजानीमः । तत्रेदं विचारणीयं, किमेतस्य ग्रन्थस्य श्रीवरवरमुन्यप्रणीततानिर्णये पर्याप्तं कारणमस्ति न वेति ?

पूर्वपक्षिभिरेतैरेतावतास्य ग्रन्थस्याश्रुतदृष्टत्वं तु न पर्याप्तं निदानम्, सर्वैस्सर्वेषामपि ग्रन्थानां श्रवणदर्शनयो रसम्भावितत्वात्, कैश्चिदश्रुत दृष्टत्वस्यैव कैश्चिद्दृष्टश्रुतत्वस्यापि विद्यमानत्वात् ।

आचार्यवर्याणामेषां संस्कृतसन्यासग्रहणप्रवादश्च नास्य ग्रन्थस्य तत्प्रणीततानिर्णये विरोधी, एतदीयचरित्रप्रतिपादकेषु यतीन्द्रप्रवण प्रभावादिषु संस्कृतसन्यासग्रहणवृत्तान्तादर्शनात्, संस्कृतग्रन्थेष्वधिकदृष्ट्यनिक्षेपस्य द्राविडप्रबन्धतद्व्याख्यानादिप्रबचनेष्वेवाधिकश्रद्धानिक्षेपस्य चैवाचार्याज्ञया प्रतिज्ञातत्वावगमात् । तस्याश्च प्रतिज्ञाया स्संस्कृतशब्दोच्चारणसामान्यविरोधित्वे भगवद्दर्शनादिकालेषु पूर्वाचार्यप्रणीतस्तोत्राद्यनुसन्धानादेरप्यभावप्रसङ्गात्; तस्य चैतदीयचरित्रग्रन्थविरुद्धत्वात्;प्रत्यहकर्तव्यसन्ध्यावन्दनाद्यनुष्ठानप्रसङ्गाच्च । संस्कृतसन्यासग्रहणस्यैतदीयचरित्रग्रन्थाप्रतिपन्नस्यै तत्कृतत्वाभ्युपगमेपि यतिराजविंशतिग्रन्थस्येवास्यापि तत्सन्यासग्रहणपूर्वकालप्रणीतत्वांगीकारसम्भवात्, वस्तुगत्यापि तदैवास्यावतीर्णत्वाच्च ।

संस्कृतभाषायामेषामत्यन्तासामर्थ्यवर्णनं चात्यन्तासङ्गतम्, यतिराजविंशतिग्रन्थस्यैकस्यैवैतदीयसरससरलसंस्कृतकवितानिदर्शने पर्याप्तत्वात् । 'तत्वत्रयव्याख्यान' षट्त्रिंशत्साहस्रीप्रमाणसंग्रहा' दिष्वस्य गुरोरप्रतिमस्य वैदुष्यस्य स्फुटमवगमाच्च ।

यत्पुनरस्य ग्रन्थस्यारम्भे एतदीयप्रसिद्धाचार्यवर्यात् श्रीशैलनाथगुरोरन्यस्य गोविन्दाचार्यस्य मङ्गलश्लोके निबन्धनं; तदप्यस्य ग्रन्थस्य तत्प्रणीततायां न विरोधि, एतद्ग्रन्थावतारसमये गुरोरस्य श्रीशैलनाथगुरुसमाश्रितत्वाभावस्य सम्भावितत्वेन दोषात् । वरवरमुनेरस्य प्रथमं स्वतातपादचरणसमाश्रितत्वं पश्चादेवच तेषां निर्याणाच्छ्रीशैलनाथगुरुसमाश्रयणं च तदीयचरितवेदिनां स्पष्टम् । श्रीशैलनाथगुरुचरणसंश्रयणानन्तरमपि स्वपूर्वाचार्यविषये मङ्गलाचरणं च नायुक्तम् ।

अथास्तु गुरोरस्य श्रीशैलनाथगुरुसंश्रयणात्पूर्वं स्वतातपाददीप्रशयानगुरुच्चरणसंश्रितत्वं, अस्तु च तद्विषयकमङ्गलाचरणस्य युक्तत्वं, तावता श्रीगोविन्दाचार्यनाम्न. कस्यचन गुरोर्मङ्गलश्लोके निबन्धनं कथमुपपद्यतामिति चेत् ? श्रीवरवरमुनितातपादानां दीप्रशयान गुरूणामेव गोविन्दाचार्यसंज्ञत्वोपगमेन न किमप्यनुपपन्नं नाम। दीप्रशयानगुरो र्गोविन्दाचार्यसंज्ञत्वे किम्प्रमाणमितिचेत् ? तदभावे वा किम्प्रमाणम् ? सम्प्रदायपरम्परया गुरोस्तस्य गोविन्दाचार्यनामधेयत्व प्रसिद्धिश्च प्रबलं प्रमाणं जागर्ति। 'दीप्रशंयान' इति 'श्रीजिह्वावदधीश' इतिच नामद्वयं प्रसिद्धम्। तदेतदुभयमपि गुणप्रयुक्तं न नामकरणकाले पित्रा विहितं, किन्तु पश्चात्तदीय गुणगणानुगुणं तादात्विकैराचार्यैस्संकेतितम्। प्रायोहि गुणकृतनाम न नामकरण कालिकं भवति, किन्तुपश्चादेवेति सर्वाभ्युपगतम्। इत्थं चास्य दीप्रशयानस्य गुरोर्नामकरणसंस्कारकाले तत्पित्रा कृतेन केनचिच्छर्मान्तेन नाम्नाद वयम्भाव्यम्। तच्च 'गोविन्दशर्मे' त्येवेत्यभ्युपगमे कोवा दोषः प्रसज्येत् बलवान्। तस्माद्वरवरमुनिना गीतार्थसंग्रहदीपिकारम्भे स्वस्य पितरमाचार्यञ्च श्रीगोविन्दगुरुमधिकृत्य मङ्गलमारचितमिति निश्चीयतइति नकोपि दोषः।

यत्पुनरत्र केचिदाहुः—"वरवरमुनिवरस्य स्वजनक सन्निधौ कतिपयांश ग्रहणस्याभ्युपगमे श्रीशैलनाथगुरुसमाश्रयणात्पूर्वं गीता व्याख्याया अस्याः करणाभ्युपगमेच रहस्यत्रयग्रहणस्य गीताभाष्य ग्रहणस्य चाभ्युपगमोऽवश्यम्भावाति जगति निखिलैरपि दक्षिणकला विभागस्थै रहस्यत्रयपरम्परायामपि वरवरमुनीन्द्रात्परं श्रीशैलनाथानुसन्धानं कथमुपपद्यताम्, गुरुपरम्परायां कस्यापि परित्यागोपूर्वस्य निवेशश्च दोषएवेति नूनं बलवानाक्षेपोभवति।" इति।

तत्र वदामः। प्रथममेकं गुरुमाश्रितस्य ततो गृहीतसकलार्थस्यापि ज्ञानविशेषलुब्धस्य मधुकरवृत्तिमवलम्बमानस्य पश्चात् ज्ञानानुष्ठान विशेषशालिगुर्वन्तरसमाश्रयणं शास्त्रानुमतं सम्प्रदायसिद्धं च। अतएव भगवद्भाष्यकारावतारानन्तरं ततःपूर्वं गुर्वन्तराश्रितानां सर्वेषामेव सतां प्रायस्तदीयचरणसंश्रयणमितिहासेषु प्रतिपाद्यते।

तत्र ज्ञानविशेषलोभेन गुर्वन्तरमाश्रितस्य पुरुषस्य प्राक्तनाचार्य सन्निधौ गृहीतानामप्यर्थानां पुनःपश्चात्तनाचार्यसन्निधौ शृङ्खलाया अविच्छेदाय ग्रहणंच साम्प्रदायिकम्। एतादृशानांच पूर्वोत्तरोभय गुरुमन्त्रानुसन्धानं प्राप्तम्। दृश्यतेच तथैवानुष्ठानं प्राचामाचार्याणाम्। परमिदं





गुरुद्वयमन्त्रानुसन्धानं तत्तत्पुरुषविशेषमात्रविश्रान्तं, नतु शिष्यपरम्परायामनुवर्तते।

भगवद्रामानुजमुने श्श्रीवैष्णवसम्प्रदायाचार्यसिंहासनास्थानात्पूर्वं यथारुचि तत्तदाचार्यचरणसमाश्रितानां ततएव गृहीत सकलार्थानामपि बहूनामाचार्याणां पुनरपि भगवद्रामानुजमुनिसंश्रयणं ततएव सकलार्थानां ग्रहणं च प्रसिद्धम्, तथाविधानामप्याचार्याणां शिष्य पुत्रसन्ततौ कुत्रापि वा श्रीमद्यामुनमुनिमहापूर्णरामानुजमुन्यादि घटितगुरुमन्त्रावलीं विनायस्य कस्याप्यनुसन्धानं न श्रुतदृष्टचरम्। तेनैदमवगम्यते - यदेकस्य गुरुद्वयसत्त्वेपि पश्चात्तनस्य श्रीवैष्णवसम्प्रदायनिर्वाहकस्य गुरोरेव मन्त्रश्श्रीवैष्णवगुरुमन्त्रावलीमध्ये सम्मेलयते नान्यस्येति नियमोनुवर्तते कश्चिदिति। प्राक्तनस्यापि गुरोर्येनकेनापि प्रकारेण सम्प्रदायोपकारकत्वे तु कामं तस्यापि मन्त्रोनुसन्धीयत एव पार्थक्येन। अतएव कैश्चिदाद्यापि कूरेशस्य गुरुपरम्परायामघटकस्याप्युपकारातिशयस्मरणेनमन्त्रोनुसन्धीयमानो दृश्यते।

श्रीरामानुजपदच्छायाभूतस्य गोविन्दगुरो श्श्रीमद्रामानुजमुन्याश्रयणात्पूर्वं श्रीशैलपूर्णाश्रितत्वस्य प्रसिद्धत्वेपि सर्वैरपि श्रीवैष्णवै रेकरूपेण गोविन्दगुरोः परं श्रीरामानुजो मुनिरेवानुसन्धीयते, नतु श्रीशैलपूर्णः। इदमेकमेवालं पूर्वोक्तस्य साम्प्रदायिकस्य नियमस्य प्रधानं प्रदर्शकम्।

इत्थमेवच वरवरमुनेश्श्रीशैलनाथसमाश्रयणात्पूर्वं स्वतातपादचरण संश्रितत्वेपि ततएव गृहीतरहस्यार्थत्वेपिच पश्चाच्छ्रीशैलनाथगुरुसंश्रयणेन रहस्यत्रयपरम्परायामपि वरवरमुनेः परं श्रीशैलनाथस्यैवानुसन्धानं, दीप्रशयानगुरोर्मध्ये पृथगनुसन्धानंच न्यायप्राप्तं सम्प्रदायहरम्परयानुवर्तत इति नकोपि दोषस्य लेशोपीति।

"लोकगुरुं गुरुभिस्सहपूर्वैः
कूरकुलोत्तमदासमुदारम्।
श्रीनगपत्यभिरामवरेशौ
दीप्रशयानगुरुंच भजेऽहम्।"

इति स्वयं श्रीवरवरमुनिभी रहस्यत्रयपरंपरानुसमधायि। पश्चात्प्रतिवादिभयङ्कर गुरुणा 'दीप्रशयं वरयोगिनमीडे' इति तुरीयचरणे मन्त्रेस्मिन् ऊहोकारीति सम्प्रदायः।

अथैवं महता प्रयासेन गीतार्थसंग्रहदीपिका अस्या वरवरमुनिवर्य प्रणीतत्वव्यवस्थापने,अस्य ग्रन्थस्य तदीयचरितप्रतिपादक ग्रन्थेषु तदनुगृहीत-

ग्रन्थपरिगणनसमयेऽपरिगणनं कथमुपपद्यत इतिचेत् ? अपरिगणस्यैवासिद्धत्वात्कानाम तत्रोपपत्तिर्वक्तव्या ! बहुषु ग्रन्थेषु वरवरमुनेः गीताव्याख्यानप्रणयनं हि वर्ण्यतएव स्पष्टम् ।

"यतीन्द्रप्रवणप्रभाव" नामको गुरोरस्य चरित्रग्रन्थस्संक्षेप विस्तराभ्यां बहुविधो वर्तते । प्राचीनतालपत्रमयपुस्तकेष्वेतत्प्रणीतग्रन्थपरिगणनावसरे भगवद्गीताव्याख्यानस्यापि परिगणनं तत्र दृश्यत एव । तथाच तत्रत्योयं ग्रन्थः—

"इप्पडि सर्वलोकोज्जीवनार्थमाह अवतरित्तरुलिन जीयर् अखिल जनजीवातुवान पिल्लैलोकाचार्यर् दिव्यसूक्तिहलान तत्वरहस्यत्रयङ्गलुक्कु व्याख्यानम् शेय्दरुलि अशेषार्थप्रतिपादकमुमाय् अर्थकामनिराकरण चतुरमान श्रीवचनभूषणत्तुक्कु "मेच्चुवियाक्कियै" एन्रु विशेषज्ञरादरिक्कुम्बडि व्याख्यानम्शेय्दरुलि, "श्रीवचनभूषणमान् देवक्कुलिहैपेत्तोम्, पारुलकैप्पोन्नुलकर् पार्क्कप्पेत्तोम्, तेरिलेमक्कोप्पारिनियारुलहाशिरियनरुल् तप्पामलेय्दियपिन्' एन्रु इदिन् वैभवत्तै त्तामनुसन्धित्तुप्पोरप्रीतरायरुलिनारिरे । अनन्तरं श्रीवचनभूषणत्तुक्कडियाय् चरमपर्वनिष्ठाक्रमङ्गलैयडैयप्पेशुम्नूत्तन्दादिक्कुम ज्ञानसारप्रमेयसारङ्गलुक्कुम् व्याख्यानम् शेय्दरुलि, तत्वरहस्यत्रयङ्गलुक्कुम् ईट्टुक्कुम् प्रमाणत्तोरट्टुसंग्रहित्तरुलियुम्, गीतैक्कुम् तात्पर्यदीपमेन्रोरु व्याख्यानमिट्टरुलि, उडैयवर् नित्यम् तिरुवाराधनक्रमत्तैयुम् सुग्रहमाहवुम् सर्वात्मोज्जीवनार्थमाहच्चेय्दरुलिनारिरे ।" इति ।

यद्यपि "तात्पर्यदीपः" 'तात्पर्यदीपिका' 'तात्पर्यसंग्रह' इत्यादीनि भिन्नभिन्नानि नामानि भिन्नभिन्नेषु पुस्तकेषु दृश्यन्ते, अथापि वरवरमुनिवरप्रणीतस्य कस्यचिद्गीताव्याख्यानस्य सद्भावे तेषाम्प्रमाणभावोऽप्रतिहतः ।

महीसारपुरवासिना श्रीवीरराघवगुरुणा प्रणीते 'त्रिंशत्प्रश्नोत्तर' नाम्नि ग्रन्थे द्वितीयप्रश्नोत्तरेपि गीताव्याख्यानस्य परिगणनमस्ति । तत्रत्यश्चायं ग्रन्थः—

'इवर्शेय्दरुलिप्रबन्धङ्गल - श्रीवचनभूषणव्याख्यानमुम् आर्तियुम्, उपदेशरत्नमालैयुम्, तिरुवाय्मोलिनूत्तन्दादियुम्,यतिराजविंशतियुम्, मुमुक्षुप्पडिव्याख्यानमुम्, तत्वत्रयत्तिक्कु व्याख्यानमुम्, तिरुवाराधनक्रममुम्, गीतातात्पर्यदीपमुम्, पेरियाल्वार्तिरुमोलिक्कुव्याख्यानमुम्, नूत्तन्दादियुरैयुम्, मुप्पत्तारायिरप्पडिक्कुप्रमाणत्तिरट्टुम्,





ज्ञानसारव्याख्यानमुम्, प्रमेयसारव्याख्यानमुम्, सप्तगाथाव्याख्यानमुम्, इन्नुमुण्डाहिल् कण्डुकोल्वदु ।" इति ।

तेनैव श्रीवीरराघवगुरुणा प्रणीते 'प्राचीनाचारप्रकाश' (प*नडैविलक्कम्) नाम्नि प्रबन्धेच ग्रन्थस्यास्य नामोदाहृतं दृश्यते । अयंच तत्रत्योग्रन्थः —

"इनिक्कोयिल्वृत्तान्तम् · निन्बुपेरियजीयरुम् पेरियपेरुमालाले मिहवुमादरिक्कप्पट्टु लोकाचार्यरुलिच्चेय्दरहस्यङ्गलुक्कव्याख्यानङ्गलुम्, मत्तुमनेकग्रन्थङ्गलुम्, शेय्दरुलिनार्; अवैयावन - रहस्यव्याख्यानम्, तत्वत्रयव्याख्यानम्, श्रीवचनभूषणव्याख्यानम्, आचार्यहृदयव्याख्यानम्, पेरिया*वार्तिरुवाय्मोलिव्याख्यानम्, नूत्तन्दादियुरै, ज्ञानसारव्याख्यानम्, प्रमेयसारख्यानम्, ए*पाट्टुव्याख्यानम्, गीतैक्कुत्तात्पर्यदीपम्, तत्वत्रयत्तिकुं प्रमाणत्तिरट्टु, उपदेशरत्नमालै, तिरुवाय्मोलिनूत्तन्दादि, यतिराजविंशति, तनिक्कविहलुम् विडुदिश्लोकङ्गलुम्, इयल्वात्तु, आर्तिप्रबन्धम् । इन्नुमिप्पडिकण्डुकोल्वदु ।" इति ।

एवमन्यत्रापि ग्रन्थस्यास्य नामोत्कीर्तनं बहुलं द्रष्टव्यम् । एवं च व्याख्यानस्यास्य श्रीवरवरमुनिप्रणीतत्वे न कोपि संशयस्यावकाशलेशोपीति सिद्धम् ।

ग्रन्थस्यास्य तालपत्रलिखितमेकमेव । प्राचीनतममान्ध्राक्षरमयं पुस्तकमवलम्ब्य शोधनमकारि । मूलपुस्तकस्य प्रायश्शुद्धत्वादस्मदनवधानादिप्रयुक्तान् दोषान्विनान्येषां दोषाणां विशेषतस्सम्भावनानास्ति । येच सम्भाव्यन्ते तेषां व विषये पाठकमहाभागानां गुणग्राहितैव शरणम् ।

इति ।

प्रतिवादिभयङ्करानन्ताचार्यः
सम्पादकः

## द्वितीय संस्करण की

# हिन्दी भूमिका

★

**करकमलनिर्दशितात्ममुद्रः परिकलितोन्नतर्बाहिबर्हचूडः ।**
**इतरकरगृहीतवेत्रतोत्रो मम हृदि सन्निधिमातनोतु शौरिः ॥**

**कृष्णं कमलपत्राक्षं पुण्यश्रवणकीर्तनम् ।**
**वासुदेवं जगद्योनिं नौमि नारायणं हरिम् ॥**

"श्रीमद्भगवद्गीता" शास्त्र की अमित महिमा है। इसके नाम से ही स्पष्ट है कि यह भगवान के श्रीमुख से गाई गयी वाणी है। इसे सम्पूर्ण उपनिषदों का सारस्वरूप तथा पञ्चमवेद रूप बताया गया है। यह अमृत के समान मानव जीवन को अमरता प्रदान करती है।

प्रस्थानत्रयी में यह श्रीमद्भगवद्गीता अन्यतम है। जिन महानुभावों ने "गीता" "उपनिषद्" और "ब्रह्मसूत्र" पर भाष्य लिखा वे विश्वविश्रुत आचार्य कहलाये। चतुः सम्प्रदायाचार्यों ने अपने अपने सिद्धान्त के अनुसार गीता पर भाष्य का प्रणयन किया है।

इसमें सात सौ श्लोक हैं। श्रीकृष्ण भगवान के श्रीमुख से निकली वाणी को श्रीव्यास महर्षि ने श्लोकबद्ध किया। यह महाभारत के अन्तर्गत है। इसमें संजय धृतराष्ट्र, श्रीकृष्ण अर्जुन के प्रश्नोत्तर रूप से प्रायः छः सौ श्लोकों में सर्व्वेश्वर भगवान के रूप गुण, विभूति और लीलाओं, ईश्वर, जीव, अचेतन जड़प्रकृति का स्वरूप, गुण तथा जीव के संसार बन्धन का कारण, संसार से उसका विमोचनरूप परमपुरुषार्थ एवं मुक्ति उसका उपाय इन विशिष्ट तत्वों का उपदेश हुआ है। स्वयं नारायण ने ही श्रीकृष्ण के रूप में अवतीर्ण होकर इस परमगुह्य तत्व का उपदेश दिया।

क्षत्रियधर्म-रणाङ्गण में शत्रु से धर्म युद्ध करना, इस स्वधर्म में जब





अर्जुन को स्वजनों के प्रति स्नेह और दया के कारण "मैं युद्ध नहीं करूँगा" यह अधर्म बुद्धि उत्पन्न हुई, उसकी व्याकुलता देखकर परमकारुणिक भगवान श्रीकृष्ण ने वात्सल्य के वशीभूत होकर प्रपन्न अर्जुन का सारथी बनना स्वीकार किया और उसका मोह दूर करने के लिये वेदान्तवेद्य परम-तत्व और हित के उपदेश को दिया जो समस्त मुमुक्षुओं के लिये परमोपादेय है। यही गीता शास्त्र है।

इसमें अधिकारी भेद से मुमुक्षु चेतनों को कर्म, ज्ञान, भक्ति योगों का सम्यक् विवेचन करके उपदेश दिया है। गीता को तीन षट्कों में विभाजित किया गया है। मुमुक्षुओंके वर्णाश्रमानुकूल धर्म, भगवत्शेषत्वरूप ज्ञान, वैराग्य से साध्य (प्राप्य) भक्ति के द्वारा ही प्राप्त होने वाले परंब्रह्म नारायण गीता-शास्त्र में वर्णित है।

गीता में साधनभक्ति तथा साध्यभक्ति का वर्णन है। साधन भक्ति निष्ठ ध्रुवप्रह्लाद आदि तथा साध्यभक्ति निष्ठ परांकुश परकाल आदि दिव्य सूरिगण हैं। प्रथम पक्ष में भक्ति में उपायत्व बुद्धि तथा द्वितीय पक्ष में उपायत्वबुद्धि केवल भगवान् ही में होती है। भक्ति का अर्थ भाव पूर्वक भगवत् सेवा है। साधनभक्तिका स्नेहपूर्वक भगवत् सेवन ही लक्षण है। साध्य भक्ति भगवान में प्रेमातिशय रूप लक्षणा है। इसकी भगवान ने भूरिशः प्रशंसा की है। भगवान को ही प्राप्य और प्रापक मान कर उन पर पूर्ण रूपेण निर्भर रहने वाले प्रपन्न भक्तों के योग-क्षेम का स्वयं भगवान् ही निर्वाह करते हैं। ऐसे अनन्य शरणागतों के एकमात्र भगवान् ही शरण होते हैं।

जीवात्मा, प्रकृति और परमात्मा इस तत्वत्रय का प्रतिपादन गीता में हुआ है। संसार में ऐश्वर्य चाहने वालों की संख्या अधिक है। अवैध उपायों से वह मिले तो भी वे पराङ्मुख नहीं होते। अवैध आचरण अधो-गति का कारण होता है। विहित उपायों से भी वह अभिलाषा पूर्ण हो सकती है। इस अभिप्राय से गीता में प्रथम निषिद्ध कर्म त्याग एवं वर्णा-श्रमानुकूल विहित कर्म का अवलम्बन उपदिष्ट है।

इससे कुछ ऊँचे अधिकारी स्वर्गादिफल की कामना से इन्द्रादि देवो-पासना करते हैं। यह उपासना अन्त में अन्तर्यामी परमात्मा की ही उपा-सना है किन्तु अविधि पूर्वक। ऐश्वर्य कामियों का संसार बन्धन नष्ट नहीं होता है।

मुक्ति के दो प्रकार हैं—आत्मदर्शन और आत्मानुभव एवं तदनन्तर भगवद्दर्शन और भगवदनुभव, ऐसे व्यक्ति अत्यल्प हैं। उनमें से भी भगवत्-प्राप्ति की कामना वाले तो अतिविरल ही हैं। इन सब रहस्यों का उद्घाटन गीता करती है।

गीता में प्रथम जड़प्रकृति-देह एवं चेतन-आत्मा परस्पर भिन्न वस्तु हैं। देह क्षणभंगुर है, परिवर्तनशील है। आत्मा-नित्य, अव्यय, अव्यक्त, अचिन्त्य, अच्छेद्य, अदाह्य एवं सर्वगत प्रभृति गुण विशिष्ट है। यह नित्य निर्लिप्त आत्मा प्रकृति में कर्म नहीं करती किन्तु पूर्व-पूर्व जन्मों के कर्मानुसार प्राप्त अपने-अपने स्वभाव या प्रकृति ही उन कर्मों में कर्तृत्व, ममता एवं उनकी फलासक्ति को पैदा करते हैं।

कर्म में फलाभिसंधि एवं कर्तृत्वाभिमानका त्याग कर ममता रहित निष्काम कर्म रूप कर्मयोग के द्वारा संसार बन्धन निवृत्त होता है।

यह कर्मयोग परिपक्व दशा में चित्तशुद्धि कराके साधक को ज्ञानयोग का अधिकारी वनाता है एवं भक्तियोग के अधिकारी बनाने में सहायक सिद्ध होता है। ईश्वर में मन को निविष्ट करके कर्मयोग का अनुष्ठान भगवत्कृपा से सुकर और शीघ्र फलप्रद होता है।

ज्ञानयोग की सिद्ध अवस्था में आत्मदर्शन लाभ होने पर वह आत्मद्रष्टा पुरुष संसार निवृत्ति रूप मुक्ति को प्राप्त करता है एवं आत्मानुभव जनित महान् आनन्द में निमग्न हो जाता है। आत्मयाथात्म्यज्ञानवान् पुरुष भक्तियोग में प्रवृत्त होता है।

कर्मयोग और ज्ञानयोग की अपेक्षा भक्तियोग श्रेष्ठ है। प्रारम्भ से ही स्वतन्त्र रूप से भक्तियोग के अधिकारी बहुत से पुरुष हैं। ऐसे पुरुष भगवान् की कृपा से क्रमशः भक्ति की उच्चतम अवस्था पराभक्ति प्राप्त करते हैं। इस अवस्था में प्रीति के साथ भगवान के स्वरूप रूप गुण लीला एवं विभूतियों के विषय में निरन्तर अनुचिन्तन के फलस्वरूप समस्त अतीन्द्रिय विषयों का साक्षात्कार कर याथात्म्यविषयक परमज्ञान लाभ करते हैं। इस दशा में भक्त भक्तियुक्त हो ऐकान्तिक एवं आत्यन्तिक प्रेम के साथ अपने प्राण मन बुद्धि एवं क्रिया आदि को भगवान् को ही समर्पित कर देते हैं। इस दशा में कर्म ज्ञान भक्ति योगों में उपाय बुद्धि रहित हो भगवत्कृपा या प्रसन्नता ही उसको पाने का प्रकृष्ट उपाय है, उसे उपलब्ध करता है। ऐसा ज्ञानी महासौभाग्यशाली सुदुर्लभ पुरुष भगवान की शरणागति





करता है और भगवान् की सेवा बुद्धि से कर्म, ज्ञान, भक्ति योगों का अनुष्ठान करता रहता है।

भगवान् भी ऐसे शरणागत प्राणी के समस्त विघ्नों को दूर करके उसे मुक्ति अर्थात् अपने चरणों की सेवा ही प्रदान करते हैं। शरणागति विषयक उपदेश ही भगवान का सर्वापेक्षा गुह्यतम उपदेश है। यही चरमोदेश है। यही गीताशास्त्र का रहस्य है।

श्रीमद्भगवद्गीता की सहस्रों टीकाएँ विश्व की प्रायः समस्त भाषाओं में उपलब्ध हैं। उनमें आचार्यों की टीकाएँ ही उपादेय हैं। प्रस्तुत संस्करण में श्रीवरवर मुनि कृत "गीतार्थसंग्रहदीपिका" नामक व्याख्या का सहारा लेकर विशिष्टाद्वैत सम्मत हिन्दी अनुवाद किया गया है।

श्रीमद्भगवद्गीता पर श्रीवरवर मुनि स्वामी ने "गीतार्थसंग्रह दीपिका" नामक प्रस्तुत व्याख्यान लिखा। यह अत्यन्त सरल है। श्लोक के च, वा, ह, एव तक का सारांश स्पष्ट किया है। यह अत्यन्त सुबोध टीका है। इसे आज से लगभग ८० वर्ष पूर्व काञ्ची प्रतिवादि भयङ्कर मठाधीश श्रीमज्जगद्गुरु गादी स्वामी श्री १००८ श्रीअनन्ताचार्य जी महाराज ने स्वयं अपने सम्पादकत्व में तथा स्वयं संस्कृत में विस्तृत भूमिका लिखकर अपने श्रीसुदर्शन प्रेस काञ्चीपुरम् से प्रकाशित किया था। इस ग्रन्थ की कतिपय प्रतियाँ ही यत्र-तत्र उपलब्ध थीं। इसमें पेपर भी बहुत मामूली प्राचीन ढङ्ग का लगाया गया था जो पृष्ठ बदलने मात्र से फटने की आशंका पैदा करता था।

इस ग्रन्थ के पुनरुद्धार की मूल प्रेरणा श्रीमान् उद्धव रामानुजदास जी महाराज तथा श्रीजनार्दनाचार्य पुजारी स्वामी लक्ष्मणझूला के हृदय में जागरूक हुई। इन महानुभावों ने मुझ को इस महान् कार्य के सम्पादित करने की ओर प्रेरणा दी। श्रीउद्धव स्वामी जी ने अपने पास से इन मूल ग्रन्थ की दो प्रतियाँ भी मुझे दीं और प्रोत्साहन भी दिया। मैंने इन महात्माओं के मङ्गलाशासन को श्रीवरवर मुनि का प्रसाद समझकर शिरोधार्य किया और आचार्य चरणों का अवलम्ब लेकर इस जटिल कार्य के सम्पादन में लग गया।

इस ग्रन्थ के पुनरुद्धार की एक अपील "अनन्त-सन्देश" में प्रकाशित की, जिसका परिणाम यह हुआ कि सर्व सथम श्रीवेङ्कटेश देवस्थान, फणस-

वाड़ी, बम्बई तथा श्रीकाञ्ची प्रतिवादि भयंकर मठाधीश श्रीमज्जगद्गुरु श्रीकृष्णमाचार्य स्वामी जी महाराज तथा पूज्य श्रीमान् बाल ह स्वामी जी महाराज का शुभाशंसन मिला। इनके बाद प्रकाशन के लिये आर्थिक सहायता में सर्वप्रथम श्रीकोसलेश पीठाधीश यतीन्द्र स्वामी श्रीमज्जगद्गुरु श्रीरामनारायणाचार्य जी महाराज, अयोध्या, गीताशास्त्र के मर्मज्ञ विद्वान् सन्त पूज्य श्रीरामसुखदास जी महाराज का शुभाशीर्वाद मिला। परम-साध्वी श्रीसीताबाई तापड़िया और सोमानी परिवार की माताओं की ओर से पाँच सहस्र रुपये एक वार में ही प्राप्त हुये जिससे यह कार्य प्रारम्भ हो सका। इसी प्रकार श्री श्रीतोताद्रिमठ के स्वामी बालब्रह्मचारी श्रीकमला-कान्ताचार्य जी महाराज, श्रीस्वामी केशवाचार्य जी महाराज काशी तथा और भी कई महानुभावों का आशीर्वाद मिला। इसी का परिणाम है कि यह ग्रन्थ पुनरुद्धार पाकर इस रूप में आप के समक्ष उपस्थित हो सका। इन महानुभावों के प्रति कृतज्ञता ज्ञापन करना परम कर्तव्य हो जाता है।

यद्यपि मुझे संस्कृत भूमिका जो कि श्रीगादी स्वामी जी महाराज ने स्वयं अपने कर कमलों से लिखी—का भी अनुवाद करके छापना चाहिये था। मैंने उसे लिख भी लिया लेकिन भूमिकाके विस्तार भयसे उसे प्रकाशित नहीं किया गया है।

श्रीगादी स्वामीजी ने संस्कृत भूमिका में अनेक प्रमाणों और तर्कों से विमत का खण्डन कर इस टीका को श्रीवरवर मुनि प्रणीत ही सिद्ध किया है। इस टीका के विभिन्न नाम जैसे—'तात्पर्यदीप" तात्पर्य-दोपिका" तात्पर्यसंग्रह" भिन्न-भिन्न पुस्तकों में मिलते हैं वे सब इसी टीका को संकेतित करते हैं। मैसूर ( महीसारपुर ) निवासी श्रीवीरराघव गुरु प्रणीत त्रिंशत्प्रश्नोत्तर नामक ग्रन्थ से भी इस टीका की पुष्टि होती है।

इस प्रकार श्रीगादी स्वामी जी महाराज ने इस टीका का प्रकाशन कर महान् उपकार किया था। उसी का द्वितीय संस्करण श्रीरङ्ग-नाथ प्रेस, वृन्दावन ( उ० प्र० ) से हुआ है। इसमें जिन भागवतों ने सहयोग प्रदान किया है उनके हम आभारी हैं, उनकी यह सम्प्रदाय सेवा चिरस्थायी रहेगी। अन्य लोगों को भी इससे प्रेरणा मिलेगी कि ग्रन्थ प्रकाशन कराना सम्प्रदाय की विशिष्ट सेवा होती है।

इस प्रकाशन में जो त्रुटियाँ रह गयी हों उनका दोषी यह दास है।





हिन्दी अनुवाद में भी कहीं स्खालित्य रह गया हो तो सुधीजन सुधार कर लेंगे और उससे मुझे अवगत कराने की बात न भूलेंगे। मैं उनका आभारी रहूँगा।

इस प्रकाशन से श्रीवैष्णवों का कुछ भी परितोष हो सका तो यह दास अपना श्रम और यह प्रकाशन सफल समझा जायेगा। इस प्रकार आचार्यों की वस्तु आचार्य चरणों में अर्पित करते हुये, एक वार पुनः अपने समस्त शुभाशंसियों की सन्निधि में विनयावनत आभार निवेदन के साथ—

आपका अपना ही
केशवदेव शास्त्री

**श्रीकृष्ण जन्माष्टमी**
**संम्वत् २०४०**

## श्रीमद्भगवद्गीतापाठ के प्रारम्भ में अनुसन्धेय श्लोक

व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषम् ।
पराशरात्मजं वन्दे शुकतातं तपोनिधिम् ॥१॥
सम्यङ् न्यायकलापेन महता भारतेन च ।
उपबृंहितवेदाय नमो व्यासाय विष्णवे ॥२॥
सारथ्यमर्जुनस्याजौ कुर्वन् गीतामृतं ददौ ।
लोकत्रयोपकाराय तस्मै कृष्णात्मने नमः ॥३॥
प्रपन्नपारिजाताय तोत्रवेत्रैकपाणये ।
ज्ञानमुद्राय कृष्णाय गीतामृतदुहे नमः ॥४॥
करकमल निदर्शितात्ममुद्रः परिकलितोन्नत बर्हिबर्हचूडः ।
इतरकरगृहीतवेत्र तोत्रो मम हृदि सन्निधिमातनोतु शौरिः ॥५॥
अग्रे कृत्वा कमपि चरणं जानुनैकेन तिष्ठन्,
पश्चात् पार्थं प्रणयसजुषा चक्षुषा वीक्षमाणः ।
सव्ये तोत्रं करसरसिजे दक्षिणे ज्ञानमुद्राम्,
आबिभ्राणो रथमधिवसन् पातु नः सूतवेषः ॥६॥
कृष्णं कमलपत्राक्षं पुण्यश्रवणकीर्तनम् ।
वासुदेवं जगद्योनिं नौमि नारायणं हरिम् ॥७॥
कृष्णाय यादवेन्द्राय ज्ञानमुद्राय योगिने ।
नाथाय रुक्मिणीशाय नमो वेदान्तवेदिने ॥८॥

अन्ते गीता माहात्म्य श्लोकाः पठनीयाः।



श्रीरस्तु ।

श्रीहयग्रीवाय नमः ।

# शास्त्रमुक्तावली ।

※ श्रीमते रामानुजाय नमः ※

※ श्रीवरवरमुनये नमः ※

श्रीमद्यतिवरपुनरवतारभूत श्रीवरवरमुनि विरचिता—

## श्री–गीतार्थसंग्रह दीपिका।

★

**स जयति गोविन्दार्य[1] शशमदमकरुणादि सद्गुणैकनिधिः ।**
**यस्याहमत्र जन्मनि चरणौ संश्रित्य लब्धसत्ताकः ॥**
**सौम्योपयन्तृनामा सूरि जिज्ञासुबालबोधकरीम् ।**
**कुर्वे गीताविवृतिं श्रीमद्यतिराजदर्शितेन पथा ॥**

श्रियः पतिरखिलहेयप्रत्यनीककल्याणैकतानः, स्वेतरसमस्तवस्तुविलक्षणानन्तज्ञानानन्दैकस्वरूपः, स्वाभाविकानवधिकातिशयज्ञानशक्त्याद्यसंख्येयकल्याणगुणगणमहोदधिः, स्वाभिमतानुरूपैकरूपाचिन्त्य दिव्याद्भुतनिरतिशयसौन्दर्यसौकुमार्याद्यनन्तकल्याणगुणनिधिदिव्यरूपः, दिव्यास्त्रभूषणोज्वलः, नित्यसूरिभिरनवरतमभिष्टूयमानचरणयुगलः, परमव्योमनिलयः, सकलजगदुदयविभवलयलीलः, परंब्रह्म, पुरुषोत्तमो नारायणः ब्रह्मादिस्थावरान्तमखिलं जगत्सृष्ट्वा, स्वेनैव रूपेणावस्थितो ब्रह्मादिदेवमनुष्याणां ध्यानार्चनाद्यगोचरो भवेयमित्यापारकारुण्यादिगुणगणमहोदधितया स्वकीयमेवरूप मजहत्स्वभावंदेवमनुष्यादिसजातीयसंस्थानं कुर्वन्, तेषु तेषु लोकेष्ववतीर्यावतीर्य तैस्तैराराधित स्तत्तदिच्छानुरूपं धर्मार्थकाममोक्षाख्यं फलं प्रयच्छन्, भूभारावतरणव्याजेनास्मदादीनामपि समाश्रयणीयो बुभूषुः, "ततोखिलजगत्पद्मबोधायाच्युतभानुना । देवकी पूर्वसन्ध्याया

१—श्रीवरवर मुनेः जनकः गोविन्दशर्मा अस्यैव महानुभावस्य 'दीप्रशयान' 'श्रीजिह्वावघशीश' इति नाम द्वयम् ।





# श्री भगवद्गीता

धृतराष्ट्रउवाच—

**धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।**
**मामकाः पाण्डवाश्चैव किमकुर्वत संजय ॥ १ ॥**

माविर्भूतं महात्मना ।।" इत्युक्तरीत्या देवकीतनयतयोर्व्यामवतीर्य सकल मनुजनयनविषयतां गतः, कुरुपाण्डवानां युद्धे प्रारब्धे स्वाश्रितवात्सल्यादिवशतया पार्थं रथिनमात्मानंच सारथिं सर्वलोकसाक्षिकं कुर्वन्, भूभारावतरणोपयोगि पाण्डुतनययुद्धप्रोत्साहनव्याजेन परमपुरुषार्थलक्षणमोक्षसाधनतया वेदान्तोदितं स्वविषयज्ञानकर्मानुगृहीतं भक्तियोगमवतारयामास ।

इममर्थं जानन्नपि सर्वात्मनान्धो धृतराष्ट्रः सुयोधनविजय बुभुत्सया सञ्जयं पप्रच्छ (धर्मक्षेत्रइति) ।

इयं गीता सप्तशतश्लोकात्मिका, तत्र धृतराष्ट्रप्रश्नश्लोकान् सञ्जयप्रतिवचनश्लोकान् अर्जुनप्रश्नश्लोकान् दुर्योधनप्रश्नश्लोकांश्च विनाऽन्ये सर्वेपि साक्षाद्भगवन्मुखारविन्दनिर्गलिताः । तदुक्तं गीतामाहात्म्ये—
"गीता स्सुगीताः कर्तव्याः किमन्यैः शास्त्रविस्तरैः ।
याः स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृताः ।।" इत्यादि ।

धर्मक्षेत्रे—धर्मानुष्ठानोपयोगिविशिष्टभूभागे । कुरुर्नाम पाण्डव धार्तराष्ट्राणां कूटस्थो राजा, तस्य कुरुक्षेत्राख्ये देशे । युयुत्सवः—योद्धुमिच्छवस्सन्तः । समवेताः—संमिलिताः । मम इमे मामकाः—मदीया दुर्योधनादयः । पाण्डोरपत्यानि पुमांसः पाण्डवाः—युधिष्ठिरादयश्च । किंकार्यं । अकुर्वत—चक्रुः ॥ १ ॥

धृतराष्ट्र ने पूछा—

**हे संजय ! धर्मानुष्ठान योग्य विशिष्ट स्थल (धर्मक्षेत्र), कुरुक्षेत्र में युद्ध करने की अभिलाषा से एकत्रित हुए दुर्योधनादि मेरे पुत्रों और युधिष्ठरादि पाण्डु पुत्रों ने क्या किया ? ॥ १ ॥**

संजय उवाच—

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधन स्तदा ।
आचार्यमुपसङ्गम्य राजा वचनमब्रवीत् ॥ २ ॥
पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥
अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥

राजा दुर्योधनः । व्यूढं-पद्मशकटसूचीवराहादिव्यूह रचनया निवेशितम् । पाण्डवानीकम् - पाण्डवानां - युधिष्ठिरादीनां, अनीकम्-सैन्यम् । तुशब्दोत्र दुर्योधनसैन्यापेक्षया वैलक्षण्यं द्योतयति । दृष्ट्वा-विलोक्य । आचार्यम् - द्रोणाचार्यम् । उपसङ्गम्य - समीपं गत्वा । वचनम् - वाक्यं वक्ष्यमाणम् । उवाच - उक्तवान् ॥ २ ॥

तदेव वचनमाह "पश्यैतानि" त्यादिभिः श्लोकैः ।

हे आचार्य ? तव - जीवतः । शिष्येण - अन्तेवासिना । धीमता-धीः - बुद्धिः, अस्यास्तीति धीमान्, तेन - तथोक्तेन । द्रुपदपुत्रेण - द्रुपदस्य-पांचालस्य, पुत्रः - धृष्टद्युम्नः, तेन । व्यूढाम् । व्यूहाकारेण निवेशितां । महतीं - अधिकां, अतिशूरजनबाहुल्येनस्वसेनामप्यतिशयितवतीमित्यर्थः । एतां - पुरःस्थितां । पाडुपुत्राणां - पाण्डुतनयानां । चमूं - सेनां । पश्य-अवलोकय ॥ ३ ॥

तदेव माहात्म्यं दर्शयन्नाह (अत्रेति)

महेष्वासाः - इषवो - बाणाः, अस्यन्ते - लक्ष्यं प्रति प्रेष्यन्ते, एभि-रितीष्वासाः - धनूंषि, महान्तः इष्वासा येषान्ते तथोक्ताः - महाधन्विन

संजय ने कहा—

उस समय राजा दुर्योधन ने पद्म, शकट, शूची, वराह आदि व्यूहाकार रचना में स्थित पाण्डव सेना को देखकर द्रोणाचार्य के निकट जाकर इस प्रकार कहा ॥ २ ॥

हे आचार्यवर्य ! आपके बुद्धिमान् शिष्य द्रुपदपुत्र धृष्टद्युम्न द्वारा व्यूह रूप में रचित पाण्डवों की इस महान् सेना को भली-भाँति देखिये ॥ ३ ॥

इस सैन्यदल में भीम और अर्जुन के समान युद्ध कुशल, महान् धनुर्धर वीर-





धृष्टकेतु श्चेकितानः काशीराजश्च वीर्यवान् ।
पुरुजि त्कुन्तिभोजश्च शैब्यश्च नरपुङ्गवः ॥ ५ ॥
युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।
सौभद्रे द्रौपदेयाश्च सर्वएव महारथाः ॥ ६ ॥

इत्यर्थः । युधि - युद्धविषये । भीमार्जुनसमाः - भीमश्चार्जुनश्च भीमार्जुनौ, महायोधतया प्रसिद्धौ युधिष्ठिरानुजौ वायुवासवतनयौ, ताभ्यां, समाः - सदृशाः । शूराः - शौर्यगुणवन्तो राजानः । अत्र - पाण्डवसेनायां । सन्तीति शेषः ॥ तानेव तन्नामभिर्दर्शयति । युयुधानः - सात्यकिर्नाम श्रीकृष्णस्यानुजः । विराटश्च विराटो नाम पाण्डवानामज्ञातवासकाल परिपालनेनोपकृतवान् कश्चिद्राजा । महारथः - महान् - अत्युन्नतो रथो यस्य, स तथोक्तः । द्रुपदः । पांचालदेशाधिनाथश्च ॥ ४ ॥

धृष्टकेतुः—धृष्टकेतुर्नाम कश्चिद्राजा । चेकितानः । वीर्यमस्यास्तीति वीर्यवान्, विकारहेतौ सत्यविकृतचित्तत्वं वीर्यं । काश्या राजा - काशीराजः, सच । पुरुजित् । कुन्तिभोजः - तन्नामकः कश्चन राजा । नरपुङ्गवः - पुमांश्चासौगौश्च - पुंगवः - ऋषभः; गौणवृत्त्याश्रेष्ठवाची पुंगवशब्दः; नरेषु पुंगवः - श्रेष्ठः । शैब्यश्च - शिबेरपत्यं पुमान् - शैब्यः, सच ॥ ५ ॥

विक्रान्तः - पराक्रमवान् । युधामन्युः - कश्चनराजा । वीर्यवान्-धीरः । उत्तमौजाः - तन्नामा कश्चिद्राजा । सुभद्राया अपत्यं पुमान् सौभद्रः - अभिमन्युः । द्रौपदेयाः - द्रुपदस्यापत्यं स्त्री द्रौपदी, द्रौपद्या अपत्यानि पुमांसो द्रौपदेयाः - द्रौपद्यां युधिष्ठिरादिभ्यः पंचभ्यो जाताः प्रतिविन्ध्यादयः पंच । अत्र सन्तीति पूर्वेणयोजनीयम् । तान्विशिनष्टि (सर्वइति) सर्वे - सात्यकिप्रमुखाः । महारथा एव । एतेष्वमहारथः कश्चिदपि नास्तीत्यर्थः । अत्र - "एकादशसहस्राणि योधयेद्यस्तु धन्विनाम् । शस्त्रशास्त्रप्रवीणश्च स महारथ उच्यते ॥ अमितान्योधयेद्यस्तु संप्रोक्तोतिरथस्तु सः । रथेनैकेन यो योद्धा स न्यूनोऽर्धरथोत्तमः ।" इति महारथातिरथार्धरथानां लक्षणानि द्रष्टव्यानि ॥ ६ ॥

राजगण यहाँ हैं । वे प्रधान कौन-कौन हैं ? बतलाते हैं—युयुधान, विराट्, पाञ्चालदेशाधिनाथ महारथी द्रुपद, धृष्टकेतु, चेकितान, वीर काशीराज, पुरुजित् कुन्तिभोज,

अस्माकन्तु विशिष्टा ये तान्निबोध द्विजोत्तम ।
नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ।। ७ ।।

भवान्भीष्मश्च कर्णश्च कृपश्च समितिंजयः ।
अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ।। ८ ।।

अन्येच बहव श्शूरा मदर्थे त्यक्तजीविताः ।
नानाशस्त्रप्रहरणा स्सर्वे युद्धविशारदाः ।। ९ ।।

---

एवं - पाण्डवसेनायां योधाग्रेसरानुक्त्वा स्वसेनायामपि योधाग्रेसरा न्ववतु प्रतिजानीते (अस्माकमिति) हे द्विजोत्तम ब्राह्मणेषु श्रेष्ठ। अस्माकम्-अस्मन्मध्ये तु। मम, सैन्यस्य सेनायाः। नायकाः - नेतारः, सेनापतय इत्यर्थः। ये, विशिष्टाः - विलक्षणाः शूराः। सन्ति। तान्। ते - तव। संज्ञार्थम् - सम्यक् ज्ञानाय। ब्रवीमि - वदामि। तान् - विशिष्टान्। निबोध बुद्धचस्व ।। ७ ।।

तानेवाह "भवानि" त्यादिश्लोकाभ्याम् ।

भवान् - द्रोणाचार्य इत्यर्थः। भीष्मश्च। कर्णश्च। समितौ युद्धे जयतीति समितिंजयः। कृपश्च - कृपाचार्य इत्यर्थः। अश्वत्थामा। विकर्णश्च। सोमदत्तस्यापत्यं पुमान् सौमदत्तिः ।। ८ ।।

किमस्मत्सेनायामेतावन्त एव शूरा इत्याशंक्याह (अन्ये चेति) अन्ये-पूर्वोक्तेभ्योऽन्येपि। बहवः - भूयांसः। शूराः - शल्यादयः। सन्तीति शेषः। ते कीदृशाइत्यत्राह (मदर्थइति) सर्वे - पूर्वोक्ता श्शल्यप्रभृतयः। मदर्थे-शत्रुजयरूपमत्प्रयोजने निमित्ते। त्यक्तजीविताः - त्यक्तानि - त्यक्तुमध्यवसितानि, जीवितानि, यै स्ते - तथोक्ताः। नानाशस्त्रप्रहरणाः - शस्त्रा-

---

नरश्रेष्ठ शैब्य, पराक्रमी युधामन्यु, वीर उत्तमौजा, सुभद्रा तनय अभिमन्यु, द्रौपदी के के पाँचों पुत्र सभी तो हैं और ये सब महान् योद्धा हैं ।। ४-५-६ ।।

हे द्विजों में श्रेष्ठ ! हमारे पक्ष में भी हमारी सेना के बीच में जो-जो प्रधान सेनानायक हैं उनसे भी अच्छी प्रकार से जानकारी कराइये। आपको अच्छी प्रकार उनकी जानकारी हो जाय, इसलिए उनके नाम बतलाता हूँ। आप, भीष्म, कर्ण, युद्धजयी कृपाचार्य, अश्वत्थामा, विकर्ण, सोमदत्त पुत्र भूरिश्रवा तथा हमारे लिए





अपर्याप्तन्तदस्माकं बलं भीष्माभिरक्षितम् ।
पर्याप्तन्त्विदमतेषां बलं भीमाभिरक्षितम् ।।१०।।

अयनेषु च सर्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु भवन्त स्सर्वं एव हि ।।११।।

---

ण्याग्नेयादीनि, प्रहरणानि - खड्गादीनि, नानाविधानि शस्त्रप्रहरणानि येषां ते तथोक्ताः। युद्धे, विशारदाः - समर्था - युद्धविशारदाः ।। ९ ।।

अस्त्वेवं परकीयस्वकीयसेनयो स्स्थितिः, ततः किमित्यत्राह (अपर्याप्तमिति)।

तत् - तस्मात् - शूरपुरुषसंख्या न्यूनाधिक्यादिहेतो रित्यर्थः। अस्माकम्। बलं - सैन्यम्। भीष्माभिरक्षितं - भीष्मेणाभितोरक्ष्यमाणं सत्। अपर्याप्तम् - परबलविजयाय नालम्। भीष्मस्य पाण्डुतनयसंरक्षणप्रवणत्वेन प्रतिपन्नत्वादिति भावः। इदम्। एतेषां - पाण्डवानां। बलन्तु। भीमाभिरक्षितं - भीमेन - भीमसेनेन, अभिरक्षितंसत्। पर्याप्तं - अस्मद्बलविजयायालम्। भीमस्य समस्तधार्तराष्ट्रवधदीक्षितत्वात्तदुचितबलसाहससहायादियुक्तत्वाच्चेति भावः ।। १० ।।

तस्माद्भवद्भिरेवं वर्तितव्यमित्याह (अयनेष्विति)।

सर्वएव - सर्वेपि। भवन्तः - यूयम्। सर्वेषुच - समस्तेष्वपि। अयनेषु - व्यूहप्रवेशमार्गेषु। यथाभागं - भागाः - विभक्तस्वस्वयुद्धभूमयः, ताननतिक्रम्य। अवस्थिताः - वर्तमाना स्सन्तः। भीष्ममेव - सैन्याभिरक्षकं गांगेयमेव। अभिरक्षन्तु - यथान्यै र्युध्यमानः पृष्ठतः कैश्चिन्न हन्येत तथा रक्षन्तु। भीष्मबलेनैवास्माकं जीवनमिति भावः ।। ११ ।।

---

अपने जीवन को भी त्यागने में प्रस्तुत और अनेक शस्त्रधारी वीर पुरुष हैं, वे सभी युद्ध करने में अत्यन्त निपुण हैं ।। ७-८-९ ।।

इसलिये दोनों ही पक्षों के वीरों की तुलना करके देखिये, पितामह भीष्माचार्य द्वारा सुरक्षित हमारी सेना पर्याप्त नहीं है, अर्थात् पाण्डवों के जीतने में समर्थ नहीं है, किन्तु भीम द्वारा रक्षित पाण्डवों का यह सैन्यबल हमारे परास्त करने के लिए यथेष्ट पर्याप्त है।

अतएव आप लोग सब अपने-अपने व्यूह के द्वार पर दृढ़ता से रहकर सेनापति भीष्म की सब प्रकार से रक्षा करो ।। १०-११ ।।

तस्य संजयन् हर्षं कुरुवृद्धः पितामहः ।
सिंहनादं विनद्योच्चैः शंखं दध्मौ प्रतापवान् ॥१२॥
ततः शंखाश्च भेर्यश्च पणवानक गोमुखाः ।
सहसैवाभ्यहन्यन्त सशब्द स्तुमुलो भवत् ॥१३॥
ततः श्वेतै र्हयै र्युक्ते महति स्यन्दने स्थितौ ।
माधवः पाण्डवश्चैव दिव्यौ शंखौ प्रदध्मतुः ॥१४॥

---

एवं पाण्डवबलस्य पर्याप्ततां स्वबलस्यापर्याप्ततांच प्रतीयमानामाचार्याय निवेद्य विषण्णचित्तस्य दुर्योधनस्य स्वविषये बहुमानयुक्तं वाक्यं श्रुत्वा भीष्मः किंकृतवानित्यत्राह (तस्येति) ।

प्रतापो स्यास्तीति प्रतापवान् - प्रशस्तपराक्रमः । कुरुषु, वयसा ज्ञानेन पौरुषेणच वृद्धः - अधिकः, कुरुवृद्धः । पितामहः भीष्मः, तस्य-विषण्णस्य दुर्योधनस्य । हर्षं - सन्तोषं । सञ्जनयन् - सम्यग्जनयितुम् । उच्चैः - अधिकं । सिंहनादं - सिंहध्वनिम् । विनद्य कृत्वा । यद्वा - सिंह-नादं विनद्य - सिंहइव विनद्येत्यर्थः । शंखम् । दध्मौ - पूरयामास ॥ १२ ॥

तदेवं सेनापते र्भीष्मस्य युद्धोत्साहमालक्ष्य - तदाज्ञया सैनिकानामपि युद्धोत्साहः प्रवृत्त इत्याह (ततइति) ।

ततः - भीष्मशंखध्मानानन्तरं । शंखाश्च, भेर्यश्च, पणवाः आनकाः गोमुखाश्च वाद्यविशेषाः । सहसा - तत्क्षणमेव । अभ्यहन्यन्त वादिताः । सैनिकैरिति शेषः । सः - शंखादिजन्यः । शब्दः - ध्वनिः । तुमुलः-संकुलः । अभवत् - बभूव ॥ १३ ॥

ततः पाण्डवसैन्ये - प्रवृत्तं युद्धोत्साहमाह "तत" इत्यादिभिः पंचभिः श्लोकैः ।

ततः - कुरुसैन्ये वाद्यवादनानन्तरं । मायाः - लक्ष्म्याः, धवः - पतिः,

---

पाण्डव सेना की उत्कर्षता एवं अपनी सेना की अपकर्षता विवेचना करके दुःखी चित्त दुर्योधत के मनमें उत्साह और सन्तोष पैदा करने के लिए कौरवों की सेना में सब प्रकार से श्रेष्ठ भीष्मपितामह ने उच्चस्वर से सिंहनाद करते हुए शंख बजाया, तब कौरवपक्षीय समस्त सैना के बीच शंख, तुरही, भेरी आदि बहुत से रणवाद्य बज उठे और वह सम्पूर्ण शब्द मिलकर विशाल हो उठा ॥ १२-१३॥

(इसके बाद पाण्डवों के युद्धोत्साह का वर्णन करते हैं)

कौरवों की सेना में होने वाली युद्ध-वाद्यों की ध्वनि को सुनकर भगवान्





पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः ।
पौण्ड्रं दध्मौ महाशंखं भीमकर्मा वृकोदरः ॥१५॥
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च सुघोष मणिपुष्पकौ ॥१६॥
काश्यश्च परमेष्वासः शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥१७॥

---

माधवः - सारथीभूतश्श्रीकृष्णः । पाण्डो रपत्यं पुमान् पाण्डवः - रथिकोऽर्जुनः । श्वेतैः - धवलैः । हयैः - अश्वैः युक्ते - योजिते । महति - उत्कृष्टे । स्यन्दने - रथे । स्थितौ । दिव्यौ - अप्राकृतौ । शंखौ । प्रदध्मतुः - पूरयामासतुः ॥ १४ ॥

ततः केशवार्जुनादीनां शंखपूरणं विभज्य दर्शयति (पांचजन्यमिति) ।

हृषीकाणां - इन्द्रियाणां, ईशः - नियन्ता, हृषीकेशः - श्रीकृष्णः । पांचजन्यम् - पांचजन्याख्यम् । महाशंखम् । दध्मौ । धनंजयः - अर्जुनः । देवदत्तम् - देवदत्तनामकं शंखम् । दध्मौ । भीमानि - शत्रुभयंकराणि, कर्माणि - व्यापाराः, यस्य सः भीमकर्मा । वृकोदरः - भीमसेनः । पौण्ड्रम्-पौण्ड्रनामकं महाशंखं । दध्मौ ॥ १५ ॥

कुन्तीपुत्रः । राजा । युधिष्ठिरः - धर्मराजः । अनन्तविजयं तन्नामकं शंखं । दध्मौ । नकुलस्सहदेवश्च - माद्रीतनयौ । यथाक्रमं । सुघोषश्च मणिपुष्पकश्च सुघोषमणिपुष्पकौ - तन्नामकौ महाशंखौ । दध्मतुः ॥ १६ ॥

परमेष्वासः - परमः - उत्कृष्टः, इष्वासः - धनुः, यस्य स तथोक्तः । काश्यः - काशीराजश्च । महारथः । शिखण्डीच - शिखण्डीनाम कश्चित् । धृष्टद्युम्नः । विराटश्च । अपराजितः - युद्धे अपराभूतः । सात्यकिश्च ।

---

श्रीकृष्ण एवं अर्जुन सफेद अश्वों से युक्त श्रेष्ठ रथ पर विराजमान होकर अपने-अपने दिव्य शंखों को बजाने लगे । श्रीकृष्ण ने पांचजन्य, अर्जुन ने देवदत्त, भयङ्कर भीमसेन ने पौण्ड्र नामक शंखों को बजाया ॥ १४-१५॥

कुन्तीपुत्र राजा युधिष्ठिर ने अनन्त विजय, माद्री के दोनों पुत्र नकुल सहदेव ने क्रमशः सुघोष एवं मणिपुष्पक नामक शंख बजाये । हे पृथ्वीपते धृतराष्ट्र ! इसके अतिरिक्त महाराज काशी नरेश, महारथी शिखण्डी, धृष्टद्युम्न, विराट्राज, अपरा-

द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।
सौभद्रश्च महाबाहुः शंखान्दध्मुः पृथक्पृथक् ॥१८॥
सघोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥१९॥
अथ व्यवस्थितान्दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः ।
प्रवृत्ते शास्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥२०॥
हृषीकेशं तदावाक्य मिदमाह महीपते ।

---

द्रुपदः । द्रौपदेयाः - प्रतिविन्ध्यादयश्च । महान्तौ बाहू यस्य स महाबाहुः- बलवान् । सौभद्रः - अभिमन्युश्च । सर्वशः - सर्वेपि । हे पृथिवीपते ? हे धृतराष्ट्र ! पृथक् पृथक् प्रत्येकम्प्रत्येकम् । शंखान् । दध्मुः-पूरयामासुः॥१७-१८

सः - पाण्डवसैनिक शंखध्मानादिजनितः । घोषः - ध्वनिः । तुमुलः- संकुलः । नभः - आकाशंच । पृथिवीं - भूमिंश्च । अनुनादयन्नपि - प्रति- ध्वनिमत्यौ कुर्वन्नपि सन् । धार्तराष्ट्राणां - धृतराष्ट्रस्यापत्यानि पुमांसो- धार्तराष्ट्राः, तेषां - दुर्योधनादीनां त्वत्पुत्राणामेव । हृदयानि - मनांसि । व्यदारयत् - विभेद । अद्यैव नष्टं कुरुबलमिति यथा मन्येरं स्तथा करो- दित्यर्थः ॥ १९ ॥

एतस्मिन् समये श्रीकृष्णं प्रत्यर्जुनस्य विज्ञापनमाह "अथेत्यादिभिः चतुर्भिश्लोकैः ।

अथ - सेनयोर्युद्धोत्साहानन्तरम् । हेमहीपते ? —धृतराष्ट्र ? कपिः - लंकादाहनो हनुमान्, ध्वजः - केतनम्, यस्य स - कपिध्वजः-पाण्डवो र्जुनः । शस्त्राणि सम्पतन्त्यस्मिन्निति शस्त्रसम्पातः - युद्धम्, तस्मिन् । प्रवृत्तेसति । व्यवस्थितान् - युद्धसन्नाहेनस्थितान् । धार्तराष्ट्रान् । दृष्ट्वा- निरीक्ष्य । धनुः - गाण्डीवम् । उद्यम्य - उद्धृत्य । तदा - तस्मिन्काले ।

---

जेयसात्यकि, पाञ्चालराज द्रुपद, द्रौपदी के पांच पुत्र, सुभद्रापुत्र अभिमन्यु आदिक सभी ने अपने-अपने शंख बजाये । उस समय यह मिलकर शंखध्वनि अत्यन्त विशाल नाद के रूप में पृथ्वी एवं आकाश को प्रतिध्वनित करने लगी । वह भयङ्कर शब्द उस समय दुर्योधन आदिक धृतराष्ट्र पुत्रों के हृदय को विदीर्ण करने लगा, अर्थात् पराजय सूचक भीति उत्पन्न करने लगा ॥ १६-१७-१८-१९ ॥





अर्जुनउवाच —

सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥२१॥
यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ।
कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ॥२२॥
योत्स्यमानानवेक्षेऽहं य एतेत्र समागताः ।
धार्तराष्ट्रस्य दुर्बुद्धे युंद्धे प्रियचिकीर्षवः ॥२३॥

---

हृषीकेशम् - श्रीकृष्णंप्रति । इदम् - वक्ष्यमाणं वाक्यम् । आह—अब्र- वीत् ॥

तदेव वाक्यमाह - (सेनयोरिति) आश्रितान्न च्यावयतीत्यच्युतः, तस्य सम्बुद्धिः हे अच्युत ?—कृष्ण । उभयो स्सेनयोर्मध्ये - तन्निरीक्षणयोग्य- स्थाने । मे - मम । रथम् - स्यन्दनम् । स्थापय - निवेशय । कियत्पर्य- न्तमित्यत्राह (यावदिति) योद्धुं, कामः - इच्छा, येषांते - योद्धुं कामाः तान्योद्धुकामान् सन्तः । अवस्थितान् । पुरतो वर्तमानान् । एतान् - धार्त- राष्ट्रान् । यावत् - यावत्पर्यन्तम् । निरीक्षे - पश्यामि । तावत् स्थापयेति पूर्वेण सम्बन्धः ।

ननु - त्वं योद्धा नतु युद्धप्रेक्षक इत्यत्राह (कैरिति) अस्मिन् । रण- समुद्यमे - युद्धोद्योगे । मया । शूरैः कैः सह । योद्धव्यम् - युद्धं कर्तव्यम् । इति यावन्निरीक्ष इति पूर्वेणान्वयः ॥ २२ ॥

न केवलं धार्तराष्ट्रा एव द्रष्टव्याः, किन्तु तदर्थमागता अन्येपीत्याह (योत्स्यमानानिति) अहं । योत्स्यमानान् - अस्माभि स्सह युद्धं करिष्यमा- णान् । अवेक्षे । यएते - पुरतो दृश्यमाना भीष्मद्रोणादयः । युद्धे । दुर्बुद्धेः- दुष्टबुद्धेः । धार्तराष्ट्रस्य - दुर्योधनस्य । प्रियचिकीर्षवः - प्रियंकर्तु मिच्छ-

---

हे महाराज ! तदनन्तर धृतराष्ट्र पक्षीय सैनिकों को व्यवस्थित रीति से सुसज्जित शस्त्र संचालन में उद्यत देखकर कपिध्वज अर्जुन ने धनुष उठाकर श्रीकृष्ण से ये वचन कहे ॥२०॥

अर्जुन ने कहा—हे अच्युत ! युद्ध करने की कामना से स्थित इन सबको जब तक मैं देखूं तब तक तुम दोनों सेनाओं के बीच में मेरे रथ को खड़ा कर लो । इस युद्ध के उद्योग में मुझे किन-किन के साथ युद्ध करना होगा, यह मैं देख लूं ॥२० ॥ २१ ॥ २२ ॥

सञ्जय उवाच —

**एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।**
**सेनयो रुभयो र्मध्ये स्थापयित्वा रथोत्तमम् ॥२४॥**
**भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ।**
**उवाच पार्थ पश्यैतान् समवेतान्कुरूनिति ॥२५॥**
**तत्रापश्यत्स्थितान्पार्थः पितॄनथ पितामहान् ।**
**आचार्यान्मातुलान्भ्रातॄन् पुत्रान्पौत्रान्सखींस्तथा ॥२६॥**

---

न्तस्सन्तः । अत्र - इह रणभूमौ । समागताः—सम्यग्जीवितत्यागनिश्चय पूर्वकमागताः । तानिति पूर्वेणान्वयः ॥ २३ ॥

एवमर्जुनविज्ञापनानन्तरं भगवता कृष्णेन किं कृतमित्यत्राह (एवमिति) भरतस्य कुलापत्यं पुमान् - भारतः तस्य सम्बुद्धिः हेभारत ? धृतराष्ट्र । हृषीकेशः - कृष्णः । गुडाकेशेन - गुडाका - निद्रा, तस्या ईशेन-नियन्त्रा, जितनिद्रेणार्जुनेन । एवं - अनेनोक्तप्रकारेण । उक्तस्सन् । उभयोः - द्वयोः सेनयोर्मध्ये । भीष्मद्रोणप्रमुखतः - भीष्मद्रोणयोरग्रतः । सर्वेषां । महीक्षिताम् - महीपालानां । प्रमुखतः । भीष्मादिषु सर्वेषु पश्यत्स्वित्यर्थः । रथोत्तमं - रथश्रेष्ठम् । स्थापयित्वा - निवेश्य । पृथाया अपत्यं पुमान् पार्थः, तस्य सम्बुद्धिः । हेपार्थ ! हे अर्जुन । समवेतान्-युद्धेच्छया सम्मिलितान् । एतान् - दुर्योधनादीन् । पश्येत्युवाच ॥२४॥२५॥

ततः किं प्रवृत्तमित्यत्राह ( तत्रेति ) अथ - अनन्तरं । तत्र - सेनाद्वयमध्ये । पार्थः - अर्जुनः । उभयोरपि सेनयोःस्थितान् । पितॄन्पितृव्यान् ।

---

हे अच्युत ! इस युद्ध में धृतराष्ट्र पुत्र दुर्बुद्धि दुर्योधन के हित चाहने वाले महान् वीर भीष्म, द्रोण आदिक जो युद्ध करने के लिए यहाँ इकट्ठे हुए हैं, उन्हें देखूँगा ॥ २३ ॥

( अर्जुन ने इस प्रकार अनुरोध करने पर भगवान श्रीकृष्ण ने क्या किया ? धृतराष्ट्र के इस प्रकार पूछने पर संजय ने उत्तर दिया )।

संजय ने कहा—हे भरतवंश श्रेष्ठ धृतराष्ट्र ! निद्राविजयी अर्जुन के इस प्रकार अनुरोध करने पर हृषीकेश श्रीकृष्ण ने भीष्म, द्रोण एवं अन्य राजागणों के सम्मुख अपने श्रेष्ठ रथ को खड़ा करके अर्जुन से कहा, हे पार्थ ! तुम्हारे सामने खड़े दुर्योधनादि कौरव पक्षीय इन योद्धाओं को तुम देखो ॥ २४ ॥ २५ ॥





**श्वशुरान्सुहृदश्चैव सेनयो रुभयोरपि ।**
**तान् समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान् ॥२७॥**
**कृपया परयाविष्टो विषीदन्निदमब्रवीत् ।**

अर्जुनोवाच—

**दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ॥२८॥**
**सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।**
**वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥२९॥**

---

पितामहान् - भीष्मादीन् । आचार्यान् - द्रोणादीन् । मातुलान् - मातृसहोदरान् । भ्रातॄन् - सोदरान् । पौत्रान् । तथा, सखीन् - मित्राणि । श्वशुरान् । सुहृदः - कृतोपकारांश्च । अपश्यत् - ददर्श ॥२६॥

ततः किमर्जुनः कृतवानित्यत्राह ( तानिति ) सः । कुन्त्याअपत्यं पुमान् कौन्तेयः - अर्जुनः । अवस्थितान् - युद्धसन्नाहेन स्थितान् । तान्-पूर्वोक्तान् सर्वान् । बन्धून् । समीक्ष्य - सम्यग्दृष्ट्वा । परया - उत्कृष्टया । कृपया - परदुःखासहिष्णुत्वरूपया दयया । आविष्टः - व्याप्तः । विषीदन्-दुःखितस्सन् । इदं - वक्ष्यमाणं वाक्यम् । अब्रवीत् - उवाच ॥२७॥

किमब्रवीदित्यपेक्षायां "दृष्ट्वेम" मित्यारभ्याष्टादशभिः श्लोकैराह ।

हे कृष्ण ? युयुत्सुम् - योद्धुमिच्छुं सन्तम् । समुपस्थितम् - सम्यक्पुरतः स्थितम् । इमम् । स्वजनम् - बन्धुजनम् । दृष्ट्वा - विलोक्य । मम-मे । गात्राणि - करचरणाद्यवयवाः । सीदन्ति - कृशीभवन्ति । मुखं-वक्त्रंच । परिशुष्यति - परितो म्लायति । मे - मम - शरीरे । वेपथुः - कम्पश्च । जायते । रोमहर्षः - रोमांचश्च । जायते । हस्तात् - करात् ।

---

तदनन्तर अर्जुन ने दोनों पक्षों की सेनाओं के बीच में खड़े अपने चाचा, बाबा, पुत्र, पौत्र, मित्र, श्वसुर और सुहृदगणों को देखा । कुन्तीपुत्र अर्जुन ने अपने ही बन्धु-बान्धवों को युद्ध के लिए वहाँ खड़ा देख नितान्त करुणामग्न होकर विषाद पूर्वक यह वचन कहे ॥ २६ ॥ २७ ॥

अर्जुन बोले—हे कृष्ण ! युद्ध के लिए आये हुए और मेरे सम्मुख स्थित इन सब आत्मीय स्वजनों को देखकर मेरा शरीर अवसन्न हो रहा है । मुख सूखा जा रहा है, शरीर में कम्प और रोमाञ्च हो रहा हैं, हाथ से गाण्डीव नीचे गिरा जा रहा है । शरीर में जलन हो रहा है, शिर और मन चक्कर खा रहा है, मैं स्थिरता

गाण्डीवं स्रंसते हस्तात् त्वक्चैव परिदह्यते ।
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥३०॥
निमित्तानि च पश्यामि विपरीतानि केशव ।
नच श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥३१॥
न कांक्षे विजयं कृष्ण न च राज्यं सुखानि च ।
किं नो राज्येन गोविन्द किं भोगै र्जीवितेन वा ॥३२॥
येषामर्थे कांक्षितं नो राज्यं भोगाः सुखानि च ।
त इमेऽवस्थिता युद्धे प्राणां स्त्यक्त्वा धनानि च ॥३३॥

---

गाण्डीवम् - तन्नामकं धनुः । स्रंसते - भ्रश्यति । त्वक् - चर्मच । परिदह्यते - परितस्तप्यते । किंच, अवस्थातुं - स्थितिदशया वर्तितुम् । नशक्नोमि - शक्तो नभवामि । मे - मम । मनश्च । भ्रमतीव - विघूर्णतीव । विपरीतानि - अरिष्टसूचकानि । निमित्तानि - शकुनानिच । विलोकयामि । किंच । आहवेयुद्धे । स्वजनं - बन्धुजनम् । हत्वा - निहत्य । साध्यम्, श्रेयः - फलम् । नानुपश्यामि । २६॥२७॥२८॥२९॥३०॥३१॥

ननु विजयादिरूपं फलं दृश्यत एवेत्यत्राह ( नकांक्षइति ) ।

हे कृष्ण ? विजयम् शुत्रजयम् । नकांक्षे-नेच्छामि । राज्यंच नकांक्षे । सुखानिच नकांक्षे । एतदेव प्रपंचयति "किन्नो राज्येने" त्यादिसार्धश्लोकद्वयेन । गाः विन्दतीति गोविन्द इति व्युत्पत्त्या, इन्द्रापादिताश्मवृष्टिविपत्तिसमये गोवर्धनोद्धारणापदानेनोपकृताभि र्गोभिः गोविन्द इति कृताभिषेकः उच्यते, तस्य सम्बुद्धिः गोविन्द ? नः अस्माकम् । राज्येन किंकार्यम् । भोगैः - स्रग्भूषणादिभिः । किंकार्यम् । जीवितेन वा किंकार्यम् । राज्यादिकं सर्वं व्यर्थमिति भावः ॥ ३२ ॥

---

से खड़ा नहीं रह पा रहा हूँ । चारों ओर अमङ्गल सूचक लक्षण दिखाई दे रहे हैं । हे केशव ! इस युद्ध में आत्मीय स्वजनों का विनाश करके मैं कल्याण किसी भी प्रकार से नहीं देख रहा हूँ ॥ २८-३१ ॥

आत्मीय स्वजनों को सुख पहुँचाना ही तो युद्ध में विजय का प्रयोजन है । वे सभी युद्ध में अपने जीवन को उत्सर्ग करने के लिए प्रस्तुत होकर हमारे सामने खड़े हैं । हे मधुसूदन ! यदि इनके द्वारा हम युद्ध में पराजित हुए, अथवा मारे भी गये,





आचार्याः पितरः पुत्रा स्तथैवच पितामहाः ।
मातुलाः श्वशुराः पौत्राः श्यालाः सम्बन्धिन स्तथा ॥३४॥
एतान्न हन्तुमिच्छामि घ्नतोपि मधुसूदन ।
अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ॥३५॥
निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ।
पापमेवाश्रये दस्मान् हत्वैतानाततायिनः ॥३६॥

---

वैयर्थ्य मेवोपपादयति (येषामिति) येषाम् - आचार्यादीनाम् । अर्थे- सुखरूपे प्रयोजने निमित्ते । नः - अस्माकम् । राज्यम् । कांक्षितम् - अपेक्षितम् । भोगाः - भुज्यन्त इति भोगाः, भोग्यवस्तूनि । नः । कांक्षिताः । सुखानिच कांक्षितानि । तइमे । आचार्याः, पितरः, पुत्राः, तथा पितामहाः, मातुलाः, श्वशुराः, पौत्राः, स्यालाः - जाया सहोदराः, तथा सम्बन्धिनश्च । प्राणान् धनानिच त्यक्त्वा - प्राणधनानां त्यागमंगीकृत्य । युद्धे - निमित्ते । अवस्थिताः - सन्नद्धाः ॥३३॥३४॥

ननु कृपया त्वमेतान्न हनिष्यसि चेदप्येतेतु राज्यलोभेन त्वां हनिष्यन्त्येव, अतस्त्वमेवैतान् हत्वा राज्यं भुंक्ष्वेत्याशंक्याह "एतानि" ति सार्धश्लोकेन । मधुं सूदयति - हिनस्तीति मधुसूदनः, तस्य सम्बुद्धिः हे मधुसूदन ? घ्नतः - अस्मान् हिंसतोपि । एतान् - धार्तराष्ट्रान् । त्रैलोक्यराज्यस्यापि - त्रयो लोका स्त्रैलोक्यं, राज्ञां भावः राज्यम्, त्रैलोक्यस्य राज्यंआधिपत्यं, तस्य - तथोक्तस्य, हेतुशब्दः प्रयोजनहेतुवाची, त्रैलोक्याधिपत्यरूप प्रयोजनार्थमपीत्यर्थः । हन्तुं - हिंसितुम् । महीकृते - महीमात्रप्रयोजनाय तु । किन्नु - किमु वक्तव्यम् । हे जनार्दन ? धार्तराष्ट्रा न्निहत्य । नः अस्माकम् । का प्रीति स्स्यात्, न कापीत्यर्थः ॥३५॥

---

या यदि युद्ध में विजय प्राप्तकर त्रिलोकी का आधिपत्य भी पा गये, तब भी इन सबकी हिंसा करना नहीं चाहता हूं । केवल इस पृथ्वी का राज्य प्राप्त करने के लिए युद्ध करने का और क्या प्रयोजन हो सकता है, अर्थात् इसके अतिरिक्त कोई प्रयोजन नहीं हो सकता है ॥ ३२-३५ ॥

हे जनार्दन ! धृतराष्ट्र पक्ष के योद्धाओं का वध कर देने मात्र से हम लोगों को कोई भी सुख नहीं मिल सकता है । यद्यपि शत्रु सर्वदा वध कर देने योग्य होता है फिर भी इन सब का वध करने से हमें पाप ही लगेगा । क्योंकि ये हमारे आचार्य, पूज्य बाबा, चाचा एवं आत्मीय स्वजन ही तो हैं, इसलिए धृतराष्ट्र पक्षीय इन सब

तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान् स्वबान्धवान् ।
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ।।३७।।
यद्यप्येते न पश्यन्ति लोभोपहत चेतसः ।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ।।३८।।
कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ।।३९।।

---

ननु - "अग्निदो गरदश्चैव शस्त्रपाणि र्धनापहः। क्षेत्रदारापहर्ताच षडेते आततायिनः।।" इति स्मरणादग्निदत्वादिभि ष्षड्भि र्हेतुभि रेते आततायिनः, "आततायिन मायान्तं हन्यादेवाविचारयन्। नाततायि वधे दोषो हन्तुर्भवति कश्चन।।" इति वचनादाततायिवधो युक्तएवेत्याशंक्याह "पापमेवे" ति सार्धश्लोकेन। आततायिनो प्येतान् हत्वा। अस्मान् पापमाश्रयेदेव। तस्मात् - कारणात्। वयम्। सबान्धवान् - बन्धुसहितान्। धार्तराष्ट्रान्। हन्तुमर्हाः। न - नभवामः। आततायिवधाभ्यनुज्ञानमाचार्यादिव्यतिरिक्तविषयमिति भावः।। ३६ ।।

नन्वधर्ममपि चिकीर्षतः सुखेन भाव्यम्, नचेह तदस्तीत्याह (स्वजनं हीति) माधव ? स्वजनं - आचार्यादिकम्। हत्वा। कथं ? सुखिनः - सुखवन्तः। स्याम - भवेम ।। ३७ ।।

ननुच - एतेषामपि बन्धुवधदोषे समाने सति यथा ते बन्धुवधदोष मंगीकृत्यापि युद्धे प्रवर्तन्ते, तथैव भवानपि प्रवर्ततां, किमनेन विषादेनेत्याशंक्याह "यद्यपी" त्यादिना श्लोकद्वयेन—

हे जनार्दन ? लोभोपहतचेतसः - लोभेन - राज्यलोभेन, उपहतम्, प्रणष्टविवेकम्, चेतो - येषान्ते तथोक्ताः। एते - धार्तराष्ट्राः। कुलक्षयेन कृतं पापम्। मित्रद्रोहे - मित्राणां - सुहृदां, द्रोहे-वधे सति। पातकम् -

---

आत्मीय स्वजनों का वध करना अनुचित है। हे माधव ! इन स्वजनों का वध करके हम कैसे सुखी होंगे ? अर्थात् कैसे भी सुखी नहीं हो सकते हैं ।।३६।।३७।।

हे जनार्दन ! यद्यपि धृतराष्ट्र पुत्र कौरव लोभ से अन्धे होकर कुल के नाश और बान्धवों के वध से होने वाले पाप को नहीं समझ पा रहे हैं, फिर भी कुल नाश से होने वाले पाप को अच्छी प्रकार से जानकर भी क्यों हम उस पापकर्म से विरत नहीं होंगे ? अर्थात् उस पापकर्म से निवृत्त होना हमारा सर्वथा उचित है ।।३८-३९।।





कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ।।४०।।
अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ।।४१।।
संकरो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ।।४२ ।।

---

पापञ्च। नपश्यन्ति-यद्यपि न जानन्त्येव। तथापि। कुलक्षयकृतं दोषम्। प्रपश्यद्भिः - सम्यग्जानद्भिः। अस्माभिः। अस्मात्-बन्धुवधरूपात्। पापात् निवर्तितुं कथं न ज्ञेयं। निवृत्तौ बुद्धिः कर्तव्येत्यर्थः ।।३८।।३९।।

कुलक्षयकृतं दोषमेव दर्शयति (कुलक्षय इति) कुलक्षयेसति। सनातनाः - शाश्वताः, पितृपितामहादिपरम्पराप्राप्ताइतियावत्। कुलधर्माः। प्रणश्यन्ति। न केवलं धर्मनाशमात्रमित्याह (धर्मइति) धर्मे नष्टेसति। कृत्स्नम् - समस्तम्। कुलम् - नष्टावशिष्टं कुलं। अधर्म उत - अधर्मोपि। अभिभवति - व्याप्नोतीत्यर्थः।। ४० ।।

हेवार्ष्णेय - वृष्णिकुलोत्तंस। कृष्ण ? अधर्माभिवात् - अधर्माभिव्याप्तिहेतोः। कुलस्त्रियः - कुलांगनाः। प्रदुष्यन्ति - प्रकर्षेणदुष्टाभवन्ति। स्त्रीषु दुष्टासु सतीषु। वर्णसङ्करः - वर्णानाम् - ब्राह्मणक्षत्रियादिजातीनाम्, सङ्करः - अव्यवस्था। जायते ।। ४१ ।।

एवं सत्यनर्थमाह (संकर इति) संकरः - वर्णसांकर्यम्। कुलंघ्नन्तीति कुलघ्नाः - कुलक्षयकारिणः, तेषां। कुलस्य च। नरकायैव भवति। ऐषां-कुलघ्नानां। पितरः - ऊर्ध्वलोकनिवासा अपि। लुप्तपिण्डोदकक्रियाः - लुप्ताः - दातुरभावान्नष्टाः, पिण्डोदकानां, क्रियाः - अनुष्ठानानि, येषान्ते तथोक्ता स्सन्तः। पतन्ति - अधोगतिं प्राप्नुवन्ति ।। ४२ ।।

---

हे कृष्ण ! कुल के नष्ट होने से वंश परम्परागत कुल धर्म सम्पूर्ण रूप से नष्ट हो जाता है, कुल धर्म के नष्ट होते ही वह वंश अधर्म से परिपूर्ण हो जाता है। उस अधर्मी वंश की स्त्रियाँ दुश्चरित्रा हो जाती हैं, स्त्रियों के दुश्चरित्र होने से भिन्न-भिन्न प्रकार की वर्णसंकर सन्तान उत्पन्न होने लगती है। इस प्रकार वह वर्णसंकरता वंश नष्ट करने वालों को और उस वंश को नरक में डुबा देती है। वैध सन्तान नहीं रहने से उस वंश में श्राद्ध तर्पणादि कार्य लुप्त हो जाते हैं जिससे उस वंश के पितर अधोगति को प्राप्त

दोषै रेतैः कुलघ्नानां वर्णसंकरकारकैः ।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥४३॥

उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥४४॥

अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥४५॥

---

कुलघ्नानाम् । वर्णसंकरकारकैः - जातिसांकर्यकरैः । एतैः - कुलक्षयकृतैः । दोषैः । शाश्वताः । जातिधर्माः - ब्राह्मणादिधर्माः । कुलधर्माः । चकारादाश्रमधर्माश्च । उत्साद्यन्ते - लुप्यन्तएव । उत्सन्नाः - नष्टाः, कुलधर्माः यै स्ते उत्सन्नकुलधर्माः, इदमुत्सन्नजातिधर्मादीनामप्युपलक्षणम्, तादृशानाम् । मनुष्याणाम् । हे जनार्दन ? नरके - कुम्भीपाकादौ । वासः । नियतं - नित्यं यथातथा । भवति । इति - अनेन प्रकारेण । अनुशुश्रुमः- वयं श्रुतवन्तः । 'प्रायश्चित्त मकुर्वाणाः पापेषु निरता नराः । अपश्चात्तापिनःकष्टान्निरयान्यान्ति दारुणान् ॥" इत्यादिवचनदर्शनात् ॥४३॥४४॥

युद्धे बन्धुवधाध्यवसाये परितप्यमान आह ( अहो इति ) वयम् । राज्यसुखलोभेन राज्यसुखेच्छया । स्वजनं - बन्धुजनम् । हन्तुम् । उद्यताः - उद्युक्ताइतियत् - तत् । महत् - अतिदारुणम् । पापम् । कर्तुम् । व्यवसिताः - व्यवसायं कृतवन्तः । अहो - आश्चर्यम् । बत - कष्टमित्यर्थः ॥४५॥

---

होते हैं । उन समस्त दोषों के लिए ब्राह्मणादि जातिधर्म, एवं वंशगत कुलधर्म, विनष्ट हो जाते हैं । उन्हें सर्वदा नरक में वास करना पड़ता है । इस सिद्धान्त को हमने अनेक बार सुना है ॥ ४०-४४॥

हम राज्यसुख की लालसा से आत्मीय स्वजनों को मारने के लिए उद्यत होकर जिस महापाप को करने का संकल्प कर बैठे हैं यह अत्यन्त दुःख की बात है ॥ ४५ ॥

( इन कारणों से युद्ध करने की अपेक्षा मरण ही श्रेयस्कर है, यह सोचकर अर्जुन बोले ) ।

हे श्रीकृष्ण ! यदि मैं आत्मरक्षार्थ निश्चेष्ट हो जाऊँ और अस्त्र शस्त्र परि-





यदि मामप्रतीकार मशस्त्रं शास्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्यु तन्मे क्षेमतरं भवेत् ॥४६॥

सञ्जय उवाच—

एवमुक्त्वाऽर्जुनः संख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ॥४७॥

इति श्रीमद्भगवद्गीतायां प्रथमोऽध्याय ॥१॥

---

एवमनुतापेन मृत्युमेवाकांक्षन्नाह ( यदीति ) रणे-युद्धे । अप्रतीकारं- अकृतः, प्रतीकारः - प्रतिक्रिया, येन तथोक्तम् । अशस्त्रं - आयुधरहितम् । माम् । शस्त्रं पाणौ येषान्ते शस्त्रपाणयः - आयुधहस्ताः । धार्तराष्ट्राः । हन्युर्यदि । तत् - हननमेव । मे - मम । क्षेमतरम् - अत्यन्तहितम् । भवेत् । स्वस्यपापप्रसंगाभावादितिभावः । 'भवे' दित्यनन्तरमितिशब्दः पूरणीयः । इदं विषीदन्नब्रवीदितिपूर्वेणान्वयः ॥४६॥

ततः किमर्जुनः कृतवानित्यपेक्षायाम् सञ्जयआह (एवमिति) एवं - अनेन प्रकारेण । उक्त्वा । सशरम् - बाणसहितम् । चापं - धनुः । विसृज्य - त्यक्त्वा । शोकसंविग्नमानसः - शोकेन - दुःखेन, संविग्नम् - अत्यन्तचलितम्, मानसं - युद्धाध्यवसायरूपमनोव्यापारः, यस्य तथोक्तस्सन् । संख्ये - युद्धे । रथोपस्थे - रथस्योपरि । उपाविशत् - उपविवेश ॥४८॥

इति श्रीवरवरमुनि विरचितायां बालबोधिन्यपराभिधानायाम्
श्रीगीतार्थसंग्रहदीपिकाख्यायां भगवद्गीताव्याख्यायाम्

॥ प्रथमोऽध्यायः ॥

---

त्याग कर दूँ और उस अवस्था में शत्रुपक्ष शस्त्र हाथ में लेकर मेरी हत्या कर दे, वह भी मैं अपने लिए मांगलिक हुआ, यह मनमें सोचूँगा ॥ ४६ ॥

इस प्रकार कहकर अर्जुन ने उसी समय धनुष बाण का परित्याग कर शोकाकुल हो युद्ध क्षेत्र में रथ के समीप बैठ गये ॥ ४७ ॥

॥ इति अर्जुनविषादयोगो नाम प्रथमोऽध्यायः ॥

श्रीरस्तु

# अथ द्वितीयोऽध्यायः

★

सञ्जय उवाच—

तं तथा कृपयाविमष्टश्रुपूर्णाकुलेक्षणम् ।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ १ ॥

---

ततोभगवता कृष्णेन किंकृतमित्यपेक्षायामाह (तमिति) तथातेन प्रकारेण । कृपया-दयया । आविष्टं - व्याप्तं । अश्रुपूर्णाकुलेक्षणं - अश्रुभिः- बाष्पैः, पूर्णे, आकुले - चञ्चले, ईक्षणे - नेत्रे, यस्य तं तथोक्तं । विषीदन्तं- शोचन्तं । तं - अर्जुनप्रति । मधुसूदनः - श्रीकृष्णः । इदं - वक्ष्यमाणं वाक्यं । उवाच ॥ १ ॥

---

## द्वितीय अध्याय

### सांख्ययोग

अर्जुन के मोह की शान्ति के लिए मुख्य रूप से तीन विषयों का उपदेश है—

१– आत्मा नित्य है, शरीर विनाश शील है इस ज्ञान को पैदा करने वाली बुद्धि अर्थात् 'सांख्य' तत्व का प्रतिपादन ।

२– इस बुद्धि से निर्लिप्त होकर कर्म करने की इच्छा ।

३– इस सांख्यतत्व के जानकारों के लक्षणों का विवरण प्रस्तुत करना 'बुद्धया अव- धारणीयः आत्मतत्व:' जिस बुद्धि से आत्मतत्व के विषय में दृढ़ धारणा हो और आत्मतत्व का प्रकृत स्वरूप ये दो विषय विशेष रूप से इस द्वितीय अध्याय में वर्णित हैं इसलिए इसे सांख्ययोग अध्याय कहते हैं ।

अब मैं युद्ध नहीं करूंगा कहकर, धनुष बाण त्याग कर शोकाकुल हो अर्जुन रथ पर बैठ गया, इस आचरण को देख उसे यह समझाने के लिए कि तेरा यह आच- रण अनुचित है, श्रीकृष्ण ने तब उसे उपदेश देना आरम्भ किया ।

संजय बोले—

इस प्रकार स्नेहाकुल, अश्रु गद्गद्, अत्यन्त दुःखी अर्जुनको मधुसूदन श्रीकृष्ण ने 'हे अर्जुन यह तुम अनुचित कार्य कर रहे हो' इस बात को समझाने के लिये उपदेश देना आरम्भ किया ॥ १ ॥





श्रीभगवानुवाच—

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २ ॥
क्लैब्यं मास्मगमः पार्थ नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ॥ ३ ॥

अर्जुन उवाच—

कथं भीष्महं संख्ये द्रोणं च मधुसूदन ।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥

---

तदेववाक्यमाह ( कुतइति ) अनार्यजुष्टं - अनार्यैः - अविद्वद्भिः, जुष्टं - सेवितं । अस्वर्ग्यं - स्वर्गायहितं स्वर्ग्यं, तन्नभवतीत्यस्वर्ग्यं - परलोक- विरोधि । अकीर्तिकरं । अपकीर्तिहेतुः । इदं । कश्मलं शोकः । विषमे - सङ्कटसमये । कुतः । कस्माद्धेतोः । त्वा - भवन्तं । समुपस्थितं - सम्प्राप्तम् ॥ २ ॥

हे पार्थ ? क्लीबस्य भावः क्लैब्यं - दैन्यं, तत् । मास्मगमः - नप्राप्नु हि । यतः । त्वयि - विषये । एतत् - क्लैब्यं । नोपपद्यते - नयुज्यते । अतः । हे परन्तप - शत्रुतापन । क्षुद्रं - तुच्छं । हृदयदौर्बल्यं - मनोदैन्यं । त्यक्त्वा । उत्तिष्ठ । युद्धायेतिशेषः ॥ ३ ॥

पुनरप्यस्यानस्नेहकारुण्यधर्माधर्मभयाकुलतया भगवदुक्तं हेतुम- जानन्नर्जुन आह ( कथमिति ) हे ? अरिसूदन - आश्रितशत्रुनिरसन ।

---

भगवान् श्रीकृष्ण बोले—हे अर्जुन ! युद्ध रूप इस सङ्कट काल में अज्ञानी जनोचित, परलोक विरोधी एवं अपकीर्ति करने वाला यह तुम्हारा शोक कहाँ से आ गया ॥ २ ॥

हे पार्थ ! पौरुष हीन होना उचित नहीं, यह नपुंसकता तुम्हें शोभा नहीं देती है । हे शत्रुदमनकारी ! हृदय की यह तुच्छ दुर्बलता त्यागकर युद्ध के लिए प्रस्तुत हो जाओ ॥ ३ ॥

अर्जुन ने कहा—हे मधुसूदन श्रीकृष्ण ! पूजनीय पितामह भीष्म, द्रोणा- चार्य आदि के साथ मैं कैसे धनुष बाण लेकर युद्ध करने में समर्थ हो सकता हूँ, उनके साथ मेरा युद्ध करना सर्वथा अनुचित है । भीष्म द्रोण आदि महानुभावों को युद्ध में वध करके राज्यैश्वर्य भोग करने की अपेक्षा हमें भिक्षावृत्ति के द्वारा जीवन

**गुरूनहत्वा हि महानुभावान् श्रेयो भोक्तुं भैक्षमपीह लोके ।**
**हत्वाऽर्थकामांस्तु गुरूनिहैव भुञ्जीय भोगान् रुधिरप्रदिग्धान् ।। ५ ।।**
**नचैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः ।**
**यानेव हत्वा नजिजीविषाम स्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ।। ६ ।।**

मधुसूदन - हे कृष्ण ? अहं । संख्ये - युद्धे । पूजार्हौं - पूजायोग्यो । भीष्मं-पितामहं । द्रोणं - आचार्यंच । उभौ प्रति । इषुभिः - बाणैः । कथं । योत्स्यामि - युद्धं करिष्यामि । योद्धुमनुचितमितिभावः ।। ४

तर्हि तव देहयात्रापि नस्यादित्याशंक्याह (गुरूनिति) महानुभावान् - बहुमन्तव्यान् । गुरुन् । भीष्मद्रोणादीन् । अहत्वा - अनिहत्य । इहैव-लोके । भैक्षं - भिक्षान्नं । भोक्तुमपि । श्रेयोहि - उचितं हि । अर्थं काम-यन्त इत्यर्थकामास्तान्, भोगेष्वतिमात्रसक्तानित्यर्थः । गुरूंस्तु हत्वा । रुधि-रप्रदिग्धान् - रुधिरेण - तेषां रक्तेन, प्रदिग्धान् - उपसिक्तान् । भोगान् - तैर्भुज्यमानानेवार्थान् । इहैव - तेषां स्थान एव । स्थित्वा । कथं । भुञ्जीय - अनुभवेयम् ।। ५

ननु युद्धमारभ्यनिवृत्तव्यापारान् भवतो धार्तराष्ट्राः प्रसह्यहन्युः, अत स्तज्जयाय योद्धव्यमित्यतआह (नचैतदिति) किञ्च । यद्वा जयेम - वयं वा-तान् जेष्यामः । यदिवा नोजयेयुः - नः - अस्मान्, ते वा जेष्यन्ति । अनयोर्द्व-योर्मध्ये । नः - अस्माकं । कतरत् - किंवा । गरीयः - श्रेष्ठं । एतत् । न विद्मः - न जानीमः । ननु तज्जयगरीयस्त्वेक स्संशय इत्यत्राह (वयमिति) वयं । यानेव हत्वा । नजिजीविषामः - जीवितुं नेच्छामः । ते । धार्त-

धारण करना भी श्रेष्ठ है क्योंकि गुरुजनों की युद्ध में हत्या करके उनके द्वारा उपभुक्त सम्पूर्ण भोगों को जो कि उन्हीं के रक्त से रंजित करके, उन्हीं के आसन पर बैठकर हम कैसे भोगकर सकेंगे । अर्थात् यह सब करना मेरे वश की बात नहीं है ।।४-५

(यह युद्ध आरम्भ होने जा रहा है, यदि तुम निश्चेष्ट हो बैठ जाओगे तब कौरव निश्चय तुम्हारा वध कर देंगे) श्रीकृष्ण की इस बात की आशङ्का करके अर्जुन ने कहा—मैं समझ नहीं पा रहा हूँ कि इस युद्ध में जय एवं पराजय में से कौन हमारे लिए श्रेयस्कर है क्योंकि जिनका वध करके हम जीवित नहीं रहना चाहते वे कौरव पक्षीय भीष्म, द्रोण, दुर्योधनादि वीरगण हमारे ही सामने युद्ध करने हेतु प्रस्तुत हो करके खड़े हैं ।। ६





**कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसम्मूढचेताः ।**
**यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं**
**शाधि मां त्वां प्रपन्नम् ।। ७ ।।**
**न हि प्रपश्यामि ममापनुद्याद्यच्छोकमुच्छोषणमिन्द्रियाणां ।**
**अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम् ।। ८ ।।**

राष्ट्राएव । प्रमुखे - पुरतः । अवस्थिताः - युद्धार्थंस्थिताः । अतस्तज्ज-योपि पराजयतुल्य एवेति भावः ।। ६

तर्हि किमत्र मया कर्तव्यमित्यत्राह (कार्पण्येति) कार्पण्य दोषोपहत-स्वभावः - एतान् हत्वा कथं जीविष्याम इति मनोदैन्यं कार्पण्यं, दोषः - कुलक्षयकृतः, ताभ्यां, उपहतः अभिभूतः, स्वभावः - धैर्यं, यस्य स तथोक्तः। धर्मे, सम्मूढ - सन्दिग्धं, चेतो यस्य सः - धर्मसम्मूढचेता स्सन्; मम किं गुरुवधमपि कृत्वा राज्यसुखानुभवो धर्मः, किंवा गुरुवधमकृत्वा भैक्षाशन-मपि धर्म इति धर्मसन्दिग्ध स्सन्नित्यर्थः । त्वा - त्वाम् । पृच्छामि । अत्र । यत् । निश्चितम् । श्रेयः - श्रेयोयुक्तम् । स्यात् । तत् । मे मह्यम् । ब्रूहि-वद । अहम् । ते - तव । शिष्यः - शासनार्हः । त्वाम् । प्रपन्नं - शरणा-गतम् । माम् । शाधि - शिक्षय ।। ७

त्वमेव विचार्य यद्युक्तं तदा चरेत्यत्राह (नहीति) इन्द्रियाणां - चक्षु-रादीनाम् । उच्छोषणं - अत्यन्तशोषकरम् । मम - मे । शोकं - बन्धुवध-जनितं दुःखम् । यत् - कर्म । अपनुद्यात् - निवर्तयेत् । तत्कर्म । अहम् ।

तब इस समय क्या करना चाहिए अर्जुन इस विषय में श्रीकृष्ण से जिज्ञासा करते हैं—आमने-सामने अपने ही आत्मीय स्वजनों का वध करके किस प्रकार जीवन धारण कर सकूंगा, इस प्रकार का मन की दीनता एवं स्वजन वध से वंशनाश रूप दोष इन दो बातों से मेरी बुद्धि में भ्रम हो गया है । गुरुजन एवं आत्मीयजनों को युद्ध में वध करके राज्यसुख लाभ धर्म है, अथवा युद्ध का त्याग कर भिक्षावृत्ति द्वारा जीवन धारण करना धर्म है । इसे मैं ठीक प्रकार से समझ नहीं पा रहा हूँ । इस-लिए आप मुझे समझा दीजिए । हमारे लिए इन दोनों में कौन सा मङ्गल करने वाला है । मैं आपका शिष्य एवं शरणागत हूँ । मुझे यथोचित उपदेश दीजिये ।।७

(जो उचित कर्तव्य था वह तुमको बता चुका, अब तुमको जैसा उचित लगे वही करो) यह पीछे श्रीकृष्ण कह चुके हैं, इस पर अर्जुन कहते हैं—इस लोक में शत्रु

संजय उवाच—

**एकमुक्त्वा हृषीकेशं गुडाकेशः परंतप ।**
**न योत्स्य इति गोविन्दमुक्त्वा तूष्णींबभूव ह ॥ ९ ॥**

**तमुवाच हृषीकेशः प्रहसन्निव भारत ।**
**सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥१०॥**

---

भूमौ । असपत्नं - नविद्यते, सपत्नः - शत्रुः, यस्य तत्तथोक्तम् । ऋद्धं - विविधभोग्यभोगोपकरणभोगस्थानसम्पन्नम् । राज्यं - राजत्वम् । सुराणां देवानाम् । आधिपत्यमपिच - इन्द्रत्वमपीत्यर्थः । प्राप्यापि - लब्ध्वापि । नहि प्रपश्यामि - नोपलभे । अनेन युद्धेनेह भूमण्डलाधिपत्यलाभे परत्र स्वराज्यलाभेऽपि वा बन्धुवधजनितो महान् शोकोऽनुवर्तिष्यत एवेति तदपनोदनोपायस्तु नकश्चिदपि प्रतिभातीति भावः ॥८॥

एवमुक्त्वाऽर्जुनः किं कृतवानित्यपेक्षायां सञ्जय आह (एवमिति) परन्तपः । गुडाकेशः - निद्रालस्यनियन्ता - अर्जुनः । "निद्रालस्ये गुडाका स्या" दिति कोशकारः । हृषीकेशं - श्रीकृष्णं प्रति । एवमुक्त्वा । अहम् । न योत्स्ये - युद्धं न करिष्यामि । इति गोविन्दं प्रत्युक्त्वा । तूष्णीं बभूव - निरुद्योगोऽभूदित्यर्थः । भगवच्चिकीर्षितभूभारावतरणे निमित्तभूतस्यार्जुनस्य कोऽयमस्थाने शोकस्संवृत्त इति सञ्जयो विषीदति हेति ॥९॥

ततः किं वृत्तमित्यत्राह ( तमिति ) हे भारत - धृतराष्ट्र । हृषीकेशः - कृष्णः । प्रहसन्निव - स्नेहकारुण्ययो विषयविभागमजानन्तं तंप्रति किञ्चित्परिहासवाक्यं वदन्निवेत्यर्थः । उभयोस्सेनयोर्मध्ये - विषादानुचितदेशे । विषीदन्तं - शोचन्तम् । तम् - अर्जुनं प्रति । इदं -

---

हीन समृद्धशाली राज्य, यहाँ तक कि स्वर्ग में इन्द्रपद प्राप्त कर लेने पर भी आत्मीय स्वजनों के वध से होने वाला हमारे लिए यह महान् दुःख दूर हो सके ऐसा कोई उपाय दिखाई नहीं दे रहा है ॥८

संजय ने कहा हे धृतराष्ट्र ! निद्राविजयी, शत्रुदमनकारी अर्जुन ने शोकमग्न हो हृषीकेश भगवान श्रीकृष्ण से इस प्रकार कहने के बाद अन्त में कहा—'हे गोविन्द ! 'मैं युद्ध नहीं कर सकूँगा' और चुप हो गया । तब श्रीकृष्ण ने मुस्कराते हुए दोनों सेनाओं के मध्य में स्थित शोकार्त अर्जुन को उपदेश देना आरम्भ किया ॥९-१०





श्रीभगवानुवाच—

**अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।**
**गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥११॥**

---

वक्ष्यमाणं - "अशोच्यानि" त्यारभ्य - "मोक्षयिष्यामि माशुच" इत्यन्तम् । वचः - वाक्यम् । उवाच ॥ १०

अथ शरणागतवत्सलो भगवान् श्रीकृष्णः - देहातिरिक्तात्माऽज्ञाननिमित्तकोऽस्यशोकस्तज्ज्ञानेन विना नशाम्यतीति मत्वा तज्ज्ञानं प्रथममुपदिशति (अशोच्यानिति) हे अर्जुन ! त्वं । अशोच्यान् - शोचितुमनर्हान् बन्धून् प्रति । अन्वशोचः - शोचितवानसि । प्रज्ञावादांश्च - प्रज्ञया - देहातिरिक्तात्मज्ञानेन, ये वादाः - "पतन्ति पितरोह्येषां लुप्तपिण्डोदकक्रिया" इत्यादयः, तान् । भाषसे । देहातिरिक्तात्मज्ञानवतामत्र न किञ्चिदपि शोकनिमित्तमस्तीत्याह (गतेति) गताः, असवः - प्राणाः, येषां ते - गतासवः - नश्वरादेहाः, तान् । अगता असवोयेषांते अगतासवः - नित्यात्मानः, तांश्च प्रति । पण्डिताः - देहात्मस्वरूपयाथात्म्यज्ञानवन्तः । नानुशोचन्ति । नश्वराणां देहानां यदाकदाचिदपि नाशस्यावश्यकत्वान्नित्यानां चात्मनां कदाचिदपि नाशाभावाच्चोभयत्रापि न शोकनिमित्तमितिभावः ॥११

---

श्रीभगवान बोले—(यहाँ से गीता का उपदेश आरम्भ होता है) शरणागत वत्सल भगवान श्रीकृष्ण ने सोचा कि अर्जुन को यह शोक क्यों हो रहा है देह से अतिरिक्त आत्मा का ज्ञान बिना कराये यह शोक इसका मिट नहीं सकता इसलिए देह से पृथक् आत्मा के अस्तित्व का उपदेश देते हैं ।

अर्थ—हे अर्जुन ! जिनके लिए शोक करना उचित नहीं है उनके लिए तुम व्यर्थ शोक कर रहे हो और 'पतन्ति पितरो ह्येषां लुप्त पिण्डोदक क्रियाः ।' इत्यादि वचनों से पण्डितों जैसी बात भी कह रहे हो । अनित्य नश्वर देह एक दिन नष्ट होगा ही एवं नित्य अविनाशी आत्मा नष्ट होने का नहीं । इसलिए आत्मज्ञानी पण्डितजन इस तथ्य को जानकर न जीवित प्राणी के लिए और न मृत किसी के लिए ही अर्थात् शरीर और आत्मा किसी के लिए शोक नहीं करते हैं ॥ ११

उसका कारण बताते हुए आत्मा का स्वरूप कहते हैं—क्योंकि सर्वेश्वर मैं और जीव रूप से तुम या ये सब राजागण इससे पहिले कभी नहीं थे यह बात ठीक

न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।
न चैव न भविष्यामः सर्वे वयमतः परम् ॥१२॥
देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीर स्तत्र न मुह्यति ॥१३॥

प्रथमं तावदात्मनां स्वरूपमाह (नत्विति) अहं - सर्वेश्वरः । जातु - पूर्वस्मिन् काले कदाचिदपि । नासम् - नाभूवम् । इतिन, अपित्वासमेव । त्वं - जीवः । जातु नासीरिति न, किन्त्वासीरेव । इमे जनाधिपाः - राजानो जीवा अपि । जातुनासन्निति न, अपित्वासन्नेव । सर्वे वयं - अहंच त्वञ्चेत्यर्थः । अतः - वर्तमानकालात् । परं - परस्मिन्काले । जातु । न भविष्यामश्चैवेति न, किन्तु भविष्याम एव । यथाहं परमात्मा नित्यः, तथैव भवन्तो जीवा अपि नित्या एवेतिभावः ॥ १२

नन्वीश्वरस्य तव जन्मादिशून्यत्वं सत्यमेव, जीवानान्तु जन्ममरणे प्रसिद्धे, तत्कथमात्मनां नित्यत्वमित्यत आह (देहिन इति) अस्मिन् देहे । वर्तमानस्य । देहिनः । कुमारस्यभावः कौमारं - शैशवावस्था । यूनोर्भावो- यौवनं - युवत्वावस्था । जरा - वृद्धत्वावस्थाच । यथाभवन्ति । तथा । देहान्तरप्राप्तिः - पूर्वदेहं विहायान्यदेहप्राप्तिरपि । भवति । तत्र - पूर्वदेहत्यागरूपे मरणे देहान्तरप्राप्तिरूपे जन्मनिच । धीरः - धियंराति गृह्णातीतिधीरः - बुद्धिमान् । नमुह्यति नशोचति । कौमारादीनामिव जन्ममरणयोरपि देहधर्मत्वेना त्मधर्मत्वाभावादिति भावः ॥ १३

---

नहीं, एवं इसके बाद में कभी नहीं रहेंगे यह बात भी ठीक नहीं अर्थात् हम सब जिस प्रकार से इस समय वर्तमान हैं, उसी प्रकार पहले भी थे और बाद में भी रहेंगे । इसका अर्थ है कि मैं परमात्मा जैसे नित्य वस्तु हूं,ठीक उसी प्रकार जीवात्मा (तुम सब) भी नित्य वस्तु हो ॥ १२

ईश्वर का जन्म मरण न होने पर जीव का जन्म मरण तो प्रसिद्ध है, तब जीवात्मा कैसे नित्य कहा जा सकता है ? अर्जुन के इस सन्देह को दूर करते हैं—

हे अर्जुन ! शरीर में स्थित जीवात्मा की जैसे इस वर्तमान शरीर के परिणाम के कारण शैशव, यौवन, वार्धक्य आदि अवस्थाएं कही जाती हैं वैसे ही उसकी वर्तमान शरीर त्याग करने के पश्चात् जन्मान्तर में अन्य शरीर का धारण करना रूप एक और अवस्था की प्राप्ति होती है ॥ १३





मात्रा स्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥१४॥
यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥१५॥

ननु नाहं बन्धून् प्रतिशोचामि, किन्तु तत्संयोगवियोगरूप सुखदुःखभाजं मांप्रत्येवेत्यत्राह (मात्रेति) हे कौन्तेय - अर्जुन ! तुशब्दश्शंकानिरासार्थः । मात्रास्पर्शाः - मात्राणां - शब्दस्पर्शरूपरसगन्धवतां मृदुपरुषादिभेदभिन्नानां पदार्थानां, स्पर्शाः - श्रोत्रादिभिरिन्द्रियैर्ग्रहणानि, ते । शीतोष्ण- सुखदुःखदाः, शीतोष्णशब्दौ प्रियाप्रियमात्रपरौ, तदुद्भूतसुखदुःखप्रदा भवन्ति । आगमापायौ - उत्पत्ति-विनाशौ, तावेषां स्त इत्यागमापायिनः । अतएव । अनित्याश्च । हे भारत - भरतवंश्य । तान् - सुखदुःखदान्मात्रास्पर्शान् । तितिक्षस्व क्षमस्व । नित्यस्याप्यनादिकर्मवश्यस्यात्मनस्तत्तत्कर्मकृतशरीरसम्बन्धेन विषयानुभवजनित सुखदुःखयोरवर्जनीयत्वादितिभावः ॥ १४

तत्क्षमाकिमर्थेत्यत आह (यं हीति) हे पुरुषर्षभ - पुरुषश्रेष्ठार्जुन । एते - मात्रास्पर्शाः । समदुःखसुखं - समे - तुल्ये, दुःखसुखे यस्य तं - अवर्जनीयं दुःखमपि कर्मक्षयहेतुतयाऽनुकूलत्वात्सुखमिव मन्यमानमित्यर्थः ।

---

अर्जुन यदि कहे कि मैं बन्धुओं के लिए शोक नहीं करता, बल्कि बन्धु वियोग जन्य दुःख भोगने वाले स्वयं के लिए शोक करता हूँ, इसका उत्तर देते हैं—

रूप, रस, शब्द, स्पर्श, गन्ध इन पाँच विशेष गुणों से युक्त चक्षु रसना कर्ण आदिकों के द्वारा उन विषयों का उपभोग कभी प्रिय कभी अप्रिय होने के कारण वह सुखद या दुःखप्रद हो सकता है । यह सुख दुःख आता जाता रहता है अतएव चिरस्थायी नहीं है, इसलिए हे अर्जुन ! वे वारण नहीं किये जा सकते एवं अनित्य हैं । यह निश्चय कर उन्हें धैर्यपूर्वक सहन करो अर्थात् विषयानुभव से होने वाले दुःख के लिए शोक एवं सुख के लिए आनन्द मनाना उचित नहीं ॥ १४

विषयानुभव से होने वाले सुख और दुःख किस कारण से सहन करना उचित है सो बतलाते हैं—

हे पुरुषश्रेष्ठ ! अर्जुन ! जो व्यक्ति धीर हैं एवं सुख और दुःख में समभावना से युक्त हैं अतएव विषयों के अनुभव से होने वाले अवर्जनीय सुख और दुःख जिसे विचलित या व्यथित नहीं कर पाते वही व्यक्ति मोक्ष प्राप्त कर सकता है ॥१५

नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥१६॥
अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥१७॥

---

धीरं - धैर्यवन्तम् । यं पुरुषं । नव्यथयन्ति - नपीडयन्ति । सः - पुरुषः । अमृतत्वाय - मोक्षाय । कल्पते - समर्थोभवति हि ॥ १५

आत्मनां देहानां चाशोच्यत्वनिमित्तभूतो नित्यत्वानित्यत्वरूपोय स्स्वभावउक्तः, तमुपपदायितुमारभते (नेति) असतः - देहस्य । भावः - सत्त्वम् । नविद्यते । सतश्च - आत्मनः । अभावः - असत्त्वं । नविद्यते । अनयोः - उपलभ्यमानयोरपि देहात्मनोः । अन्तः - अचेतनस्य देहस्यास-त्त्वमेव स्वरूपं, नित्यस्यात्मन स्सत्त्वमेव स्वरूपमिति निर्णयस्तु । तत्त्वदर्षि-भिः - तत्त्वज्ञैः । दृष्टः ॥ १६

आत्मनो विनाशित्वं कथमुपगम्यत इत्याशंक्याह (अविनाशीति) तत्तु - आत्मवस्तु । अविनाशि - विनाशरहितम् । विद्धि । येन आत्मवस्तुना चेतनेन । इदं सर्वं - अचेतनजातम् । ततं - व्याप्तं - अतिसूक्ष्मतयाऽन्तर-नुप्रविष्टमित्यर्थः । अव्ययस्य । अस्य - आत्मनः । कश्चित् - तद्व्यतिरि-क्तशस्त्रजलाग्नयादिरूपः कश्चिदपि पदार्थः । विनाशम् । कर्तुम् । नार्हति-समर्थो न भवति । शस्त्रजलादिकं हि नाश्यं वस्तु व्याप्य नाशयति, आत्मा तु न कस्यापि व्याप्य इति नाशकवस्त्वभावादविनाश्येवेति भावः ॥ १७

---

देह और आत्मा के लिए किस कारण शोक करना उचित नहीं सो कहते हैं—चेतनता रहित देह परिणामशील है इसलिये वह सदा एकरूप नहीं रहता इसलिए उसकी सत्ता नहीं है । चैतन्य वस्तु आत्मा चिरकाल मौजूद रहता है इसलिए उसकी असत्ता या अभाव नहीं होता । इससे देह अनित्य और आत्मा नित्यवस्तु है । देह को असद्भाव स्वरूप और आत्मा को सद्भाव स्वरूप तत्वदर्शी जनों ने देखा है ॥१६

आत्मा क्यों अविनाशी कहा जाता है, उसका विश्लेषण करते हैं—जो चेतन आत्मा अतिसूक्ष्म कहा जाता है जो इस परिदृश्यमान (दिखाई देने वाले) जगत् के सम्पूर्ण अचेतन पदार्थों के अन्दर प्रविष्ट एवं व्याप्त है उसे विनाश रहित जीवात्मा कहकर जानो क्योंकि उसे (अस्त्र, शस्त्र, जल, अग्नि आदि) ऐसी कोई भी वस्तु नहीं जो इस अपरिणामी आत्मावस्तु को नष्ट कर सके ॥ १७ ॥





अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥१८॥
य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥१९॥

---

देहानान्तु विनाशित्वमेव स्वभाव इत्याह(अन्तवन्त इति) अन्तः-विनाशः, एषामस्तीत्यन्तवन्तः - नाशस्वभावाः । इमे परिदृश्यमानाः । देहाः - उपचयात्मकानि शरीराणि । दिह उपचय इतिहि धातुः । नित्यस्य - उत्पत्तिरहितस्य । अनाशिनः - नाशरहितस्य । अप्रमेयस्य - स्वयं प्रमातृ-तया प्रमेयविलक्षणस्य । शरीरिणः - आत्मनः । उक्ताः - कर्मफलभोगार्थ-तया - "पुण्यः पुण्येन कर्मणा भवति पापः पापेन कर्मणे" त्यादिशास्त्रैः प्रति-पादिता इत्यर्थः । तस्मात् - देहस्य नाशस्वभावत्वादात्मनो नित्यत्वाच्च तव शोकनिमित्ताभावात् । हे भारत । युध्यस्व - क्षत्रियस्य तव परमधर्म-भूतमनभिसंहितफलं मोक्षसाधनं युद्धाख्यं कर्म कुरुष्व ॥ १८

यः । एनं - उक्तस्वभाव मात्मानं प्रति । हन्तारं-अग्नचादि रूपमन्यं हननकर्तारम् । वेत्ति-मन्यते । यश्च । एनं-आत्मानम् । हतं-हननक्रियावि-षयम् । मन्यते । तावुभावपि । न विजानीतः - अविदितात्मस्वरूपावित्यर्थः । कुत इत्यत आह(नायमिति)अयं अग्नचादिः। आत्मानम् । न हन्ति । आत्मा । न हन्यते-केनापि नहिंस्यतेच । उक्तप्रकारेणात्मनो नित्यत्वादिति भावः ॥१९॥

---

देहों का विनाशी होना ही स्वभाव है । देहीरूप आत्मा नित्य अविनाशी एवं अप्रमेय अर्थात् अन्य किसी भी प्रमाण द्वारा उपलक्षित नहीं होने वाला है, किन्तु देही का देह विनाशी शास्त्रों में कहा गया है । देह अपने-अपने पुण्य पाप जनित कर्मफलों को भोगकर नष्ट हो जाते हैं, इसलिए हे अर्जुन ! तुम युद्ध करो ।

११ वें श्लोक 'अशोच्यानन्व' से यहाँ तक मैंने जो उपदेश दिया है वह सब विचार कर युद्धार्थी को अविनाशी नित्य जीवात्मा के लिए और विनाशी शरीरों के लिए शोक त्यागकर क्षत्रिय धर्मोचित युद्ध किसी फल की आकांक्षा से रहित होकर केवल मोक्ष का साधन मानकर करो ॥ १८

जो व्यक्ति इस आत्मा को मारने वाला समझता है या आत्मा को मरा हुआ समझता है, वे दोनों ही आत्मा के यथार्थ स्वरूप को नहीं जानते क्योंकि आत्मा किसी को मरता नहीं और किसी के द्वारा मरता भी नहीं ॥ १९ ॥

**न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः ।**
**अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥२०॥**

**वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।**
**कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥२१॥**

---

अयं - आत्मा। कदाचिदपि। नजायते - नोत्पद्यते। नम्रियते वा-नविनश्यति चेत्यर्थः। एवमात्मनो नित्योत्पत्तिविनाशयोरभाव उक्तः। अथ नैमित्तिकोत्पत्तिविनाशयोरभावमाह (नायमिति) अयम्। भूत्वा-कल्पादावुत्पद्य। भूयः - कल्पान्ते। नभविता - मरिष्यमाणः। न। अतः। अयं-सर्वदेहगत आत्मा। अजः - उत्पत्तिरहितः। नित्यः - विनाशरहितः। शाश्वतः - प्रकृतिवदस्फुट सततपरिणामरहितः। पुराणः - पुरापि नवः, सर्वदाऽपूर्ववदनुभाव्यः, सततमेकरूप इति यावत्। अतः। शरीरे। हन्यमाने सति। अयम्। न हन्यते ॥ २० ॥

यः - पुरुषः। एनं - आत्मानम्। अविनाशिनमजमव्ययं - नाशाद्यनर्हम्। अतएव। नित्यंच। वेद - जानाति। हे पार्थ। सः, पुरुषः। कं - कञ्चिदात्मानम्। कथम्। घातयति - अन्येन - पुरुषेण नाशयति। कं-कंचित्। कथम्। हन्ति - स्वयं नाशयति। अतः - एतानहं हन्मि - अन्यैर्वातयामीत्यनुशोचनमात्मस्वरूपाज्ञानमूलकमेवेति भावः॥ २१ ॥

ननु नित्यस्याप्यात्मनो रमणीयभोगसाधनभूतेषु शरीरेषु नश्यत्सुतद्वियोगरूपं शोकनिमित्तमस्त्येवेत्याशंक्याह (वासांसीति) नरः - मनुष्यः। यथा। जीर्णानि। वासांसि - वस्त्राणि। विहाय - त्यक्त्वा। अपराणि -

---

यह आत्मा न कभी जन्म लेता है, न मरता ही है, कभी कल्पान्त में भी उत्पन्न होकर पुनः कभी मरेगा भी नहीं, अतएव यह आत्मा जन्मरहित, नित्य, परिणाम रहित, सदा एकरूप वस्तु है। इसलिए देह के नष्ट होने पर भी देही आत्मा नष्ट नहीं होता है॥ २० ॥

हे पार्थ ! जो लोग आत्मा को अविनाशी, जन्मरहित, अव्यय एवं नित्य वस्तु रूप से जानते हैं, वे किस प्रकार किसी को वध करने लगेंगे अथवा अन्य के द्वारा भी वध क्यों कर करायेंगे ? क्योंकि वे जानते हैं कि किस प्रकार आत्मा का वे स्वयं वध नहीं कर सकते न अन्य के द्वारा करा ही सकते हैं॥ २१ ॥





**वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।**
**तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥२२॥**

**नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।**
**न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥२३॥**

**अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।**
**नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥२४॥**

---

अन्यानि। नवानि - कल्याणानि। वासांसि। गृह्णाति - स्वीकरोति। तथा। देही - आत्मा। जीर्णानि - धर्मयुद्धानि शिथिलानि। शरीराणि। विहाय। अन्यानि - इतराणि। नवानि - त्यक्तशरीरादपि रमणीयानि। संयाति - सम्यक्प्राप्नोति। धर्मयुद्धकृतशरीरत्यागः कल्याणतरस्वर्गशरीरप्राप्तिहेतुत्वेन हर्षहेतुरेव, न शोकनिमित्तमिति भावः॥ २२ ॥

पूर्वोक्तमेवाविनाशित्वं द्रढयति (नैनमिति) शस्त्राणि - खड्गाद्यायुधानि। एनं - आत्मानम्। नच्छिन्दन्ति - न खण्डयन्ति। पावकः - अग्निः। एनं। न दहति - न भस्मीकरोति। आपः - जलानिच। एनं। न क्लेदयन्ति-मृदूकरणेन शिथिलं न कुर्वन्ति। मारुतः - वायुः। एनं। न शोषयति - शुष्कं न करोति॥ २३ ॥

अत्र हेतुं छेदनाद्यनौचित्यमाह "अच्छेद्योऽय" मित्यादि श्लोकद्वयेन। अयं - आत्मा। अच्छेद्यः - छेदनानर्हः। अदाह्यः - दहनानर्हः। किंच। अक्लेद्यः - शिथिलीकरणानर्हः। अशोष्यएव - शोषणानर्हएव। कुतइत्यत्राह (सर्वगत इति) सर्वं - स्वव्यतिरिक्तमचेतनजातम्, गतः - परमसूक्ष्मतया व्याप्यस्थितः। अतः। अयं-आत्मा। नित्यः। स्थाणुः - स्थिरस्वभावः। अचलः - अप्रकम्प्यः। सनातनः - पुरातनश्च॥ २४ ॥

---

मनुष्य जैसे पुराने फटे वस्त्रों को त्यागकर नवीन वस्त्र धारण कर लेता है, उसी प्रकार यह आत्मा भी पुराने शरीर को त्यागकर अन्य नवीन शरीर धारण कर लेता है॥ २२ ॥

अस्त्र, शस्त्र, अग्नि, जल एवं वायु इस आत्मा को न काट सकते हैं, न जला, न गला, और न सुखा ही सकते हैं, क्योंकि आत्मा अच्छेद्य, अदाह्य, अक्लेद्य एवं अशोष्य अतएव नित्य है, और यह आत्मा अव्यक्त अर्थात् चक्षुरादि इन्द्रियों से अगोचर, अचिन्त्य-मन से अगोचर, अविकारी माने हस्तपादादि कर्मेन्द्रियों का अविषय है

अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥२५॥

अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो नैनं शोचितुमर्हसि ॥२६॥

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥२७॥

---

अयं - आत्मा । न व्यज्यत इत्यव्यक्तः - चक्षुराद्यविषयः । अयं । अचिन्त्यः - चिन्तयितुमशक्यः, मनसोऽप्यविषयः । अयं । अविकार्यः - विकारयितुमशक्यः, कर्मेन्द्रियाणामप्यविषय इत्यर्थः । उच्यते - कथ्यते । अभियुक्तैरिति शेषः । तस्मात् - हेतोः । एनं - आत्मानं । एवं - उक्तप्रकारमविनाशिनम् । विदित्वा - ज्ञात्वा । तदर्थं । अनुशोचितुम् । नार्हसि ॥ २५ ॥

एवं देहातिरिक्तस्यात्मनो नित्यत्वेन शोकानर्हत्वमुक्त्वा जननमरणस्वभावस्य देहस्यैवात्मत्वेऽप्यशोच्यत्वमाह (अथ चेति) अथच - अथवा । एनं - आत्मानम् । नित्यजातं - प्रतिक्षणमुत्पन्नम् । नित्यं - प्रतिक्षणम् । मृतंवा - विनष्टंच. शरीरमित्यर्थः । तत् । मन्यसे - आत्मानं प्रतिक्षणोत्पत्तिविनाशशीलशरीराभिन्नमेव मन्यसे चेदित्यर्थः । तथापि । हे महाबाहो - अर्जुन । त्वम् । एवं - अनेन प्रकारेण । शोचितुं नार्हसि ॥ २६ ॥

तदेवोपपादयति (जातस्येति) जातस्य - उत्पन्नस्य । मृत्युः-विनाशः । ध्रुवः - अवर्जनीयः । मृतस्यच । जन्म । ध्रुवं - अवर्जनीयं हि । देहस्य

---

अतएव आत्मा इन सब शुभ गुणों से विशिष्ट है । अतः आत्मा के लिए शोक करना उचित नहीं है ॥ २३-२५ ॥

देहातिरिक्त आत्मा नित्य वस्तु अतएव उसके लिए शोक करना उचित नहीं । यदि इस देह को ही आत्मा मान लिया जाय तब भी इसके लिए शोक करना उचित नहीं, इसी को कहते हैं—

हे महाबाहो अर्जुन ! यदि तुम इस आत्मा को शरीर मानकर नित्य जन्म मरणशील भी मान लो, तब भी इसके लिए तुमको इस प्रकार शोक करना उचित नहीं है ॥ २६ ॥

जिस वस्तु की उत्पत्ति हुई है, उसका नाश निश्चित होगा, एवं जिसका विनाश होता है उसकी उत्पत्ति अनिवार्य रूप से होती है । अतएव जिसका जन्म और मृत्यु अवश्यम्भावी हों उसके लिए शोक करना उचित नहीं है ॥ २७ ॥





अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥२८॥

आश्चर्यवत्पश्यति कश्चिदेन माश्चर्यवद्वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित् ॥२९॥

---

सततपरिणामैकस्वभावत्वादिति भावः । तस्मात् - कारणात् । अपरिहार्ये- परिहर्तुमशक्ये । अर्थे - आत्मविनाशरूपे विषये । त्वम् । शोचितुं नार्हसि ॥ २७

हे भारत - अर्जुन । भूतानि - देवमनुष्यादिशरीराणि । अव्यक्तादीनि - अव्यक्तः - अनुपलब्धः, आदिः - पूर्वावस्था, येषां तानि तथोक्तानि । व्यक्तमध्यानि - व्यक्तानि - उपलब्धानि, मध्यानि - जन्ममरणान्तरालगतदेवत्वमनुष्यत्वाद्यवस्थाः, येषां तानि तथोक्तानि । अव्यक्तनिधनानि - अव्यक्तं - अनुपलब्धं, निधनं - नाशरूपोत्तरावस्था, येषां तानि तथोक्तान्येव । भवन्ति । स्वेषु स्वभावेषु वर्तन्त इत्यर्थः । अतः । तत्र - तेषां स्वभावे नाशरूपे । परिदेवना - शोकः । का-किन्निमित्तेत्यर्थः ॥ २८ ॥

एवं देहात्मवादेपि न शोकनिमित्तमस्तीत्युक्त्वा, वस्तुतस्तु देहातिरिक्त एवात्मा, सर्वाश्चर्यस्वरूपः, तन्निर्णेतातु दुर्लभ इत्याह (आश्चर्यवदिति) आश्चर्यवत् - स्वेतरसमस्तवस्तुविलक्षणतयाऽऽश्चर्यवदवस्थितम् । एनं - आत्मानम् । कश्चिदेव - सुकृती । पश्यति । तथा । आश्चर्यवदवस्थितम् । एनम् । अन्यः कश्चिदेव । परस्मै वदति च आश्चर्यवदवस्थितम् । एनम् । अन्यः कश्चिदेव । शृणोति च । किंच । एनं - आत्मानम् । अन्यः कश्चित् । श्रुत्वापि । न वेदैव-न जानात्येव ॥ २९ ॥

---

हे अर्जुन ! मनुष्य आदिक शरीर के जन्म से पहिले की अवस्था और मृत्यु के बाद की अवस्था ये दोनों ही अनुपलब्ध अथवा परिदृश्यमान् नहीं हैं । केवल जन्म और मरण के मध्य में इस मौजूदा अवस्था के शरीर की प्रत्यक्ष उपलब्धि होती है । इसलिए शरीर के इस विनाशशील स्वभाव के लिए कैसा शोक ? अर्थात् शोक मनाना सर्वथा अनुचित है ॥ २८ ॥

कोई-कोई भाग्यवान पुरुष इस आत्मा को आश्चर्य रूप से अनुभव करते हैं, और कोई-कोई इस आश्चर्य रूप आत्मतत्व का दूसरों को उपदेश देते हैं । कोई इस आत्मतत्व की कथा श्रवण करते हैं किन्तु इतना करने पर भी उसका यथार्थ तत्व ज्ञात नहीं हो पाता है ॥ २९ ॥

देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।
तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥३०॥
स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥३१॥

---

उक्तमात्मस्वरूपं संक्षेपेण वदन्नुपसंहरति (देहीति) सर्वस्य - देव-मनुष्यादेः । देहे, विद्यमानः । अयं, देही-आत्मा । नित्यं - सर्वदा । अवध्यः - अवधार्हः । तस्मात् - कारणात् । हे भारत । सर्वाणि - देवादिस्थावरान्तानि, भूतानि प्रति । त्वम् । शोचितुम् । नार्हसि । "धर्म्याद्धियुद्धाच्छ्रेयोन्यत्क्षत्रियस्य नविद्यत" इति भावः ॥ ३० ॥

एवं शोकस्यानर्हतामुक्त्वा - 'वेपथुश्च शरीरे मे' इत्याद्युक्त शरीरकंपस्याप्यनर्हत्वमाह ( स्वधर्ममिति ) अपिच - किंच । इदं प्रारब्धं युद्ध प्राणिमरणरूपमप्यग्नीषोमीयपश्वालम्भमिव । स्वधर्मं - स्वस्य धर्मं, क्षत्रियस्य धर्मशास्त्रविहितमर्थम् । अवेक्ष्य - विज्ञाय । विकम्पितुं - प्रकम्पितुम् । नार्हसि । हि - यस्मात्कारणात् । क्षत्रियस्य । धर्म्यात् - धर्मादनपेतात्, न्यायतः प्रवृत्तादित्यर्थः । युद्धात् । अन्यत् - इतरत् । श्रेयः - श्रेयस्करम् । नविद्यते - नास्ति ॥ ३१ ॥

कम्पस्यानर्हतामेव युक्त्यन्तरेणाप्याह (यदृच्छयेति) किञ्च । हे पार्थ । यदृच्छया - स्वयमेव । उपपन्नं - प्राप्तम् । अपावृतं - आवृतं - आवरणं -

---

आत्म स्वरूप विवेचना का उपसंहार करते हैं-- हे भरत वंश श्रेष्ठ ! देवता मनुष्य, पशु, पक्षी आदिक समस्त देहों में देही रूप से अवस्थित यह आत्मा सर्वदा अवध्य है अर्थात् उसका वध नहीं किया जा सकता है । देह के नष्ट होने पर भी देही आत्मा नष्ट नहीं होता है । इसलिये देह नष्ट होने पर भी किसी प्राणी के लिए शोक करना उचित नहीं है ॥ ३० ॥

इस प्रकार इससे पूर्व में कहा गया कि शोक करना क्योंकर उचित नहीं है । अर्जुन ने कहा था कि 'वेपथुश्च शरीर मे' मुझे शरीरकम्प हो रहा है जो कि अनुचित है उसी को कहते हैं--

प्रस्तुत युद्ध को क्षत्रियों का स्वधर्म जानकर तुम्हारा विचलित होना उचित नहीं अर्जुन ! इसका भी कारण है कि क्षत्रियों के लिए धर्मयुद्ध की अपेक्षा कल्याण कारक और कुछ भी नहीं है ॥ ३१ ॥





यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ ३२॥
अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिं च हित्वा पापवाप्स्यसि ॥३३॥
अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥३४॥

---

प्रतिबन्धकं, अपगतमावृतं - यस्य तत्तथोक्तम् । स्वर्गद्वारं - स्वर्गस्य - निरतिशयसुखरूपमोक्षस्य, द्वारं - उपायभूतम् । ईदृशं - एवंरूपम् । युद्धम् । सुखिनः - भाग्यवन्तः । क्षत्रियाः । लभन्ते - प्राप्नुवन्ति । भवद्भाग्यवशादीदृशे महति श्रेयसि स्वयमेवोपगमे सति कुतः प्रकम्प इति भावः ॥ ३२ ॥

एवं युद्धकरणेऽभ्युदयमुक्त्वा तदकरण आवरणरहितं दोषमाह "अथे" त्यादिश्लोकचतुष्टयेन ॥ अत्राथशब्दः पक्षान्तरद्योतकः त्वम् । धर्म्यं - न्याय्यं । इमम् - यदृच्छासम्प्राप्तम् । संग्रामं - युद्धम् । न करिष्यसि चेत् । ततः - युद्धाकरणाद्धेतोः । स्वधर्मं - क्षत्रियवर्णधर्मं । कीर्तिम् - यशश्च । हित्वा-विहाय । पापं - दुरितम् । अवाप्स्यसि ॥ ३३ ॥

किञ्च । भूतानि - सर्वप्राणिनः । ते - तव । अव्ययां - सर्वदेशकालव्यापिनीं । अकीर्तिं - पार्थो युद्धे पलायित इत्येवं रूपमयशोपि । कथयिष्यन्ति । भवत्वकीर्तिः किं तत इत्यत्राह (सम्भावितस्येति) सम्भावितस्य-शौर्यादिगुणैरभिमतस्य पुरुषस्य । अकीर्तिः । मरणाच्च - मरणादपि । अतिरिच्यते - अधिकाभवति । एवंविधा कीर्तिश्रवणादपि मरणमेव तव श्रेय इति भावः ॥ ३४

---

हे पार्थ ! स्वर्ग प्राप्ति के उपाय रूप ऐसे धर्मयुद्ध की प्राप्ति केवल पुण्यात्मा क्षत्रियों को भाग्य से ही घटित होती है अर्थात् तुम्हारे भाग्योदय के कारण से ही महान् कल्याणकारी यह युद्ध अनचाहे रूप से आकर उपस्थित हुआ है, अतएव तुम्हारा इससे विचलित होना उचित नहीं है ॥ ३२ ॥

अब इसके विपरीत पक्ष से विचार करो, यदि तुम क्षत्रिय होकर इस प्रकार इस धर्मयुद्ध को नहीं करोगे तो क्षत्रियोचित अपने धर्म और आश्रमोचित धर्म एवं यश को त्यागकर उलटे पाप के भागी होगे । इसके अतिरिक्त सम्पूर्ण संसार सदैव तुम्हारी अकीर्ति का गान करेगा, तुम जैसे प्रतिष्ठित पुरुष के लिए इस तरह का

भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥३५॥
अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः ।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥३६॥
हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीं ।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥३७॥

---

बन्धुविषयस्नेहकारुण्याभ्यां युद्धान्निवृत्तस्य शूरस्य मम कथमकीर्तिरागमिष्यतीत्यत्राह (भयादिति) महारथाः - शूरा दुर्योधनादयः । त्वां भवन्तम् । भयात् - हेतोः । रणात् - युद्धात् । उपरतं । निवृत्तव्यापारम् । मंस्यन्ते - मन्येरन्नित्यर्थः । येषां - महारथानां च । बहुमतः - बहुमानविषयः । भूत्वा । इदानीं । लाघवं - युद्धान्निवृत्ततया सुग्रहतां । यास्यसि-गमिष्यसि ॥ ३५

तव । अहिताः - शत्रवो दुर्योधनादयः । तव । सामर्थ्यं । निन्दन्तः - विहर्गमाणास्सन्तः । बहून् - अमितान् । अवाच्यवादान् - अवाच्याः - वक्तुमनुचिताः, वादाः - वचनानि, तांश्च । वदिष्यन्ति । ततः - अवाच्यवादश्रवणात् । दुःखतरम् । किंनु - किमस्ति । तदेव सर्वातिशयितं दुःखमिति भावः ॥ ३६

एवं युद्धाकरणे बाधकमुक्त्वा - "यच्छ्रेयस्स्यान्निश्चितं ब्रूहि" त्यर्जुनेन पृष्टं निश्चितमर्थमाह (हतोवेति) हतो वा - धर्मयुद्धे शत्रुभिर्हतश्चेत् ।

---

अयश मरने से भी अधिक दुःखदायी होगा । दुर्योधन आदिक तुम्हारे विपक्षी सोचेंगे कि तुम भयभीत होकर युद्ध से पीछे हट रहे हो । इतने दिनों तक तुम सम्पूर्ण वीरों के समक्ष अत्यन्त आदरणीय रहे हो, इस समय तुम उन्हीं के सामने तुच्छ गिने जाओगे, तुम्हारे अहित को चाहने वाले ये शत्रुगण तुमको कमजोर समझकर तुम्हारी निन्दा करेंगे और इस प्रकार की निन्दा से अधिक दुःखका विषय क्या होगा ॥३३-३६

अब हमारे लिए जो श्रेयष्कर हो उसे कहिये — अर्जुन के इस मूल प्रश्न का उत्तर देते हुए भगवान कहते हैं—हे अर्जुन ! यदि तुम इस धर्म युद्ध में मारे गये तो फलाभिसन्धि रहित हो इस धर्म युद्ध में मारे जानेसे निरतिशय-सुखरूप मोक्ष लाभ करोगे और यदि युद्ध में विजयी हो गये तो इस पृथ्वी के अधीश्वर होकर राज्य भोग करोगे । इस प्रकार दोनों प्रकार से मङ्गल ही जानकर युद्ध करने के लिए उठकर खड़े हो जाओ ॥ ३७ ॥





सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥३८॥
एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ।
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥३९॥

---

स्वर्गं - निरतिशयसुखलक्षणं मोक्षम् । प्राप्स्यसि । फलाभिसन्धिरहितस्य धर्मयुद्धस्य मोक्षोपायत्वादिति भावः । जित्वावा - परान् जित्वातु । महीं-भूमिम् । भोक्ष्यसे - अनुभविष्यसि । तस्मात् - उभयथापि श्रेयस्साधनत्वात् । हे कौन्तेय । कृतनिश्चयः – कृतः, निश्चयः – युद्धमुभयथापि श्रेयसाधनमित्येवं रूपनिर्णयः, येन सतथोक्तस्सन् । युद्धाय - युद्धं कर्तुं । उत्तिष्ठ ॥ ३७ ॥

मुमुक्षोर्युद्धानुष्ठानप्रकारमाह (सुखेति) सुखदुःखे - हर्षविषादौ । समे । कृत्वा । लाभालाभौ - तद्धेतुभूतार्थ प्राप्त्यप्राप्ती । जयाजयौ - तद्धेतुभूतजयपराजयौ च । समौकृत्वा । तैरविकृतबुद्धिस्स्वर्गादिफलाभिसन्धिरहितस्सन्निति यावत् । ततः - तदनन्तरम् । युद्धाय । युज्यस्व - सन्नद्धोभव । एवं - आत्मयाथात्म्य ज्ञानपूर्वकं - फलाभिसन्धिरहितयुद्धकरणे सति । पापं-दुःखरूपसंसारम् । नावाप्स्यसि-संसारान्मुक्त एव भविष्यसीत्यर्थः ॥३८॥

एवमात्मयाथात्म्यज्ञानमुपदिश्य तत्पूर्वकम्मोक्षसाधनभूतं कर्मयोगं वक्तुमुपक्रमते (एषेति) हे पार्थ ! सांख्ये - संख्या - ज्ञानं, तस्या इदं सांख्यं-ज्ञातव्यमात्मतत्त्वं, तस्मिन् विषये । एषा । बुद्धिः - ज्ञानम् । ते - तव ।

---

और हे अर्जुन ! युद्ध में जय पराजय उससे होने वाला राज्य लाभ व राज्य नाश एवं उससे भी होने वाला सुख और दुःख इन दोनों को ही समान समझो, अर्थात् फलाभिसन्धि रहित होकर युद्ध करने में प्रवृत्त हो ओ । इस प्रकार निष्काम भाव से युद्ध करने से दुःख—समुद्र रूप संसार का भोग नहीं करना होगा । अर्थात् संसार से मुक्ति मिल सकेगी ॥ ३८ ॥

( अब तक आत्म तत्व का यथार्थ उपदेश किया गया, अब तत्वज्ञान पूर्वक मोक्षोपाय कर्मयोग का उपदेश आरम्भ करते हैं ) ।

हे अर्जुन ! यहाँ तक तुम्हें आत्मतत्व विषयक ज्ञान का उपदेश दिया गया । अब तुम्हें आत्म स्वरूप विषयक उपदेश देते हैं । जिस प्रकार की बुद्धि का सहारा लेकर कर्म का अनुष्ठान करने से उस कर्म से पैदा होने वाले संसार बन्धन से मुक्ति लाभ की जा सकती है उसे अब कहते हैं, तुम सुनो ॥ ३९ ॥

**नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।**
**स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥४०॥**
**व्यवसायात्मिकाबुद्धिरेकेह कुरुनन्दन ।**
**बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥४१॥**

---

अभिहिता - नत्वेवाहमित्यारभ्योपदिष्टां । योगे - आत्मज्ञानपूर्वक मोक्ष-साधनभूतकर्मविषयेतु । इमां - बुद्धिमभिधीयमानां । शृणु । यया । बुद्धया - कर्मयोगबुद्धया । युक्तः । त्वं । कर्मबन्धं - कर्मकृतसंसारबन्धम् । प्रहास्यसि - त्यक्ष्यसीत्यर्थः ॥ ३९ ॥

वक्ष्यमाणबुद्धियुक्तकर्मणो माहात्म्यमाह (नेति) इह - वक्ष्यमाणस्व-रूपे कर्मयोगे । अभिक्रमनाशः - अभिक्रमस्य - आरम्भमात्रस्यापि, नाशः - निष्फलत्वम् । नास्ति । आरब्धस्य विच्छेदेपि । प्रत्यवायः । न विद्यते । अस्य - कर्मयोगाख्यस्य । धर्मस्य । स्वल्पमपि - स्वल्पांशोपि । महतः - अधिकात् । भयात् - संसारभयात् । त्रायते - रक्षति । अन्यानि लौकिकानि वैदिकानि च फलसाधनकर्माणि विच्छेदे फलायन भवन्ति, प्रत्युत प्रत्यवायाय च भवन्ति, अयं तु कर्मयोगो वृथा न भवतीति भावः ॥४०॥

काम्यकर्मविषयबुद्धयपेक्षया मोक्षसाधनभूत कर्मविषयां बुद्धिं विशिनष्टि ( व्यवसायात्मिकेति ) हे कुरुनन्दन - अर्जुन । इह - मुमुक्षूणामनुष्ठेये

---

इस प्रकार के बुद्धियुक्त कर्म का कोई भी अंश व्यर्थ नहीं होता, केवल आरम्भ होने पर भी इस कर्म के निष्फल होने का भय नहीं होता, क्योंकि कर्मयोग रूप धर्म के स्वल्प मात्रा में भी अनुष्ठित होने से वह संसार रूपी महाभय से रक्षा करेगा ॥ ४० ॥

( 'सकाम कर्म बुद्धि की अपेक्षा निष्काम कर्म विषयक बुद्धि मोक्षोपायभूत है' यह बात बताते हैं— ) ।

हे कुरुनन्दन अर्जुन ! अविनाशी आत्मतत्व के प्रति सम्पूर्ण रूप से विश्वास रख उसके लिए निष्काम कर्मरूपी कर्मयोग मोक्ष प्राप्ति का उपाय है इस प्रकार की एकमात्र बुद्धि सुनिश्चित करके साधक को कर्मयोग का अनुष्ठान करना उचित है । जिसको आत्मा के विषय में इस प्रकार की बुद्धि या विश्वास सुदृढ़ नहीं होता, उनकी बुद्धि धन, धान्य, पुत्र, स्त्री, यश आदि अनेक कार्यों में अभिनिविष्ट रहती है और वह एक ही कर्म की बहुत प्रकार की फलाकांक्षारूप शाखाओं से युक्त होता है । अर्थात् सकाम कर्म की अपेक्षा निष्काम कर्मयोग ही श्रेष्ठ है ॥ ४१ ॥





**यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।**
**वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥४२॥**
**कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदां ।**
**क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥४३॥**

---

कर्मयोगे विषये । व्यवसायात्मिका - आत्मस्वरूपनिश्चयरूपा । बुद्धिः । एका - मोक्षरूपैकफलविषयात्वादेकविधा । अव्यवसायिनां - आत्मस्वरूप-याथात्म्यनिश्चयरहितानां । बुद्धयः - स्वानुष्ठीयमानकाम्यकर्मविषयक-धियः । अनन्ताः - अनन्तप्रकाराः । स्वर्गपुत्रपशुवृष्टयन्नादिप्रधानफलाना-मनन्तत्वादिति भावः । बहुशाखाः - एकस्मिन्नपि कर्मण्यवान्तरफलभेदा द्बहुप्रकाराश्च भवन्तीत्यर्थः । अतः काम्यकर्मापेक्षया मोक्षसाधनभूतः कर्म-योगो ज्यायानिति भावः ॥ ४१ ॥

अथ काम्यकर्माणि निन्दति "यामिमामि" त्यादिश्लोकत्रयेण । हे पार्थ ! वेदवादरताः - वेदेषु, ये वादाः - स्वर्गादिफलवादाः, तेषु, रताः - आसक्ताः । कामात्मानः - कामे - कामपुरुषार्थे, आत्मा - मनः, येषां ते तथोक्ताः । स्वर्गपराः - स्वर्गपरायणाः । नान्यदस्तीति । वादिनः - वदन्तः, अविपश्चितः - अल्पज्ञानाः । भोगैश्वर्यगतिं प्रति - भोगः - स्वर्गाद्यनुभवः, स एवैश्वर्यं, तस्य, गतिं - प्राप्तिंप्रति । वर्तमानां । पुष्पितां - पुष्पितमात्रां, आपातरमणीयामित्यर्थः । जन्मकर्मफलप्रदां - स्वर्गादिफलावसाने पुनः कर्मभूमौ जन्मरूपं यत्कर्मफलं, तत्प्रदाम् । क्रियाविशेषबहुलां तत्त्वज्ञानव-विधुरतया क्रियाविशेषैः प्रचुराम् । यामिमाम् । वाचं स्वर्गादिफलश्रुतिम् ।

---

( अब तीन श्लोकों से सकाम कर्म की निन्दा करते हैं ) ।

हे अर्जुन ! जो इस वेदोक्त काम्यकर्म के फलवाद में आसक्त हैं और जो कामनायुक्त हैं, स्वर्ग प्राप्त करना चाहते हैं, जो स्वर्ग सुख से श्रेष्ठ दूसरा सुख नहीं यह कहते हैं ऐसे अज्ञानी मनुष्य भोग ऐश्वर्य की प्राप्ति के उपाय रूप, आपात सुन्दर लगने वाले, पुनर्जन्म रूप कर्मफल को देने वाले एवं बहुत-सी क्रियाओं से युक्त-यज्ञादि से होने वाले स्वर्गादि फल वेद के द्वारा कथित हैं, इन वेद वाक्यों द्वारा विमूढ़ बुद्धि वाले व्यक्ति भोग और ऐश्वर्य में अत्यासक्त रहते हैं, उसके मनमें व्यवसायात्मिका बुद्धि उत्पन्न ही नहीं होती है अतः मोक्ष चाहने वाले को काम्य कर्मों में आसक्त होना उचित नहीं है ॥ ४२ ॥ ४३ ॥ ४४ ॥

**भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् ।**
**व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ।।४४।।**
**त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।**
**निर्द्वन्द्वो नित्यसत्वस्थो निर्योगक्षेम आत्मवान् ।।४५।।**

---

अभिभूतं, चेत: - आत्मविषयं मनः, येषां तेषां, प्रतिहृतात्मज्ञानानामित्यर्थः । अतएव । भोगैश्वर्यप्रसक्तानां - भोगैश्वर्ये, प्रसक्तानां - प्रकर्षेण सक्तानां जनानां । समाधौ - समाधीयते - उत्पाद्यते अस्मिन्नात्मज्ञानमिति समाधिः-मनः, तस्मिन् । व्यवसायात्मिका । बुद्धिः - पूर्वोक्ता । न विधीयते - नोत्पद्यत इत्यर्थः । अतः काम्येषु कर्मसु मुमुक्षुणा सङ्गो न कर्तव्य इति भावः ।। ४२ ।। ४३ ।। ४४ ।।

नन्वेवमप्यल्पफलानि पुनर्जन्मप्रदानि कर्माण्यात्मोज्जीवन प्रवृत्ता वेदाः किमर्थं प्रतिपादयन्ति, तत्राह (त्रैगुण्येति) वेदाः । त्रैगुण्यविषयाः - त्रयः, गुणाः - सत्त्वरजस्तमांस्येव त्रैगुण्यं, अत्र त्रैगुण्यवन्तः पुरुषा स्त्रैगुण्य-शब्देनोच्यन्ते, अत्र - त्रयोगुणा येषां ते त्रिगुणाः - त्रिगुणा एव त्रैगुण्या इति योजनान्तरं, तद्विषयाः - तेषां हितप्रतिपादका इत्यर्थः । यदि वेदेन त्रैगुण्य-वतां पुरुषाणां तत्तदधिकारानुगुणं हितं न प्रतिपाद्येत ततस्ते वेदेष्वप्रामाण्य बुद्ध्या विनश्येयुरिति भावः । हे अर्जुन ! त्वन्तु । निस्त्रैगुण्यः - गुणत्रय-रहितः । भव । इदानीं विद्यमानं सत्त्वप्राचुर्यमेव वर्धय, सत्वन्योन्यसंकीर्ण-गुणत्रयप्रचुरो भवेत्यर्थः । निस्त्रैगुण्यताप्राप्त्युपायमाह (निर्द्वन्द्वइति) प्रवदन्ति - प्रकर्षेण वदन्ति । तया - वाचा । अपहृतचेतसां - अपहृतं -

---

**हे अर्जुन ! सात्विक, राजस और तामस इन तीन प्रकार के पुरुषों के लिए अपने अधिकारानुसार हितकर उपदेश वेदों में भरे पड़े हैं ।**

**किन्तु तुम अपने राजस और तामस भावों का परित्याग कर केवल सात्विक भावयुक्त हो जाओ अर्थात् तुम सुख, दुःख, लाभ-हानि, शीत-उष्ण आदिक द्वन्द्वों से मुक्त होकर सांसारिक वस्तु की प्राप्ति (योग) एवं उसकी रक्षा (क्षेम) करने के लिए अभिलाषा शून्य होकर, प्रतिदिन बढ़ने वाले सत्वगुण से युक्त हो जाओ और आत्मा की खोज करो ।। ४५ ।।**



**यावानर्थ उदपाने सर्वतः संप्लुतोदके ।**
**तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ।।४६।।**
**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।**
**मा कर्मफलहेतुर्भूर्मा ते संगोऽस्त्वकर्मणि ।।४७।।**

---

निर्द्वन्द्वः - सुखदुःखशीतोष्णलाभालाभादियुगलानि द्वन्द्वानि, तद्रहितः । भव - तानि सहस्वेत्यर्थः । नित्यसत्त्वस्थः - नित्यं - गुणद्वयरहिततया नित्यप्रवृद्धं, यत्सत्त्वं, तस्मिन् तिष्ठतीति तथोक्तः । कथमित्यत्राह ( निर्योगक्षेमइति ) निर्योगक्षेमः - अप्राप्तस्वीकारो योगः, प्राप्तस्य परिपालनं क्षेमः, तद्रहित इत्यर्थः । आत्मवान् - आत्म स्वरूपान्वेषणपरश्च, भवेत्यर्थः । एवं वर्तमानस्य ते रजस्तमः प्रचुरता नश्यति, सत्त्वं च वर्धत इति भावः ।। ४५ ।।

न च वेदोदितमित्येव सर्वं सर्वस्योपादेयमित्याह (यावानिति) यथा । सर्वतस्संप्लुतोदके - सर्वतः - सर्वतः - समंतात्, संप्लुतं - समग्रं, उदकं यस्मिन् तत्तथोक्तं, तस्मिन् । उदपाने - उदकं पीयतेऽस्मिन्नित्युदपानं - सर्वार्थतया परिकल्पितं तटाकादिकं, तस्मिन् । पिपासोः । यावानर्थः - यावदेव-प्रयोजनं । तावानेवार्थ उपादीयते । एवं । सर्वेषु वेदेष्वपि । ब्राह्मणस्य-वैदिकस्य । विजानतः - ज्ञानिनो मुमुक्षोः । यावानेवार्थः - मोक्षसाधनरूपः । तावानेवोपादेयः । न सर्वोपीत्यर्थः ।। ४६

मुमुक्षूपादेयमत्र दर्शयति ( कर्मणीति ) ते-तव मुमुक्षोः । कर्मण्येव - नित्यनैमित्तिकादिकर्मस्वरूपमात्र एव । अधिकारः - इच्छा । फलेषु - तत्साध्यतयाऽवगतेषु स्वर्गादिफलेषु । कदाचन कदाचिदपि । मा - अधिकारो-

---

**वेदों में उक्त सम्पूर्ण उपदेश सभी के लिए उपादेय नहीं होते जैसे बहुत से लोगों के लिए बहुत से प्रयोजनों की सिद्धि के लिए तालाब आदि का निर्माण होता है, किन्तु प्यास से पीड़ित व्यक्ति उस सम्पूर्ण जलाशय से उतना ही जलपान करता है जितने से उसकी तृषा शान्त हो जाती है । उसी प्रकार ज्ञानी एवं मुमुक्षु वैदिक पुरुषों को सब प्रकार के अधिकारियों के लिए कहे गये वेद वाक्यों में से केवल मोक्ष साधन के उपयोगी अंश ही उपादेय होते हैं, सम्पूर्ण वेद नहीं ।। ४६**

**मुमुक्षुओं को क्या उपादेय है उसी को बताते हैं—**

**हे अर्जुन ! तुम्हारा केवल शास्त्र विहित कर्म करने में ही अधिकार है उन उन कर्मों के फल में कदापि अधिकार नहीं है । कर्म में कर्तृत्व बुद्धि करने से उस**

**योगस्थः कुरु कर्माणि संगं त्यक्त्वा धनञ्जय ।**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥४८॥**

**दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय ।**
**बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥४९॥**

माभूदित्यर्थः । सफलस्य कर्मणो बन्धहेतुत्वात्फलरहितस्य केवलमदाराधन रूपस्य मोक्षहेतुत्वाच्चेति भावः । कर्मफलहेतुः-कर्म च फलं च कर्मफले,तयोः, हेतुः - कर्ता । माभूः - त्वयाऽनुष्ठीयमाने कर्मणि तत्फले च तवाकर्तृत्व-मप्यनुसन्धेयं । अकर्मणि - न योत्स्यामीति त्वदभिहिते कर्माननुष्ठाने । ते - तव । संगः - कामः । मास्तु । उक्तप्रकारेण युद्धादिकरणएव सङ्गोऽ-स्त्वित्यर्थः ॥ ४७

तदेव स्फुटीकरोति (योगस्थ इति) हे धनंजय - अर्जुन ! सङ्गं राज्य-बन्धुप्रभृतिष्वासक्तिं । त्यक्त्वा । सिद्ध्यसिद्ध्योः - जयादिसिद्ध्यसिद्ध्योः । समः - तुल्यः । भूत्वा । योगे तिष्ठतीति योगस्थः स सन् । कर्माणि - नित्य-नैमित्तिकादीनि । कुरु । योगशब्दार्थं स्वयमेवाह (समत्वमिति) समस्य-भावस्समत्वं - सिद्ध्यसिद्ध्योरविकृतचित्तत्वं । योग इत्युच्यते ॥ ४८

किमर्थमिदमसकृदुच्यत इत्यत्राह दूरेणेति) हे धनंजय ! बुद्धियो-गात् - बुद्ध्या योगो यस्य तद्बुद्धियोगं, तस्मात्, बुद्धिः-प्रधानफलत्यागविष-

कर्म के फल का भोगी भी होना होगा, इसलिए तुम्हें उचित है कि तुम कर्म में कर्तृत्व बुद्धि करके कर्मफल का हेतु भी नहीं हो अर्थात् तुम फलाभिसन्धि रहित हो एवं कर्तृत्व बुद्धि रहित हो शास्त्र विहित, अपने वर्णाश्रमो चित कर्म करो क्योंकि इस प्रकार के कर्म ही मोक्ष साधनभूत हैं, करणीय हैं ॥ ४७ ॥

हे धनञ्जय ! करने योग्य जितने भी नित्य नैमित्तिक कर्मों में फल की प्राप्ति अथवा फल की अप्राप्ति दोनों के प्रति सम बुद्धियुक्त होकर आसक्ति त्यागकर योग में स्थित होकर कर्म करो । कार्य की सिद्धि और असिद्धि दोनों में समान भावना या समबुद्धि ही 'योग' कहा जाता है॥४८

हे अर्जुन ! प्रधान अथवा आनुषङ्गिक जितने भी कर्मफलों का त्याग विशिष्ट-कर्मों में सिद्धि अथवा असिद्धि में भी समत्व बुद्धि युक्त कर्म की अपेक्षा फलाभिसन्धि युक्त जितने भी काम्य कर्म हैं वे सबके सब निकृष्ट हैं, अतः तुम इस प्रकार की समत्व बुद्धि का आश्रय लेकर फलाभिसन्धि रहित होकर, नित्य नैमित्तिकादि सम्पूर्ण कर्म करो । जो फल की आशा से कर्म करते हैं उन्हें संसार बन्धन से आबद्ध होना पड़ता है, अतएव वे बहुत दीन होते हैं ॥४९





**बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।**
**तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥५०॥**
**कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।**
**जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥५१॥**

विषयिणी - अवान्तरफल सिद्ध्यसिद्धिसमत्वविषयिणी च धीः, तद्युक्तात्कर्मण इत्यर्थः । कर्म - काम्यकर्म । दूरेणावरंहि - अत्यन्तनिकृष्टं हीत्यर्थः । बुद्धि-युक्तं हि कर्म परमपुरुषार्थलक्षणम्मोक्षं प्रापयति, इतरत्त्वपरिमितदुःखरूपं संसारमिति महद्वैषम्यमुभयोरिति भावः ॥ अतःकर्मकुर्वाणः । बुद्धौ - उक्त-रूपायां । शरणं - वासस्थानं । अन्विच्छ - तस्यामेव वर्तस्वेत्यर्थः । फलं, हेतुः - प्रवृत्तिकारणं, येषां ते फलहेतवः - फलसंगादिना कर्मकुर्वाणा इत्यर्थः । कृपणाः - संसारिणो भवेयुरित्यर्थः ॥ ४९

बुद्धियोगयुक्तस्तु श्रेष्ठ इत्याह (बुद्धीति) बुद्धियुक्तः - कर्मणि क्रियमाणे सत्युक्तरूपया बुद्ध्या युक्तः पुरुषः । इह - अस्मिन्नेव जन्मनि । उभे । सुकृ-तदुष्कृते - अनादिकालसंचिते संसारहेतुभूते पुण्यपापरूपे कर्मणी । जहाति - त्यजति । तस्मात् - कारणात् । योगाय-उक्तरूपाय बुद्धियोगाय । युज्यस्व-यतस्व । कर्मसु क्रियमाणेषु । योगः - बुद्धियोगः । कौशलं - सामर्थ्यम्, अतिसामर्थ्यसाध्यइत्यर्थः ॥ ५० ॥

पूर्वोक्तमेव बुद्धियुक्तस्य श्रैष्ठ्यं विवृणोति (कर्मजमिति) मनीषिणः - देहातिरिक्तात्मज्ञानिनः । बुद्धियुक्ताः-उक्तरूपया बुद्ध्या युक्तास्सन्तः । कर्मजं कर्मजन्यं । फलं - स्वर्गादिरूपं । त्यक्त्वा । कर्म कुर्वन्त इत्यर्थसिद्धम् । जन्म-

जो व्यक्ति समस्त कर्मोंकी सिद्धि अथवा असिद्धिमें समत्व बुद्धि युक्त होकर उन कर्मों को करते हैं वे इसी जन्म में कर्म से होने वाले अनादि काल से संचित संसार बन्धन के कारणरूप पुण्य-पाप दोनों को ही परित्याग करते हैं, अर्थात् पाप पुण्य से उद्धार पा लेते हैं । अतः तुम इस प्रकार समत्व बुद्धि युक्त होकर कर्म करने की चेष्टा करो । यही समत्व बुद्धियोग ही सम्पूर्ण कर्मों में कुशलता अर्थात् कल्याण जनक शक्ति कहा जाता है ।

( अतः बुद्धियुक्त कर्म ही पाप - पुण्य रूप अनिष्ट निवृत्ति का कारण एवं मोक्षरूप इष्ट प्राप्ति का उपाय रूप अत्यन्त सामर्थ्य शक्ति वाला है ) ॥ ५०

बुद्धियुक्त पुरुष की श्रेष्ठता विशदरूप से कहते हैं । शरीर से अतिरिक्त आत्म-ज्ञानी मनीषी जन पूर्वोक्त बुद्धियुक्त होकर कर्मफल एवं कर्मकर्तृत्व की आसक्ति से

**यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।**
**तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥५२॥**
**श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।**
**समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥५३॥**

---

बन्धविनिर्मुक्ताः - जन्मरूपेणबन्धेन, विनिर्मुक्ताः - सवासनं निर्मुक्तास्सन्तः । अनामयं - न विद्यन्ते, आमयाः - व्याधयः, यस्मिन् तत् - निरुपद्रवमित्यर्थः । पदं - स्थानं । गच्छन्ति - प्राप्नुवन्ति । अस्यार्थस्य सर्वोपनिषत्प्रसिद्धत्वं द्योतयति हि शब्दः ॥ ५१ ॥

कर्मयोगानुष्ठानेन वक्ष्यमाणयोगोपयुक्तं चित्तशुद्ध्यादिकमाह (यदेति) यदा - यस्मिन्काले । ते - उक्तप्रकारेण कर्मकुर्वतस्तव । बुद्धिः - चित्तं । मोहकलिलं - देहात्माभिमानरूपं कलुषं । व्यतितरिष्यति - विशेषेणातिक्रामति । तदा - तस्मिन् काले । श्रुतस्य - इतःपूर्वं मत्सकाशात्त्याज्यतया श्रुतस्य फलादेः । श्रोतव्यस्य इतः परं श्रोष्यमाणस्य चार्थस्य । कृत-इतिशेषः । निर्वेदं - निष्फलत्वबुद्धिं, विरागमितियावत् । गन्तासि - स्वयमेव गमिष्यसि ॥५२ ॥

उक्तस्य कर्मयोगस्य लक्ष्यभूतं योगाख्यं फलमाह (श्रुतीति) श्रुतिविप्रतिपन्ना - श्रुत्या - मत्तः श्रवणेन, विप्रतिपन्ना - विशेषेण प्रतिपन्नाः अचिद्विलक्षणात्मस्वरूपयाथात्म्यविषया । अचला - एकरूपा । ते - तव । बुद्धिः-प्रज्ञा । समाधौ - अनभिसंहितफलयुद्धादिकर्मानुष्ठाननिर्मलीकृते मनसि ।

---

रहित होकर कर्मों का अनुष्ठान करते-करते सब प्रकार से बार-बार जन्म-मरण रूप संसार बन्धन से मुक्त होकर चिन्ता रहित मोक्षरूप स्थान स्वस्वरूप लाभ कर लेते हैं ॥ ५१ ॥

उपरोक्त प्रकार से बुद्धियुक्त होकर कर्म करते करते जब तुम्हारे चित्त से 'यह देह ही आत्मा है' यह अभिमान रूप मन की मलिनता-अज्ञानान्धकार दूर हो जायेगा, तभी इससे पूर्व मुझ से जो सम्पूर्ण फल-त्याग का वर्णन सुना और भविष्य में जो सभी त्याज्य फलों की बात सुनोगे, उस सम्पूर्ण के विषय में अपने आप तुम्हें वैराग्य होगा ॥ ५२ ॥

मैंने उपदेश द्वारा तुम्हें देह से अतिरिक्त आत्म वस्तु के बारे में विशेष रूप से कहा, इस प्रकार से विशिष्ट आत्मा के यथार्थ स्वरूप के विषय में दृढ़ बुद्धि होकर इस ज्ञान के अनुसार कर्मयोग के द्वारा क्रमशः तुम्हारा मन निर्मल होगा । ऐसे





अर्जुन उवाच—

**स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।**
**स्थितधीः किं प्रभाषेत किमासीत व्रजेत किं ॥५४॥**

श्रीभगवानुवाच—

**प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् ।**
**आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥५५॥**

---

यदा । निश्चला - अप्रकम्प्या सती । स्थास्यति - स्थिरा भविष्यति । तदा योगं - आत्मावलोकनम् । अवाप्स्यसि - प्राप्स्यसि । शास्त्रजन्यात्मज्ञानपूर्वकः कर्मयोगः स्थितप्रज्ञतारूपज्ञाननिष्ठां सम्पाद्यात्मावलोकनरूपं योगं सम्पादयतीति भावः ॥ ५३ ॥

एवं भगवतोक्ते पार्थः कर्मयोगसाध्यस्थितप्रज्ञताया स्स्वरूपं स्थितप्रज्ञस्यानुष्ठानप्रकारञ्च पृच्छति ( स्थितेति ) हे केशव । समाधिस्थस्य - समाधौ - शीतोष्णादिद्वन्द्वे रविकृतचित्ततारूपे समत्वे, तिष्ठतीति तथोक्तस्य । स्थितप्रज्ञस्य - स्थिता - निश्चला, प्रज्ञा यस्य - तथोक्तस्य । भाषा का - स्वरूपवाचक शशब्दः क इत्यर्थः । स्थिता धीः - प्रज्ञा, यस्य सः स्थितधीः । किं प्रभाषेत - किं भाषणादिकं कुर्यात् । किमासीत - किमासनादिकं कुर्यात् । किं व्रजेत - किं गमनं कुर्यात् ॥ ५४ ॥

स्थितप्रज्ञस्य वृत्तिविशेषकथनेन स्वरूपमप्युक्तं भवतीति वृत्तिविशेषमाह ( प्रजहातीति ) हे पार्थ ! आत्मना - आत्मैकात्रलम्बनेन मनसा ।

---

निर्मल मनमें जब इस आत्मा के स्वरूप की अविचल भाव से स्थिर धारणा करोगे बत तुम आत्म-दर्शन रूपयोग की प्राप्ति कर सकोगे ॥ ५३ ॥

अर्जुन ने कहा—हे केशव ! सुख और दुःख दोनों में समभाव एवं निर्मल मन वाले स्थितप्रज्ञ ( स्थिर बुद्धि वाले ) पुरुष के क्या लक्षण हैं ? वे किस प्रकार की बातचीत करते हैं ? किस प्रकार बैठते उठते हैं ? किस प्रकार चलते फिरते हैं ॥ ५४ ॥

भगवान् श्रीकृष्ण ने उत्तर दिया—(श्लो० ५५ से ५८ तक स्थितप्रज्ञ की चार अवस्थाओं का वर्णन करते हैं ) । हे अर्जुन ! जब किसी व्यक्ति का मन केवल आत्मा का ही अवलम्बन कर आत्मानुभव में ही सन्तुष्ट रहता है एवं आत्मवस्तु से अतिरिक्त समस्त विषयों की कामना सूक्ष्मवासना सहित सब प्रकार से त्याग देता है

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥५६॥
यः सर्वत्रानभिस्नेह स्तत्तत्प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥५७॥

आत्मन्येव - आनन्दरूपे स्वात्मन्येव । तुष्टः - सन्तुष्टस्सन् । मनोगतान् । सर्वान् । कामान् - मनोरथान् । यदा । प्रजहाति - प्रकर्षेण त्यजति । तदा । स्थितप्रज्ञ उच्यते । इयं ज्ञाननिष्ठा काष्ठा ॥ ५५ ॥

अथ ज्ञाननिष्ठस्य सन्निहितमवस्थान्तरमाह ( दुःखेष्विति ) दुःखेषु- प्रियवस्तुविश्लेषादिदुःखनिमित्तेषु - प्राप्तेष्वपि । अनुद्विग्नमनाः - अनुद्विग्नं-अदुःखितं, मनो यस्य स तथोक्तः । सुखेषु - सुखसाधनेषु । सन्निहितेष्वपि । विगतस्पृहः - विगता स्पृहा यस्य स तथोक्तः । अनागतेषु स्पृहा रागः । प्रियवस्तुविश्लेषादिहेतुदर्शनजन्यदुःखं भयम् । प्रियविश्लेषादिहेतुपरदुःखा-पादकस्त्वमनोविकारः क्रोधः । वीता रागभयक्रोधा यस्य स तथोक्तः, एवं-भूतः । मुनिः - आत्ममननशीलः । स्थितधीः - स्थितप्रज्ञः । उच्यते ॥ ५६॥

अथ तत्पूर्वावस्थामाह ( य इति ) यः । सर्वत्र - सर्वेषु प्रियवस्तुषु। अनभिस्नेहः - स्नेहशून्यः, उदासीन इत्यर्थः । तत्तत् शुभाशुभं - शुभं - अनुकूलं, अशुभं - प्रतिकूलं, तदुभयम् । प्राप्य । नाभिनन्दति - शुभं न प्रशंसति । नद्वेष्टि - अशुभं न निन्दति । किन्तु । केवलमुदासीन एव

तब उसे स्थितप्रज्ञ कहा जाता है। उस पुरुष की यह अवस्था स्थितप्रज्ञता या ज्ञाननिष्ठा की पराकाष्ठा अथवा सिद्ध अवस्था है ॥ ५५ ॥

प्रियवस्तु के विश्लेष होने से दुःख का कारण उपस्थित होने पर भी जिनको उद्वेग नहीं होता, जिन्हें सुखलाभ का कारण उपस्थित होने पर भी उस सुख की आकांक्षा नहीं होती, जो विषयों के प्रति अनुराग, भय, क्रोध रहित एवं उपर्युक्त गुणों से युक्त होकर जो केवल आत्मवस्तु विषय में ही मननशील है वे मुनिगण ही स्थितप्रज्ञ कहे जाते हैं ॥ ५६ ॥

जो व्यक्ति समस्त प्रिय वस्तुओं के प्रति स्नेह शून्य अर्थात् उदासीन एवं अनुकूल वस्तु की प्राप्ति से आनन्दित नहीं होता और प्रतिकूल वस्तु मिलने पर दुःखी नहीं होता, बल्कि दोनों ही अवस्थाओं में समान भाव से उदासीन रहता है उसी को स्थितप्रज्ञ कहा जाता है ॥ ५७ ॥





यदा संहरते चायं कूर्मोंगानीव सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥५८॥
विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोप्यस्य परं दृष्ट्वा निवर्तते ॥५९॥

भाषते । तस्य - पुरुषस्य । प्रज्ञा प्रतिष्ठिता भवति - सोपि स्थितप्रज्ञ इत्यर्थः ॥ ५७ ॥

ततोपि पूर्वावस्थामाह ( यदेति ) यदा । अयं - योगी । इन्द्रियाणि-विषयान् क्रष्टुमुद्युक्तानि चक्षुरादीनि । कूर्मः । अङ्गानि - करचरणाद्यवय-वानीव । सर्वशः - सर्वेभ्यः । इन्द्रियार्थेभ्यः - इन्द्रियाणामर्थाः - विषयाः शब्दादयः, तेभ्यः । संहरते - प्रत्याहरति । तस्य प्रज्ञाप्रतिष्ठिता भवति, सोपि स्थितप्रज्ञ इत्यर्थः ॥ ५८ ॥

एवं चतुर्विधा ज्ञाननिष्ठा प्रदर्शिता । इदानीं ज्ञाननिष्ठायादुष्प्रापतां तत्प्राप्त्युपायं चाह ( विषया इति ) आहाराः - इन्द्रियाणां भोग्यभूताश्श-ब्दादिविषयाः, निष्क्रान्त आहारेभ्यो निराहारः, विषयेभ्यः प्रत्याहृतेन्द्रिय इत्यर्थः, तादृशस्य । देहिनः । विषयाः । रसः - रागः, तद्वर्जं यथातथा । विनिवर्तन्ते । रसस्तु न निवर्तत इत्यर्थः । रसोपि । यस्य-ज्ञानिनः । परं -

जिस प्रकार कच्छप ( अछुआ ) अपने समस्त अङ्गों को समेट कर अपने भीतर ही प्रवेश कर बिलीन कर लेता है, उसी प्रकार मनुष्य जब अपनी इन्द्रियों से भोगने योग्य बाह्य विषयों ( रूप, रस, गन्ध, स्पर्श, शब्द ) से भोगने को उद्यत अपनी इन्द्रियों को रोकने में समर्थ होता है. उस समय उस व्यक्ति की बुद्धि प्रति-ष्ठित अर्थात् स्थित कही जाती है। अर्थात् चक्षु आदि इन्द्रियों से भोग्य विषयों से हठात् इन्द्रियों को लौटाकर श्रेष्ठ आत्म वस्तु में मन को लगाने का प्रयत्न करना कर्तव्य है। यह दशा यतमान दशा कही जाती है ॥ ५८ ॥

जिन व्यक्तियों की चेष्टा बाह्य इन्द्रियों को संयत करने में समर्थ हो गयी है उनके द्वारा विषयों का भोग भले ही निवृत्त हो जाय किन्तु विषयों के भोग की लालसा निवृत्त नहीं होती है। सम्पूर्ण विषयों से श्रेष्ठतम आत्म स्वरूप के दर्शन होने पर विषय भोगों की वासना स्वतः ही निवृत्त हो जाती है। साधक इस विल-क्षण उत्कृष्ट आत्मस्वरूप के उत्तरोत्तर बढ़ने वाले अनुभव से अपकृष्ट (नीचे दशा) विषय भोग की लालसा से निवृत्त हो जाता है ॥ ५९ ॥

**यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।**
**इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥६०॥**
**तानि सर्वाणि संयम्य युक्त आसीत् मत्परः ।**
**वशेहि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥६१॥**

---

विषयेभ्य स्सुखरूपतयोत्कृष्टमात्मस्वरूपम् । दृष्ट्वा - विलोक्य । निवर्तते । उत्तरोत्तरविलक्षणविषयदर्शनेन हि पूर्वपूर्वविषयरागो निवर्तत इति भावः ॥ ५९ ॥

आत्मावलोकनेन विना विषयरागो न निवर्तत इत्युक्तं प्राक् । एवं सति । हे कौन्तेय । यततोपि - आत्मावलोकनाय यत्नं कुर्वतोऽपि । विपश्चितः - शास्त्रजन्यहेयोपादेयविवेकज्ञानवतः । पुरुषस्य । प्रमाथीनि - बलवन्ति । इन्द्रियाणि । मनः विषयासक्तंचेतः । प्रसभं - बलात्कृत्य । हरन्ति - कर्षन्ति, विषयेषु बध्नन्तीत्यर्थः । अतो मनोजयात्मदर्शनयोरन्योन्यसापेक्षत्वाज्ज्ञाननिष्ठा दुष्प्रापेति भावः ॥ ६० ॥

तानि - विषयानुरागयुक्ततया दुर्जयानि । सर्वाणि - इन्द्रियाणि । संयम्य - विषयेभ्यः प्रत्याहृत्य । मत्परः - अहमेव, परः - मनसो विषयः, यस्य स मत्परः, शुभाश्रयभूते मयि निवेशितचित्त इत्यर्थः । युक्तस्सन् - मत्स्वरूपयोगवान् सन् । आसीत वसेदित्यर्थः । तथा च अहमेव तस्य हृदये स्थित्वा मनो निर्मलीकृत्येन्द्रियाणि तद्वशीकरोमीति भावः । ततः किमित्यत्राह ( वशइति ) यस्य - योगिनः । इन्द्रियाणि - मनः प्रभृतीनि । वशे । वर्तन्ते । तस्य । प्रज्ञा । प्रतिष्ठिता । भवति हि । एवं स्थितप्रज्ञतायां जातायां सत्यामात्मावलोकनरूपो योगस्सुलभो भवतीति भावः ॥६१

---

**हे अर्जुन ! इन्द्रियों को संयमित करके आत्मस्वरूप दर्शन के लिए प्रयत्नशील शास्त्रवेत्ता और विवेकी पुरुष के विषय-आसक्त मन को भी प्रबल एवं दुर्जय इन्द्रियों का समुदाय बलपूर्वक आकर्षण करके विषयों के भोग में आबद्ध कर देता है। इसलिए यह ज्ञाननिष्ठा अत्यन्त कठिन वस्तु है ॥ ६० ॥**

**साधक साधन काल में प्रबल एवं दुर्जय मन आदि इन्द्रियों को विषयों से संयमित करके कल्याण गुणनिधि मुझ में मन लगाकर भावनायुक्त होकर रहता है, ऐसा होने से अन्तर्यामी मैं भीतर से उसका मन निर्मल करके इन्द्रियों को उसके वश में कर देता हूँ और जिसके वश में इन्द्रियाँ होती हैं उसी की बुद्धि दृढ़ होती है अर्थात् वही 'स्थितप्रज्ञ' है ॥ ६१ ॥**





**ध्यायतो विषयान् पुंसः संगस्तेषूपजायते ।**
**संगात्संजायते कामः कामात्क्रोधोऽभिजायते ॥६२॥**
**क्रोधाद्भवति सम्मोहः सम्मोहात्स्मृतिविभ्रमः ।**
**स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात् प्रणश्यति ॥६३॥**

---

अनेन - किमासीतेत्यस्योत्तरमुक्त्वा स्वयत्नगौरवेणैवेन्द्रियजये प्रवृत्तस्तु नश्येदित्याह "ध्यायत" इत्यादिश्लोकद्वयेन । विषयान् - शब्दादीनेव। ध्यायतः - अनादिवासनयाऽनुचिन्तयतः । पुंसः - मय्यनिवेशितचित्तस्य पुरुषस्य । तेषु - विषयेषु । सङ्गः - रागः । उपजायते - प्रवृद्धो भवति । सङ्गात् - विषयानुरागात् । कामः । सञ्जायते । कामो नाम सङ्गस्य परिपाकावस्था, यस्मिन् सति पुरुषो विषयानभुक्त्वा स्थातुं न शक्नोति । कामात् । क्रोधः । अभिजायते । कामे सति विषयस्यालाभे सन्निहितजनं प्रति - अनेन मदिष्टं प्रतिहतमिति क्रोधो भवति ॥ ६२ ॥

क्रोधात् । सम्मोहः - कृत्याकृत्यविवेकशून्यता । भवति । यया पुरुष स्सर्वं कुर्यात् । सम्मोहात् । स्मृतिविभ्रमः - स्मृतेः - आरब्धेन्द्रियजयादिप्रयत्नविषयायाः, विभ्रमः - भ्रंशः । भवति । स्मृतिभ्रंशात् । बुद्धिनाशः - बुद्धेः - आत्मज्ञानगोचरव्यवसायात्मिकायाः, नाशः । भवति । बुद्धिनाशात्-हेतोः । प्रणश्यति । पुनरपि संसारे मग्नो भवतीति भावः ॥ ६३

---

**परमेश्वर में मन न लगाकर अपने प्रयत्न से इन्द्रिय विजय की ओर प्रवृत्त पुरुष की क्या दशा होती है उसे कहते हैं—**

**विषयों से निवृत्त होने की चेष्टा होने पर भी अनादि सूक्ष्म वासना के कारण भोगों के प्रति बारम्बार चिन्तन अवश्य ही हो जाता है। इस विषय चिन्तन से विषयों के प्रति आसक्ति बढ़ती है, वही बढ़कर विषयों की कामना में परिणत हो जाती है। इस अवस्थामें पुरुष विषय भोग न कर,नहीं रह पाता। इस विषय कामना से काम्य विषय की प्राप्ति न होने पर क्रोध की उत्पत्ति होती है। क्रोध होने पर क्या करना चाहिए क्या नहीं यह विवेक शून्यता रूप मोह उत्पन्न होता है और विवेकनाशरूप सम्मोह होने पर इन्द्रिय विजय की स्मृति ही नष्ट हो जाती है। स्मृति नष्ट होने पर आत्मज्ञान की प्राप्ति में दृढ़ अथवा व्यवसायात्मिका बुद्धि नष्ट हो जाती है। इस प्रकार बुद्धि नष्ट होने पर पुनः सांसारिक विषयों में निमग्न हो नष्ट हो जाता है ॥ ६२-६३ ।**

**रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।**
**आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ।।६४।।**
**प्रसादे सर्वदुःखानां हानिरस्योपजायते ।**
**प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ।।६५।।**
**नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।**
**न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ।।६६।।**

---

रागद्वेषवियुक्तैः - हृदयस्थितमत्प्रसादवशादपगतरागद्वेषैः । आत्मवश्यैः - आत्मनः, वश्यैः - अधीनैः । इन्द्रियैः । विषयान् - शब्दादीन् प्रति । चरन् । विधेयात्मा - विधेयः, आत्मा - मनः, यस्य स तथोक्तः पुरुषस्तु । प्रसादं - मनो नैर्मल्यम् । अधिगच्छति - प्राप्नोति । अनेन व्रजेत किमित्यस्योत्तरमुक्तं भवति ।। ६३ ।।

अस्य - पुरुषस्य । प्रसादे - मनो नैर्मल्ये सति । सर्वदुःखानां - प्रकृतिसम्बन्धकृतानां । हानिः - नाशः । उपजायते । प्रसन्नं - आत्मावलोकनविरोधिदोषरहितं, चेतो यस्य तस्य - प्रसन्नचेतसः । आशु - शीघ्रम् । बुद्धिः- देहविविक्तात्मविषया प्रज्ञा । पर्यवतिष्ठते - प्रतिष्ठिता भवति हि ।। ६५ ।।

सर्वेश्वरे - स्वस्मिन्ननिवेशितचित्तस्याभीष्टासिद्धिमेवाह (नास्तीति) अयुक्तस्य - मय्यनिवेशितचित्तस्य । बुद्धिः - विविक्तात्मविषयाप्रज्ञा । नास्ति-

---

जो जन मुझ में मन लगाकर मेरे परायण होकर इन्द्रियों के जीतने में प्रवृत्त होते हैं, मेरी कृपा से उनकी इन्द्रियाँ उनके वश हो जाती हैं । तब वह इन्द्रियों को जीतने वाला पुरुष विषयों के उपभोगों में राग द्वेषादि रहित हो जाता है । इस प्रकार आसक्ति रहित होकर विषयों का भोग होने पर भी उस मनको वश में रखने वाले पुरुष का अन्तःकरण निर्मल ही रहता है ।। ६४

इस कर्मयोगी पुरुष का मन निर्मल हो जाने पर प्रकृति के सम्बन्ध से होने वाले समस्त दुःखों का नाश या निवृत्ति हो जाती है । और निर्मल मन वाले पुरुष की देह से अतिरिक्त आत्म-स्वरूप दर्शन से होने वाली प्रज्ञा (बुद्धि) शीघ्र ही सुदृढ़ हो जाती है । अर्थात् तब वह स्थित प्रज्ञ हो जाता है ।। ६५

जो पुरुष मुझ में अपने चित्त को नहीं लगा पाया है ऐसे अयुक्त पुरुष की बुद्धि अर्थात् देह से अतिरिक्त आत्म विषयक दृढ़ बुद्धि प्राप्त नहीं होती । इसलिए





**इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।**
**तदस्य हरति प्रज्ञां वायुर्नावमिवांभसि ।।६७।।**
**तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।**
**इन्द्रियाणीन्द्रियार्थेभ्य स्तस्य प्रज्ञा प्रतिष्ठिता ।।६८।।**

---

कदाचिदपि न सिद्ध्यति । अतएव । अयुक्तस्य । भावना - विविक्तात्मविषयकध्यानरूपचिन्ता च । नास्ति । अभावयतः - आत्मानमचिन्तयतः । शान्तिः - विषयस्पृहानिवृत्तिश्च । नास्ति । अशान्तस्य - विषयस्पृहावतः । सुखं - नित्यनिरतिशयसुखप्राप्तिः । कुतः ।। ६६ ।।

पुनरपि स्वोक्तप्रकारेणेन्द्रियनियमनमकुर्वतोऽनर्थमाह (इन्द्रियाणामिति) चरतां - अनिगृहीततया स्वस्वविषयेषु यथेष्टं संचरताम् । इन्द्रियाणाम् । यन्मनः । अनुविधीयते - अनुसारीक्रियते । ततमनः । अस्य- पुरुषस्य । प्रज्ञां - विविक्तात्मप्रवणाम् । वायुः प्रतिकूलवातः । अम्भसि । नीयमानाम् । नावमिव हरतिह्नि, विषयप्रवणां करोतीत्यर्थः ।। ६७ ।।

इन्द्रियनिग्रहस्य स्थितप्रज्ञतासाधनत्वमुपसंहरति (तस्मादिति) तस्मात् - इन्द्रियनिग्रहाभावेऽनर्थस्योक्तत्वात् । हे महाबाहो ! यस्य-पुरु-

---

इस प्रकार के अयुक्त पुरुष का एकान्त में होने वाला आत्म विषयक ध्यान या अनुचिन्तन सम्भव नहीं होता और आत्म विषयक भावना रहित पुरुष को विषयों की लालसा निवृत्ति रूप शान्तिलाभ नहीं हो पाती, अतएव विषय स्पृहा से युक्त शान्ति से विहीन पुरुष को निरतिशय आनन्द भोग रूप सुख कहाँ ।। ६६

कथित प्रकार से जो इन्द्रिय संयम की चेष्टा नहीं करते, उनको जो अनर्थ होता है उसे पुनः कहते हैं— जिस पुरुष का मन विषयों का लोलुप है, इन्द्रियों का अनुगामी है, वही मन प्रतिकूल वायु जैसे नौका को जल में इधर-उधर चलाकर लक्ष्यभ्रष्ट कर देता है उसी प्रकार पुरुष को आत्म विषयक ध्यान - प्रवणतारूप दृढ़ बुद्धि से लक्ष्य भ्रष्ट कर निश्चित रूप से विषय प्रवण बना देता है ।। ६७

इन्द्रियों के दमन करने से स्थित प्रज्ञता प्राप्त होती है एवं इन्द्रियों के दमन न करने से उस प्रज्ञा ( बुद्धि ) का नाशरूप अनर्थ होता है इसलिए हे अर्जुन ! जिस पुरुष की समस्त इन्द्रियाँ पूर्वोक्त प्रकार से मुझ में मन लगाकर इन्द्रिय भोग विषयों से सम्पूर्ण रूप से संयत कर ली गयी हैं, उसकी प्रज्ञा (आत्म विषयक बुद्धि) सुदृढ़ होती है ।। ६८

**या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।**
**यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ।।६९।।**
**आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् ।**
**तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी।।**

---

यस्य । सर्वशः - सर्वाणि । इन्द्रियाणि । इन्द्रियार्थेभ्यः । निगृहीतानि - उक्तप्रकारेण शुभाश्रये मयि मनो निवेश्य नियमितानि । तस्य । प्रज्ञा । प्रतिष्ठिता भवति - आत्मनि स्थिता भवतीत्यर्थः ।। ६८ ।।

एवं निगृहीतेन्द्रियस्य प्रसन्नमनस स्सिद्धिमाह ( या निशेति ) या - आत्मविषया बुद्धिः । सर्वभूतानाम् । निशा - रात्रिः, निशावा प्रकाशाभवति । तस्यां - आत्मविषयायां बुद्धौ, संयमी - नियमितेन्द्रियो योगी । जागर्ति - आत्मानमवलोकयन् प्रबुद्धो वर्तत इत्यर्थः । यस्यां - शब्दादिविषयायां बुद्धौ । भूतानि - सर्वाणि । जाग्रति - प्रबुद्धानि भवन्ति । सा - शब्दादिविषया बुद्धिः । पश्यतः - आत्मानमवलोकयतः । मुनेः - आत्ममननशीलस्य । निशा - निशेवाप्रकाशा भवति ।। ६९ ।।

यद्वत् - यथा । आपूर्यमाणं - स्वेनैवपूर्णं सन्तम् । अचलप्रतिष्ठं- अचला - एकरूपा, प्रतिष्ठा - स्थितिः, यस्य तं तथोक्तम् । आपः - नदीजलानि । प्रविशन्ति । तद्वत् - तथा । सर्वे । कामाः - शब्दादिविषयाः । यम् - संयमिनम् । प्रविशन्ति - इन्द्रियगोचरतां गच्छन्ति । स एव - संयमी । शान्तिम् । आप्नोति । कामान् - शब्दादिविषयान्, कामयत इति कामकामी - शब्दादिभि विकृतचित्तः । न शान्तिमाप्नोति । यस्य संयमि-

---

जो आत्म विषयक बुद्धि समस्त संसारी जीवों के लिए रात्रि या अन्धकार रूप होती है, उसी बुद्धि से संयत - इन्द्रिय पुरुष आत्मा का अवलोकन करता हुआ जागरूक रहता है, और शब्द आदि विषयों के प्रति आसक्ति रूप बुद्धि से युक्त समस्त संसारिक जीव विषयों में निमग्न रहते हैं, वही विषयासक्ति रूप बुद्धि आत्म-मननशील, आत्मद्रष्टा मुनि के लिए रात्रि अर्थात् अन्धकार के समान है । अर्थात् उनकी विषय वासना तिरोहित रहती हैं ।। ६९

जैसे जल से परिपूर्ण अतएव समभाव में स्थित समुद्र में अनेक लघु सरिताओं का जल प्रवेश करता है फिर भी वह एकरूप से स्थित रहता है, उसी प्रकार समस्त शब्दादि भोग्यविषय उस संयमी पुरुष में प्रवेश करते हैं फिर भी वह संयमी पुरुष





**विहाय कामान्यः सर्वान्पुमांश्चरति निस्स्पृहः ।**
**निर्ममो निरहंकारः स शान्तिमधिगच्छति ।।७१।।**
**एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।**
**स्थित्वास्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति ।।७२।।**

इति श्रीभगवद्गीतायां द्वितीयोऽध्यायः ।।

---

नोऽवर्जनीयशब्दादिविषयस्पर्शे स्समुद्रस्य नदीजलप्रवेश इव न कञ्चिदपि विकारमावहति, स एव शान्तिमाप् भवति, नान्य इति भावः ।। ७०

यः । पुमान् । सर्वान् । कामान् - शब्दादिविषयान् । विहाय - त्यक्त्वा । त्यागशब्दार्थमेवाह ( निस्स्पृह इति ) तेषु स्पृहारहित इत्यर्थः । निर्ममः - अनात्मीयेषु देहानुबन्धिष्वात्मीयत्वाभिमानरूपममतारहितः । निरहंकारः - अनात्मनि देह आत्मत्वाभिमानरूपाहंकाररहितश्च सन् । चरति - स्वच्छन्दं चरति । सः । शान्तिमधिगच्छति - आत्मावलोकनं लब्ध्वा समस्तदुःखहानिं प्राप्नोतीत्यर्थः ।। ७१

उक्तां ज्ञानकाष्ठां स्तुवन्नुपसंहरति ( एषेति ) हे पार्थ ! एषा नित्यात्मज्ञानपूर्विका । ब्राह्मी - ब्रह्मप्रापिका । स्थितिः : ज्ञानकाष्ठा । एनां - ईदृशीं स्थितिम् । प्राप्य । पुमान् । न मुह्यति - पुनस्संसारं न प्राप्नो-

---

उन शब्दादि विषयों का संश्लेष पाकर भी उसके चित्त में किसी प्रकार का विकार नहीं हो पाता, वह समान भाव से ही रहता है और भोगों की कामना करने वाला पुरुष विषयों का संश्लेष पाकर विक्षुब्ध चित्त हो जाता है, शान्त नहीं रह पाता है ।। ७० ।।

जो पुरुष समस्त काम्य विषयों से सम्पूर्ण अभिनिवेश त्यागकर विषय भोगों से स्पृहा शून्य अर्थात् आसक्ति रहित एवं अहंकार ( कर्तृत्व का अहंकार ) और ममकार ( ममता ) रहित होकर संसार में विचरण करते हैं वे ही शान्तिलाभ करते हैं ।। ७१ ।।

हे अर्जुन ! यह नित्य आत्मज्ञान जनित ब्रह्म को प्राप्त कराने वाली ज्ञाननिष्ठा या स्थित प्रज्ञता है अर्थात् यहाँ तक ब्रह्म प्राप्ति की उपाय रूप ज्ञाननिष्ठा की

तीत्यर्थः । अस्यां - स्थित्याम् । अन्तकालेपि । स्थित्वा निर्वाणं - सुखरूपं । ब्रह्म - स्वात्मानं । ऋच्छति - प्राप्नोति ॥ ७२

॥ इति श्रीभगवद्गीताभाष्यार्थसंग्रहतात्पर्यदीपे श्रीवरवरमुनि
विरचितायां बालबोधिन्यपराभिधानायां
गीतार्थसंग्रहदीपिकायां

॥ द्वितीयोऽध्यायः ॥



पराकाष्ठा वर्णित हुई। इस ज्ञान निष्ठा या स्थित प्रज्ञता का लाभ प्राप्तकर पुरुष संसार के मोह में प्राप्त नहीं होता, ऐसी ज्ञाननिष्ठा अन्तिम समय में रहने पर पुरुष को सुखमय देहातिरिक्त आत्मवस्तु या ब्रह्मत्व अर्थात् ब्रह्म की समानता को प्राप्त करते हैं ॥ ७२ ॥

॥ इति द्वितीयोऽध्यायः ॥



श्रीः

# अथ तृतीयोऽध्यायः

अर्जुन उवाच—

**ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ।**
**तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥ १ ॥**

एवं भगवत्प्राप्त्युपायभूत वक्ष्यमाणभक्त्यङ्गमात्मनित्यताज्ञानपूर्वककर्मयोगनिष्पाद्यज्ञानयोगसाध्यमात्मावलोकनमुक्तम् । इतः परमध्यायचतुष्टयेनेदमेव प्रत्यगात्मदर्शनसाधनं प्रपंच्यये । तत्र पूर्वाध्यायान्ते—"एषा ब्राह्मीस्थिति" रिति प्रशंसापूर्वकं ज्ञाननिष्ठाया उपसंहाराद्बुद्धिकर्मणोर्मध्ये बुद्धेरेव श्रैष्ठ्यं भगवतोऽभिमतं मत्वाऽर्जुनः पृच्छति ( ज्यायसीति ) हे जनार्दन ! कर्मणः - कर्मापेक्षया । बुद्धिः - ज्ञाननिष्ठा । ज्यायसी-श्रेष्ठा । ते - तव । मता - सम्मता चेत् । तत् - तर्हि । हे केशव - कृष्ण । घोरे-हिंसात्मकतयाऽतिक्रूरे । कर्मणि - युद्धादिरूपे । किम् - किमर्थम् । माम् । नियोजयसि - प्रवर्तयसि ॥ १

## तृतीय अध्याय

### कर्मयोग

इस अध्याय में मुख्यरूप से तीन बातों का उपदेश दिया गया है। (१) लोकरक्षा एवं लोकसंग्रह के लिए अर्थात् सर्वसाधारण लोगोंकी अपने वर्णाश्रम धर्म के अनुरूप कर्मों में बुद्धि भ्रंश न हो इस कारण से श्रेष्ठ अधिकारी पुरुष को भी समस्त नित्य नैमित्तिक कर्म करना कर्तव्य है। (२) उन कर्मों के करते समय अनासक्त होना। (३) त्रिगुणात्मिका प्रकृति ही कर्म कर रही है यह सोचकर या परमात्मा ही करा रहे हैं इस स्थिर बुद्धि को करके कर्म करना कर्तव्य है।

इससे पूर्व ब्राह्मी स्थिति की श्रेष्ठता बतायी गयी। अब बुद्धि और कर्म में कौन श्रेष्ठ है यह जिज्ञासा करते हैं—

अर्जुन बोले—हे श्रीकृष्ण ! कर्मनिष्ठा की अपेक्षा ज्ञाननिष्ठा रूप बुद्धि ही श्रेष्ठ है, यही यदि आपको अभिमत हो तब तो हे कृष्ण ! घोर युद्धरूप हिंसात्मक कर्म में क्यों मुझे लगा रहे हो ॥ १ ॥

व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २ ॥
श्रीभगवानुवाच—
लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयानघ ।
ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥ ३ ॥

---

हे कृष्ण ! व्यामिश्रेण - क्वचित्कर्मप्रशंसा - क्वचिज्ज्ञानप्रशंसा चेत्येवं परस्परंविरुद्धेनैव । वाक्येन । मे - मम । बुद्धिं - मनः । मोहयसीव-भ्रमयन्निव प्रतिभासि । तत् - तस्मात्कारणात् । एकं - परस्पराविरुद्धार्थं-वाक्यं । वद । येन - वाक्येन । अहं । निश्चित्य - अनुष्ठेयमर्थं निर्णीय । श्रेयः - परमपुरुषार्थं । आप्नुयाम् - प्राप्स्यामि ॥ २ ॥

हे अनघ - विषयासंगजनकपापरहित । अस्मिन् - विचित्राधिकारिपूर्णे । लोके । मया - परमकारुणिकेनाप्ततमेन मया । द्विविधा - द्विप्रकारा । निष्ठा - स्थितिः । पुरा - पूर्वं । प्रोक्ता प्रकर्षेणाभिहिता, यथाधिकारमसंकीर्णतयैवोक्तेत्यर्थः । तत्वया सम्यगनवधृतमिति भावः ॥ तदेवनिष्ठाद्वयमाह ( ज्ञानेति ) संख्या - विषयैरनुपहता आत्मैकविषया बुद्धिः, तस्यास्सन्त्वन्धिन स्सांख्याः । योगिनः - विषयोपहतबुद्धयः कर्मयोगाधिकारिणः । तत्र सांख्यानां ज्ञानयोगेन योगिनां कर्मयोगेन चेतिद्विविधानिष्ठेति पूर्वेणान्वयः । अतो न किंचिदिहविरुद्धम्मयाऽभिहितमिति भावः ॥ ३ ॥

---

हे कृष्ण ! कभी तो आप 'धर्म्याद्धि युद्धाच्छ्रेयो' कहकर कर्म की प्रशंसा करते हैं और कभी 'दूरेण ह्यवरं कर्म' कहकर ज्ञान की प्रशंसा करते हैं । आपके इस प्रकार आपस में विरुद्ध वाक्यों को सुनकर मेरी बुद्धि में भ्रम उत्पन्न हो गया है । इसलिए परस्पर अविरुद्ध इस प्रकार की एक बात कहिये जिससे मैं अपना कर्तव्य स्थिर करके परम कल्याण रूप मुक्तिका लाभ कर सकूँ ॥ २ ॥

श्रीभगवान बोले—हे निष्पाप अर्जुन ! विभिन्न प्रकार के अधिकारियों से परिपूर्ण इस पृथ्वी पर अधिकारी भेद से मैंने ज्ञानयोग एवं कर्मयोग रूप दो प्रकार की निष्ठाओं की बात पहले कही है । विषयाशक्ति से रहित केवल आत्म विषय में जिसकी निष्ठा है, वह सांख्य पुरुष की निष्ठा ज्ञानयोग के द्वारा सिद्ध होती है, और जो सभी साधकों की बुद्धि विषयों में आसक्ति के कारण मलिन, वही कर्मयोग के अधिकारी योगीपुरुष की निष्ठा निष्काम कर्मरूप कर्मयोग के द्वारा सिद्ध होती है । इस प्रकार मैंने तुम्हें विरुद्ध बातों का कुछ भी उपदेश नहीं दिया है ॥ ३ ॥





न कर्मणा मनारम्भा न्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ४ ॥
नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥

---

सर्वस्य लौकिकस्य पुरुषस्य मोक्षेच्छायां जातायां सहसैव ज्ञान योगो दुष्कर इत्याह ( नेति ) पुरुषः । कर्मणां - शास्त्रचोदित नित्य नैमित्तिकादीनाम् । अनारम्भात् - अनुपक्रमादेव । नैष्कर्म्यं - ज्ञान निष्ठाम् । नाश्नुते-नप्राप्नोति । सन्नयसनादेव - आरब्धानां तेषां त्यागादेव च । सिद्धिं - ज्ञाननिष्ठारूपाम् । न समधिगच्छति - न लभते । अनभिसंहितफलस्य परमपुरुषाराधनरूपस्य कर्मणः फलभूता ज्ञाननिष्ठा तेनबिना विषयव्याकुलेन्द्रियैर्दुस्साधेति भावः ॥ ४ ॥

तदेवोपपादयति ( नहीति ) कश्चित् - पुरुषः । जातु - कदाचित् । क्षणमपि । अकर्मकृत् - कर्माकुर्वाणः । न हितिष्ठति - नाव तिष्ठते । हि-यस्मात्कारणात् । सर्वोपि - न किंचिदपि करोमीति व्यवसितोपि समस्तः पुरुषः । प्रकृतिजैः - प्रकृतिसम्भवैः । गुणैः - प्राचीनकर्म वासनानुगुणं प्रवृद्धैस्सत्त्वरजस्तमोभिः । कर्म - स्वानुरूपं कृत्यंप्रति । अवशः - स्ववशरहित एव । कार्यते - प्रवर्त्यते । अतोवासनाहेतुं प्राचीनं कर्मनाशयित्वा सत्त्वादिगुणांश्चवशीकृत्य ज्ञानयोगस्संपाद्यइति भावः ॥ ५ ॥

---

कोई भी पुरुष संसार में नित्यनैमित्तिक शास्त्रविहित कर्म आरम्भ बिना किये निष्क्रिय होकर नैष्कर्म्य रूप योगनिष्ठा को प्राप्त नहीं होता, और आरम्भ किये कर्मों के त्याग मात्र से ही ज्ञाननिष्ठा रूप सिद्धि लाभ कर लेगा सो भी बात नहीं है, अर्थात् संसार के विषयों में आसक्त लोगों को अकस्मात् ज्ञाननिष्ठा का होना कठिन है, सांसारिक फलाभिसन्धि रहित होकर केवल भगवत् कैङ्कर्य बुद्धि से शास्त्र विहित सम्पूर्ण कर्म करते रहने से क्रमशः चित्त निर्मल होने पर ज्ञाननिष्ठा प्राप्त होती है ॥ ४ ॥

कोई भी मनुष्य कभी भी क्षणमात्र भी कर्म बिना किये नहीं रह सकता है क्योंकि मनुष्य मात्र को अपने अनादि कर्मों की वासना के अनुसार सत्व, रज, तम इन त्रिगुणात्मिक अपने स्वभाव या प्रकृति के वश होकर परवश कर्म करने में प्रवृत्त होना ही पड़ता है । भगवत् कैङ्कर्य बुद्धि से किये कर्मों द्वारा प्राचीन कर्मवासना नष्ट करके सत्वादि गुणत्रय को अपने वश करने पर ज्ञानयोग सिद्ध होता है ॥ ५ ॥

**कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।**
**इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते ॥ ६ ॥**
**यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।**
**कर्मेन्द्रियैः कर्मयोग मसक्तः स विशिष्यते ॥ ७ ॥**

---

असंगकर्माकरणे ज्ञानयोगाय प्रवृत्तो मिथ्याचारोभवतीत्याह ( कर्मेन्द्रियाणीति ) यः - ज्ञाननिष्ठः । कर्मेन्द्रियाणि - वाक्पाण्यादीनि । संयम्य- सम्यङ्निगृह्य, कर्मयोगमकुर्वन्नित्यर्थः । विमूढात्मा - अविदितात्मस्वरूप याथात्म्यः, अनादिपापवासनाविवशः । मनसा । इन्द्रियार्थान् - शब्दादीन् । स्मरन् - ध्यायन् । आस्ते - तिष्ठति । सः । मिथ्याचार इत्युच्यते । अन्यथा संकल्प्यान्यथाऽऽचरणादिति भावः ॥ ६ ॥

हे - अर्जुन ! यस्तु - पुरुषः । मनसा - आत्मावलोकनप्रवृत्तेन चेतसा । इन्द्रियाणि - वाक्पाण्यादीनि । नियम्य - पूर्वाभ्यस्त विषयसजातीय शास्त्रीयकर्मविषयतया संयम्य । कर्मेन्द्रियैः - स्वतएव कर्मप्रवणैर्वाक्पाण्यादिभिः । असक्तः - फलाभिलाषरहितस्सन् । कर्मयोगम् । आरभते । सः । विशिष्यते - ज्ञाननिष्ठादप्यतिरिच्यत इत्यर्थः ॥ ७ ॥

नियतं - अनादिकालाभ्यस्तम् । कर्म - नित्यनैमित्तिकादिकम् । त्वम् । कुरु - आचर । हि - यस्मात्कारणात् । अकर्मणः - ज्ञान निष्ठाया- अपि । कर्मैव । ज्यायः - श्रेष्ठम् । सर्वकर्मत्यागेहि ज्ञाननिष्ठैव

---

जो ज्ञाननिष्ठा वाला पुरुष केवल हाथ, पैर आदि कर्मेन्द्रियों को संयमित करके एवं फलाभिसन्धि रहित होकर कर्मयोग में प्रवृत्त न होकर आत्मचिन्तन रूप ज्ञानयोग में प्रवृत्त होता है वह मनोमन शब्दादि भोगों का चिन्तन करता रहता है, वह व्यक्ति मिथ्याचारी है ॥ ६ ॥

हे अर्जुन ! जो व्यक्ति मन से समस्त इन्द्रियों को संयमित करके अतएव कर्म-फल में अनासक्त होकर कर्मयोग आरम्भ करता है वह ज्ञाननिष्ठ व्यक्ति से अर्थात् निष्काम कर्म का अनुष्ठान न कर पहले ही ज्ञानयोग के अभ्यासी की अपेक्षा श्रेष्ठ पुरुष है ॥ ७ ॥





**नियतं कुरु कर्म त्वं कर्मज्यायो ह्यकर्मणः ।**
**शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः ॥ ८ ॥**
**यज्ञार्थात्कर्मणोऽन्यत्र लोकोयं कर्मबन्धनः ।**
**तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥ ९ ॥**

---

दुर्लभेत्याह ( शरीरेति ) अकर्मणः - कर्माण्यनाचरतः । ते - ज्ञान निष्ठस्य तव । शरीरयात्रापि - ज्ञाननिष्ठोपयोगि देहधारणमपि । न प्रसिद्ध्येत् - न सेत्स्यति । ज्ञाननिष्पत्तिपर्यन्तं हि शरीरधारणमावश्यकम्, शरीरधारणं च न्यायार्जित धनेन महायज्ञादिकं कृत्वा तच्छेषाशनेनैव कर्तव्यमिति भावः ॥ ८ ॥

नन्वेवं द्रव्यार्जनादेः कर्मणस्सर्वेन्द्रियव्याकुलतागर्भत्वेनास्य पुरुषस्य पुनःकर्मबन्धनमेव स्यादित्याशंक्याह ( यज्ञार्थादिति ) यज्ञार्थात् - शास्त्रीयकर्मविशेषशेषभूतात् । कर्मणः - द्रव्यार्जनादिरूपात् । अन्यत्र - अन्यस्मिन् स्वप्रयोजनशेषभूते कर्मणि । क्रियमाणे सतीति शेषः । अयं लोकः । कर्मबन्धनः - कर्मबद्धः । भवति । अतः । हे कौन्तेय ! तदर्थं - यज्ञादिशेषभूतम् । कर्म - द्रव्यार्जनादिकम् । मुक्तसंगः - मुक्तः - त्यक्तः, संगः - आत्मार्थत्वरूपः, येन तथोक्तस्सन् । समाचर - कुरुष्व ॥ ९ ॥

सकलपुरुषार्थसाधननिष्ठानां यज्ञशिष्टेनैव शरीरधारणस्य कर्तव्यतामाह ( सहेति ) प्रजापतिः - सर्वेश्वरः परमात्मा । पुरा सर्गकाले । सह-

---

हे अर्जुन ! तुम अनादिकाल से प्रत्येक जन्म में अपनी कर्मवासनानुरूप कर्मों का अनुष्ठान करते आ रहे हो, इसलिए तुम दुस्त्याज्य इस नियत कर्म को करते रहते हो ।

अकर्म अर्थात् केवल आत्म चिन्तन रूप ज्ञाननिष्ठा की अपेक्षा कर्मों का (शास्त्र विहित निष्काम कर्मों का) अनुष्ठान श्रेष्ठ है । शास्त्र विहित कर्म न कर निष्क्रिय रहने से तुम्हारी शरीर यात्रा भी सिद्ध नहीं होगी, अर्थात् शरीर धारण ही नहीं हो सकता ॥ ८

हे अर्जुन ! परमपुरुष की आराधनारूप शास्त्र विहित यज्ञादि कर्म के अतिरिक्त केवल अपने भोग के लिए किये कर्मों के द्वारा जीव इस संसार में बद्ध होकर रहता है, अतएव तुम फलाभिसन्धि रहित, अनासक्त होकर यज्ञादि शास्त्र विहित नित्यनैमित्तिक कर्म करो ॥ ९

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वो स्त्विष्टकामधुक् ॥१०॥
देवान् भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥११॥
इष्टान्भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्ता न प्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥१२॥

---

यज्ञाः - स्वाराधनभूतमहायज्ञैस्सहिताः । प्रजाः । सृष्ट्वा । उवाच - उक्तवान् । किमित्यत्राह ( अनेनेति ) हे प्रजाः ! अनेन यज्ञेन । प्रसविष्यध्वं - प्रसूयध्वम् । प्रसवोवृद्धिः, उत्तरोत्तराभिवृद्धिं लभध्वमित्यर्थः । अत्र हेतुमाह ( एषइति ) एषः - यज्ञः । वः - युष्माकम् । इष्टकामधुक् - इष्टं - परमपुरुषार्थलक्षणमोक्षं, कामान् तदनुगुणपुरुषार्थांश्च, दोग्धि - पूरयतीति तथोक्तः । अस्तु - भूयात् । इत्युवाचेति पूर्वेणान्वयः ॥ १० ॥

हे प्रजाः ! अनेन - यज्ञेन । देवान् - मच्छरीर भूतान् मदात्मकान् । भावयत - आराधयत । तेदेवाः - मदात्मकादेवाः । वः युष्मान् । भावयन्तु - स्वाराधनापेक्षितान्नपानादिकै वर्धयन्तु । एवं । परस्परं - अन्योन्यम् । भावयन्तः - वर्धयन्तः । परं । श्रेयः - मोक्षाख्यम् । अवाप्स्यथ ॥ ११ ॥

यज्ञभाविताः - यज्ञैराराधिताः । मदात्मकाः । देवाः । वः युष्माकम् । इष्टान् - उत्तरोत्तरस्वाराधनापेक्षितान् । भोगान् । दास्यन्ते -

---

परमपुरुष आदि प्रजापति ने सृष्टि के आरम्भ में ही जीवगण की सृष्टि के साथ यज्ञ की भी सृष्टि करके कहा था—हे जीवो ! तुम इस यज्ञ के द्वारा अपनी-अपनी आत्मा की उत्तरोत्तर उन्नति या कल्याण करो । यह यज्ञ ही तुम्हें मोक्षरूप इष्ट वस्तु एवं तदनुरूप समस्त अभिलाषाओं को पूर्ण करेगा ॥ १०

हे जीवो ! तुम लोग इस यज्ञ के द्वारा मेरे शरीर रूपी देवताओं की आराधना करो एवं वे देवता भी तुम्हारी इस आराधना से सन्तुष्ट होकर तुम्हारा पोषण करें । इस प्रकार परस्पर आराधना एवं पोषण से तुम क्रम से आत्मोन्नति करते हुए अन्त में परम कल्याणमय मोक्ष-लाभ करोगे ॥ ११

यज्ञ से आराधित वे देवगण उन-उन यज्ञों के लिए आवश्यक वस्तुओं को देते हैं । उनकी उन वस्तुओं से यज्ञाराधना न करके जो लोग स्वयं अपने भोग में उन वस्तुओं का व्यवहार करते हैं, वे निश्चय ही परद्रव्यापहारी अर्थात् चोर हैं ॥ १२





यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥१३॥
अन्नाद्भवन्ति भूतानि पर्जन्या दन्नसम्भवः ।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥१४॥

---

वितरिष्यन्ति । तैः देवैः । दत्तान् - स्वाराधनार्थं वितीर्णान् । भोगान् । एभ्यः - देवेभ्यः । अप्रदाय - अदत्वा । तैस्तदाराधनरूपं कर्माकृत्वेति यावत् । यः - पुरुषः । भुङ्क्ते - आत्मपोषणं करोति । सः । स्तेनः - चोरएव । अतोऽस्य न परमपुरुषार्थानर्हतामात्रम्, किन्तु निरयगामित्वं चेति भावः ॥ १२ ॥

एतदेव विवृणोति ( यज्ञेति ) यज्ञस्य - देवान्तर्यामि परमपुरुषाराधनरूपमहायज्ञस्य, शिष्टं - शेषभूतमन्नादिकं, अश्नन्ति - भुञ्जते, ज्ञाननिष्ठोपयोगिशरीरयात्रां कुर्वन्तीति यज्ञशिष्टाशिनः । सन्तः सत्पुरुषाः । सर्वकिल्बिषैः - आत्मयाथात्म्यावलोकनविरोधिसमस्तपापैः । मुच्यन्ते, मुक्ताभवन्ति । येतु - पुरुषाः । आत्मकारणात् - आत्मनो हेतोः, केवलमात्मार्थमितियावत् । पचन्ति । ते । पापाः पापात्मानः । अयं पापमेव - भुञ्जते ॥ १३ ॥

पुनरपि यज्ञानुवर्तनस्यावश्यकतामननुवर्तने दोषं चाह "अन्नादि" त्यादिश्लोकत्रयेण । अन्नात् । भूतानि - देवमनुष्यादिसमस्तभूतानि - भवन्ति - जायन्ते । अन्नसम्भवः - अन्नोत्पत्तिः । पर्जन्यात् । भवति । पर्जन्यः - वृष्टिः । यज्ञात् । भवति । यज्ञः । कर्मसमुद्भवः - कर्मणः - द्रव्यार्जनादि रूपात्, समुद्भवः - उत्पत्तिः, यस्य तथोक्तः । भवति ॥ १४ ॥

---

देवगणों के अन्तर्यामी परमपुरुष नारायण की आराधनारूप महायज्ञ में निवेदित अन्न को जो लोग भोजन करते हैं वे साधु पुरुष, वे उस प्रकार के शुद्ध अन्न का भोजन करने से निर्मल अन्तःकरण होकर सर्वपापों से मुक्त हो जाते हैं । जो लोग केवल अपने शरीर को पुष्ट करने के लिए अन्न पकाते हैं अर्थात् भोजन करते हैं वे तो केवल पाप ही खाते हैं ॥ १३

अब अग्रिम तीन श्लोकों में यज्ञानुष्ठान की आवश्यकता एवं यज्ञ न करने पर दोष दिखाते हैं ।

उस अन्न के भोजन करने से मनुष्यों के शरीर का जन्म और पोषण होता है । वर्षा से यह अन्न (धान्यादि) उत्पन्न होता है । यज्ञाराधन से वर्षा होती है फिर से यह यज्ञ उन वस्तुओं के संग्रह आदि कर्म द्वारा किया जाता है ॥ १४

कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥१५॥
एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
अघायु रिन्द्रियारामो मोघं पार्थ स जीवति ॥१६॥
यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्ट स्तस्य कार्यं न विद्यते ॥१७॥

---

कर्म । ब्रह्मोद्भवं - ब्रह्म प्रकृतिः, तत्परिणामरूपं शरीर मित्यर्थः तदुद्भवम् । विद्धि - जानीहि । ब्रह्म - शरीरम् । अक्षरसमुद्भवं । अक्षरः - जीवः, तत्समुद्भवम् । जीवाधिष्ठितंहि शरीरं कर्मणे प्रभवतीति भावः । तस्मात् । सर्वगतं । समस्तपुरुषार्थसाधनाधिकृतम् । ब्रह्म । शरीरम् । नित्यं - सततम् । यज्ञे प्रतिष्ठितम् । यज्ञमूल कमित्यर्थः ॥१५

हे पार्थ ! एवं - अनेन प्रकारेण । परमपुरुषेण । प्रवर्तितम् । चक्रम् । इह - लोके । यः । नानुवर्तयति - न प्रवर्तयति । सः । अघायुः अघस्वरूपायुः । अतएव । इन्द्रियारामः - विषयभोगैकरति स्सन् । मोघं । व्यर्थमेव । जीवति ॥ १६

मुक्तस्यैव महायज्ञादिवर्णाश्रमोचितकर्मानारम्भ इत्याह (यस्त्विति) यस्तु । मानवः - मनुष्यः । अत्र मनुष्यस्य तुशब्देन ज्ञानयोगकर्मयोगनिर-पेक्षात्मदर्शनवत्त्वरूपवैलक्षण्यं द्योत्यते । आत्मरतिः - आत्मन्येव, रतिः -

---

यह कर्म ब्रह्म के द्वारा अर्थात् प्रकृति का परिणाम स्वरूप शरीर द्वारा किया जाता है और उस प्राणी शरीर में अक्षर जीवात्मा स्थित होकर इस शरीर को धारण व पोषण कर रहा है । इसलिए सब प्रकार के जीवों का यह शरीर इस यज्ञ के ऊपर ही निर्भर है ॥ १५

हे अर्जुन ! परमात्मा के द्वारा प्रवर्तित (चलाये गये) इस चक्र को मानकर जो व्यक्ति इस लोक में उसके अनुसार नहीं चलते, वे लोग पाप ही खाते हैं और अपनी इन्द्रियों के भोगों में आसक्त होकर व्यर्थ ही जीवन धारण करते हैं ॥ १६

जो व्यक्ति आत्मा में ही रमण करते हैं, केवल आत्म स्वरूप का दर्शन करके तृप्त होते हैं और आत्मा में ही सन्तुष्ट रहते हैं उन जन्म से आत्म दृष्टा पुरुषों को आत्म दर्शनोपयोगी मन की निर्मलता प्राप्ति के लिए कर्मानुष्ठान करने की कोई आवश्यकता नहीं होती ॥ १७





नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ।१८॥
तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः [म्] ॥१९॥

---

आभिमुख्यं, यस्य स तथोक्त एव स्यात् । आत्मतृप्तः - अन्नपानादिभि र्विना आत्मनैव, तृप्तः - निर्वृतः । आत्मन्येव स्रक्चन्दनोद्यानादिभि विना, आत्म-स्वरूपमात्रविषये । सन्तुष्टश्च । स्यात् । तस्य । कार्यं - कर्तव्यं कर्म । न विद्यते ॥ १७

तत्र हेतुमाह ( नेति ) तस्य - पुरुषस्य । कृतेन - कर्मणा । अर्थः - प्रयोजनम् । नैवास्ते । अकृतेन - कर्माकरणेन । कश्चन-कश्चिदप्यनर्थः । इह । न । अस्य । सर्वभूतेषु - सर्वेषु, भूतेषु । प्रकृतिपरिणामविशेषेषु सकार्येष्वाकाशादिभूतेषु । अर्थव्यपाश्रयः । अर्थः - प्रयोजनभूतः, व्यपाश्रयः व्यपाश्रयणीयः । कश्चिच्च - कश्चिदपि पदार्थः । न विद्यते ॥ १८

तस्मात् - कारणात् । असक्तः - संगरहितस्सन् । सततं - यावदा-त्मप्राप्ति । कार्यं - अवश्यकर्तव्यम् । कर्म - महायज्ञादिरूपं कर्मयोगं । समाचर - अवश्यकर्तव्यमिति बुद्ध्यासमाचरेत्यर्थः । असक्तः । कर्म । आचरन् । पूरुषः । परं - आत्मानं । आप्नोति ॥ १९ ॥

---

क्योंकि वह आत्मरति एवं आत्मा में तृप्त पुरुष अपने उस आत्म दर्शन में ही कृतकृत्य हो उसके साधन के लिए उसे किसी भी प्रकार के कर्म की आवश्यकता नहीं है एवं कर्म न करने पर भी उसे कोई अनर्थ नहीं होता है ।

उस आत्म दृष्टा महापुरुष का आकाश आदि पञ्चभूत किसी भी वस्तु से प्रयोजन नहीं रहता है, इसलिए उन सब वस्तुओं की उसे कोई आवश्यकता नहीं होती ॥ १८

अतएव हे अर्जुन ! तुम आसक्ति रहित होकर अर्थात् फल की अभिलाषा रहित होकर तथा कर्तृत्व बुद्धि शून्य होकर कर्तव्य कर्मों को करते रहो, क्योंकि इस प्रकार से कर्म करते-करते पुरुष निश्चय ही परमात्म दर्शन की प्राप्ति में सफल हो जाता है ॥ १९

**कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।**
**लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि ॥२०॥**
**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।**
**स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥२१॥**

---

अस्मिन्नर्थे सदाचारं प्रमाणयति ( कर्मणैवेति ) जनकादयः - जनकप्रभृतयो ज्ञानिनामग्रेसरा राजर्षयः । कर्मणैव - कर्मयोगेनैव । संसिद्धि - कर्ममोक्षं, आत्मप्राप्तिलक्षणं ज्ञानयोगफलमिति यावत् । आस्थिताः - प्राप्तवन्तः । हीति प्रसिद्धौ ॥

पूर्वं कर्मयोगाधिकारिण इव ज्ञानयोगाधिकारिणोपि कर्मयोगएवश्रेया नित्युक्तम् । इदानीं व्यपदिष्टस्य सर्वथा कर्मयोगएव कार्यइत्याह "लोकसंग्रह" मित्यादिना सार्धश्लोकेन । लोकसंग्रहं लोकानां - लौकिकजनानां, संग्रहं - स्वानुष्ठानप्रदर्शनेन तत्तद्धर्मप्रवर्तनं । संपश्यन् - प्रयोजनत्वेन पश्यन्नपि । कर्म । कर्तुमेव । अर्हसि, न त्यक्तुमित्यर्थः ॥ २० ॥

तत्र हेतुमाह ( यद्यदिति ) श्रेष्ठः - ज्ञानानुष्ठानाभ्यां प्रथितः पुरुषः । यद्यत् - कर्म । आचरति । इतरः - अकृत्स्नवित् जनोपि । तत्तदेव । आचरति । सः - श्रेष्ठः । अनुष्ठीयमानमपिकर्म । यत्प्रमाणं - यत्, प्रमाणं परिमाणं, यस्य तत् यत्प्रमाणं - यावदंगयुक्तं । कुरुते - अनुतिष्ठति । लोकः । तदेव - तावदङ्गयुक्तमेव । अनुवर्तते - अनुतिष्ठति । अतो लोकरक्षणार्थं शिष्टेन सता सकलं कर्मसर्वदाऽनुष्ठेयं, अन्यथा लोकनाशजनितं पापं ज्ञानयोगादप्येनं प्रच्यावयेदिति भावः ॥ २१ ॥

---

जनकादि महाज्ञानी राजर्षिजन भी निष्काम कर्मानुष्ठान से ही परमात्मदर्शन रूप परम सिद्धि को प्राप्त हुए थे। यह प्रसिद्ध ही है। इसलिए तथा तुम्हारे निष्काम कर्म को देखकर संसार के लोग भी इस प्रकार के निष्काम कर्म में प्रवृत्त हो सकते हैं इस दृष्टि से लोक शिक्षा के लिए भी निष्काम कर्म करना ही उचित है ॥ २०

हे अर्जुन ! शास्त्रज्ञानी और तदनुरूप अनुष्ठान करने वाले श्रेष्ठ पुरुष जिस प्रकार का आचरण करते हैं या जो-जो कार्य करते हैं, दूसरे संसारी अज्ञानी जन भी उन श्रेष्ठ जनों का अनुकरण कर उसी प्रकार के कर्म करने लगते हैं। वे श्रेष्ठ जन अपने आचरित कर्मों में जो प्रमाण अवलम्बन करते हैं, संसारी जन उसी प्रमाण के अनुसार उन कर्मों को करते हैं ॥ २१





**न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।**
**नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥२२॥**
**यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥२३॥**
**उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।**
**संकरस्य च कर्ता स्या मुपहन्या मिमाः प्रजाः ॥२४॥**

---

अहमेवास्मिन्नर्थे निदर्शनमिति "न मे पार्थे" त्यादिश्लोकत्रयेणाह । हे पार्थ ! मे - सर्वेश्वरस्य मम । कर्तव्यं - अनुष्ठेयं कर्म । नास्ति । कुतइत्यत्राह ( त्रिष्विति ) त्रिषु लोकेषु । अनवाप्तं - इतः पूर्वमप्राप्तं । अवाप्तव्यं - कर्मणाप्राप्तव्यं । किञ्चन - किञ्चिदपि । न विद्यते । चकारोऽप्यर्थः । तथापि । कर्मणि - वर्णाश्रमोचित नित्यनैमित्तिकादौ । वर्तएव - प्रवर्तएव । कर्मकरोम्येवेत्यर्थः ॥ २२ ॥

स्वस्य कर्माकरणे लोकस्य हानिं दर्शयति ( यदीति ) हे पार्थ ! अहं - शिष्टाग्रेसरवसुदेवकुलेऽवतीर्णः । जातु - कदाचित् । अतन्द्रितः - अनलसस्सन् । कर्मणि नवर्तेयं यदि - कर्मनानुतिष्ठेयं चेत् । सर्वशः - सर्वे । मनुष्याः - अकृत्स्नविदः - कर्माधिकारिणः । मम - श्रेष्ठतमस्य । वर्त्म निवृत्तिमार्गम् । अनुवर्तन्ते - अयमेव धर्म इत्यनुसरेयुः । हिः प्रसिद्धौ ॥ २३

अहम् । कर्म - कुलोचितम् । न कुर्याम् चेत् । इमे । लोकाः - अकृत्स्नविदशिष्टाजनाः । उत्सीदेयुः - शास्त्रीयकर्माकरणजनित प्रत्यवायेन

---

हे पार्थ ! तीनों लोकों में मुझे कोई कर्तव्य नहीं है जो मेरे द्वारा करणीय हो क्योंकि त्रिभुवन में ऐसी कोई वस्तु नहीं है जो मुझे अप्राप्य हो एवं जो मुझे प्राप्त करनी हो, फिर भी मैं वर्णाश्रमोचित नित्यनैमित्तिक कर्म करता ही रहता हूँ ॥ २२

हे अर्जुन ! मैं जब भी यदि सावधान होकर कर्म का अनुष्ठान न करूँ तो बड़ी हानि हो जाय समस्त संसारी लोग मेरी निष्क्रियता रूप मार्ग का अनुसरण कर कर्म से विरत हो जायेंगे ॥ २३

यदि मैं कर्म न करूँ, तो मेरे मार्ग का अवलम्बन कर अपने-अपने वर्णाश्रमोचित कर्म न कर यह सम्पूर्ण अज्ञानी जन नष्ट हो जायेंगे और इस प्रकार वर्णसंकरता की उत्पत्ति का मैं ही निमित्त बनकर इस संसार को नष्ट करने वाला होऊँगा ॥ २४

**सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।**
**कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् ।।२५।।**
**न बुद्धिभेदं जनयेदज्ञानां कर्मसंगिनाम् ।**
**जोषयेत्सर्वकर्माणि विद्वान्युक्त स्समाचरन् ।।२६।।**

---

नष्टाभवेयुः । संकरस्य - अव्यवस्थायाः । कर्ता च । स्यां - भवेयम् । अतएव । इमाः । प्रजाः । उपहन्यां - निरयपातिनीः कुर्यामित्यर्थः । अतो मद्व्यपदिष्टेन त्वयापि कर्मण्येव वर्तितव्यमिति भावः ।। २४

आत्मविदोपि लोकसंग्रहार्थं कर्मकर्तव्यमित्युक्तमुपपाद्यते (सक्ताइति) कर्मणि । सक्ताः अवर्जनीयसम्बन्धाः । अविद्वांसः - अकृत्स्नात्मविदो जनाः । यथा - येन प्रकारेण । कुर्वन्ति - कर्माचरन्ति । तथा - तेन प्रकारेण । विद्वान् - कृत्स्नात्मविज्जनोपि । असक्तः - संगरहितः । लोकसंग्रहम् - लोकसंरक्षणम् । चिकीर्षुः कर्तुमिच्छुस्सन् । कुर्यात् - कर्मयोगमेवाचरेत् ।। २५

अज्ञानां - आत्मन्यकृत्स्नविदाम् । कर्मयोगाधिकारिणाम्मुमुक्षाणाम् । बुद्धिभेदं - कर्मयोगादन्यदात्मावलोकनसाधनमस्तीत्येवं बुद्ध्यन्तरम् । न जनयेत् । किन्तु । विद्वान् - आत्मनि - कृत्स्नविदपि । युक्तः । कर्मयोगएव ज्ञानयोगनिरपेक्ष आत्मावलोकनसाधनमिति बुद्ध्यायुक्तस्सन् । सर्वकर्माणि । समाचरन् - सम्यगाचरन् । जोषयेत् - प्रीतिं जनयेत्, कर्मसंगिनामित्यनुषंगः ।। २६

कर्मयोगापेक्षितमात्मनोऽकर्तृत्वानुसन्धानप्रकारमुपदिशति (प्रकृ-

---

स्वभाव से कर्मों में आसक्त आत्मज्ञान हीन पुरुष जिस प्रकार कार्य करते हैं, आत्मज्ञानी व्यक्ति को भी अनासक्त होकर लोक संग्रह के लिए उसी प्रकार कर्मयोग का ही अनुष्ठान करना उचित है ।। २५

आत्मज्ञानी पुरुष को चाहिए कि वह कभी आत्मविषयक कर्मयोग के अधिकारी, कर्मनिष्ठ पुरुष की बुद्धि में भेद उत्पन्न न करे, अर्थात् कर्मयोग की अपेक्षा आत्मदर्शन के लिए अन्य श्रेष्ठ उपाय है इस प्रकार भेदबुद्धि उत्पन्न हो ऐसा आचरण न करे । अपितु वे कर्म में अनासक्त भाव से समस्त कर्मों का सम्यक् अनुष्ठान कर उस कर्मनिष्ठ पुरुष के कर्मों में प्रीति उत्पन्न कर कर्म में प्रवृत्त कराये ।। २६ ।।





**प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।**
**अहंकारविमूढात्मा कर्ताहमिति मन्यते ।।२७।।**
**तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।**
**गुणागुणेषु वर्तन्त इति मत्वा न सज्जते ।।२८।।**
**प्रकृतेर्गुणसंमूढाः संज्जन्ते गुणकर्मसु ।**
**तानकृत्स्नविदो मन्दान्कृत्स्नविन्न विचालयेत् ।।२९।।**

---

तेरिति ) अहङ्कारविमूढात्मा - अहङ्कारेण - अनात्मन्यात्माभिमानेन, विमूढः अविदितः, आत्मा येन स तथोक्तः । पुरुषः । प्रकृतेः, सम्बन्धिभिः । गुणैः - सत्वरजस्तमोभिः कर्तृभिः । स्वानुरूपम्, क्रियमाणानि । सर्वशः - सर्वाणि । कर्माणि प्रति । अहं कर्तेति । मन्यते - भ्रमतीत्यर्थः ।। २७

हे महाबाहो ! गुणकर्मविभागयोः - गुणाः - सत्वरजस्तमांसि, कर्माणि च - तत्कृतानि, तेषां । यौ, विभागौ - विवेकौ, तयोः । तत्त्ववित् - तत्त्वज्ञो विद्वांस्तु । गुणाः - सत्त्वादयः । गुणेषु - स्वकार्येषु । वर्तन्ते - प्रवर्तन्ते । इति - अनेन प्रकारेण । मत्वा । न सज्जते - कर्मस्वहंकर्तेत्येवं रूपं संगं न प्राप्नोति ।। २८

"न बुद्धिभेद" मित्युक्तमुपसंहरति ( प्रकृतेर्गुणसम्मूढा इति ) प्रकृतेः शरीराकारेण परिणतस्य भूतसूक्ष्मस्य, गुणसम्मूढाः - गुणैः - सत्त्वरजस्तमोभिः, सम्मूढाः - अविदितात्मस्वरूपा आत्मावलोकनाय प्रवृत्ता जनाः । गुणकर्मसु - गुणैः क्रियमाणासु क्रियास्वेव । सज्जन्ते - सक्ताभवन्ति, न तु

---

वास्तवमें लोकमें व्यक्ति प्रकृति के परिणाम रूप सत्व, रज, तम इन तीन गुणोंसे युक्त अपने मन और बुद्धि के द्वारा कर्म करता है, किन्तु अज्ञानी अहङ्कारी पुरुष समस्त कर्मों का 'कर्ता मैं हूँ' इस प्रकार मानता है ।। २७ ।।

हे अर्जुन ! जो विद्वान् पुरुष सत्वादि तीनों गुणों एवं उन उन गुणों से किये कर्मों के तत्व से यथार्थरूप से अवगत है वह सत्व आदि तीनों गुण ही इन्द्रिय गण को कर्म में प्रवृत्त कराते हैं, यह जानकर कर्मों का मैं ही कर्ता हूं इस प्रकार आसक्त नहीं होता है ।। २८ ।।

सत्व, रज, तम प्रकृति के इन तीन गुणों से आच्छादित अतएव आत्मज्ञानहीन मूढ़ व्यक्ति उन-उन गुणों द्वारा किये गये सम्पूर्ण कर्मों को 'मैं ही करता हूँ' यह जानकर उन सब कर्मों में आसक्त रहते हैं । उन मन्दबुद्धि जनों के परमात्म दर्शना-

**मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।**
**निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥३०॥**

---

गुणकर्मविविक्तात्मस्वरूप इत्यर्थः । तथा च तेषां ज्ञानयोगानधिकारात्कर्मयोग एवाधिकार इति भावः ॥ अतः । अकृत्स्नविदः - कात्स्न्र्येनाविदितात्मस्वरूपाः, तान् । मन्दान् - मन्दमतीन् । कृत्स्नवित् - कात्स्न्र्येनविदितात्मस्वरूपः पुरुषः । न विचालयेत् - स्वयमननुष्ठानेन कर्मयोगान्नच्यावयेदित्यर्थः । प्रकृतिविविक्तात्मस्वरूपज्ञानेन ममेदं कर्तृत्वं न स्वरूपप्रयुक्तम्, किन्तु गुणसम्पर्ककृतमिति गुणेषु कर्तृत्वारोपणमेव स्वस्याकर्तृत्वानुसन्धानमित्युक्तं भवति ॥ २९

एवं गुणेषु कर्तृत्वमारोप्य कर्मानुष्ठानप्रकार उक्तः । इदानीं स्वस्य भगवदेकनियाम्यताज्ञानेन भगवति गुणकृतञ्च कर्तृत्वमारोप्य कर्मानुष्ठानमाह ( मयीति ) अध्यात्मचेतसा - आत्मैकविषयेण मनसा । सर्वाणि - गुणसंसर्गकारितानि । कर्माणि । मयि - सर्वात्मभूते । सन्न्यस्य - त्यक्त्वा सर्वेश्वरस्स्वयमेव कर्माणि कारयतीत्यनुसन्धायेत्यर्थः । निराशीः - क्रियमाणकर्मफले निष्कामः । निर्ममः - तेषु कर्मसु ममकाररहितः । विगतज्वरः विगतः, ज्वरः - अनादिकालप्रवृत्तानन्तपापसंचयेन कथमहं भविष्यामीति सन्तापः, यस्य स तथोक्तः, परमपुरुष एव कर्मभिराराधिक स्ससर्वेभ्यः पापेभ्यो मां मोक्षयतीति निर्भर स्सन्नित्यर्थः । युध्यस्व - युद्धरूपं कर्मयोगं कुर्वित्यर्थः ॥ ३०

---

भिलाषी होने पर, आत्मज्ञानी पुरुष उन्हें कर्मयोग से छुड़ाकर ज्ञानयोग में प्रवृत्त नहीं करे । ज्ञानी को चाहिए कि स्वयं कर्मयोग का अनुष्ठान कर उन्हें भी कर्मयोग में प्रवृत्त करें ॥ २९

हे अर्जुन ! यह आत्मा परमात्मा का शरीर रूप है । अतएव परमात्मा से प्रवर्तित यह आत्मा परमात्मचिन्तन के परायण होकर, कर्म यद्यपि सत्व, रज, तम गुण कृत्य होने पर भी, सम्पूर्ण जीवों के उन सब कर्मों का नियामक मैं परमात्मा ही हूँ, मुझ से ही वे अनुमोदित हैं, यह मानकर मुझे ही वे सब कर्म समर्पण कर फलाभिसन्धि रहित होकर 'अपने कर्मों को मैं करता हूं' इस प्रकार के अहङ्कार और ममकार से रहित होकर एवं कर्मों से होने वाले पापों का क्षय मुझ परमात्मा पर छोड़कर निश्चिन्त हो तुम क्षत्रियोचित युद्ध रूप कर्म करो ॥ ३०





**ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।**
**श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥३१॥**
**ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।**
**सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ॥३२॥**

---

अयमेव साक्षादुपनिषत्सारभूतोऽर्थ इत्याह ( येम इति ) ये । मानवाः - शास्त्राधिकारिणः । मे - मम । इदम् । मतं सिद्धान्तम् । नित्यम् । अनुतिष्ठन्ति - आचरन्ति । येपि । श्रद्धावन्तः - अननुतिष्ठन्तोप्यस्मिन्नर्थे आस्तिक्यबुद्धिमन्तः । येपि । अनसूयन्तः - श्रद्धारहिता अपि एवं शास्त्रार्थो न सम्भवतीत्यस्मिन्महागुणे शास्त्रार्थेदोषमनाविष्कुर्वन्तो भवन्ति । तेपि । कर्मभिः - संसारहेतुभि स्सर्वैः कर्मभिः । मुच्यन्ते - मुक्ता भवन्ति ॥ ३१

उक्तं स्वाभिमतमर्थमननुतिष्ठतामश्रद्धधानानामभ्यसूयतां च दोषमाह ( येत्वेतदिति ) ये तु - पुरुषाः । एतत् । मे - मम । मतं - अभिमतमर्थम् । नानुतिष्ठन्ति - उक्तरीत्याऽकर्तृत्वानुसन्धानपूर्वकं सर्वाणि न कुर्वन्तीत्यर्थः । ये च । अभ्यसूयन्तः । वर्तन्ते । न श्रद्दधत इति चार्थसिद्धम् । तान् । सर्वज्ञानविमूढान् - सर्वेषु ज्ञानेषु विशेषेण मूढान् - चिदचिदीश्वरतत्त्वहितपुरुषार्थज्ञानेषु केनापि ज्ञानेन विहीनानित्यर्थः । अतएव । नष्टान् सत्ताशून्यान् । ज्ञानेन हि सत्तालाभ इति भावः । अचेतसः - न विद्यते, चेतः - मनः, येषां ते तथोक्ताः, तान् - वस्तुयाथात्म्यज्ञानरूपकार्याभावादमनस्कप्रायानित्यर्थः । विद्धि - जानीहि ॥ ३२

---

जो व्यक्ति मेरे इस सिद्धान्त का अनुष्ठान करता है, और जो इसका आचरण नहीं करते लेकिन उस सिद्धान्त में श्रद्धा रखते हैं या श्रद्धायुक्त होने पर भी 'यह सिद्धान्त शास्त्र सम्मत नहीं है' यह कहकर निन्दा नहीं करते वे सभी संसार को बढ़ाने वाले कर्मों से मुक्त रहते हैं ॥ ३१

जो उपर्युक्त ( परमात्मा को सम्पूर्ण कर्मों को समर्पण कर अकर्तापन रूप ) सिद्धान्त के अनुसार कर्मानुष्ठान नहीं करते हैं और चित्, अचित्, ईश्वर रूप परमपुरुषार्थ रूप समस्त तत्वज्ञान से रहित हैं उन सभी जीवों को नष्ट एवं कुबुद्धिपूर्ण जानो ॥ ३२

**सदृशं चेष्टते स्वस्याः प्रकृते र्ज्ञानवानपि ।**
**प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥३३॥**
**इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।**
**तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥३४॥**

---

ज्ञानयोगाधिकारिणः कर्मयोगाधिकारिणश्च कर्मयोग एव कर्तव्यः, व्यपदिष्टस्य तु विशिष्य स एव कर्तव्य इत्युक्तम् । अतः परमध्यायशेषेण ज्ञानयोगस्य दुष्करतया स प्रमाददतोच्यते ।

ज्ञानवान् - प्रकृतिविविक्तात्मस्वरूपं जानन्नपि । स्वस्याः - स्वकीयायाः । प्रकृतेः - प्राचीनवासनायाः । सदृशं - अनुगुणमेव । चेष्टते - प्रकृतिविषयेष्वेव व्याप्रियत इत्यर्थः । कुत इत्यत्राह (प्रकृतिमिति) भूतानि - अचित्संसृष्टजन्तवः । प्रकृतिं - अनादिकालप्रवृत्तवासनामेव । यान्ति - अनुवर्तन्ते । निग्रहः - शास्त्रजन्यज्ञानरूपः । तानि भूतानि । किं करिष्यति - किं कर्तुं समर्थः । बलीयसी ह्यनादिवासनेति भावः ॥ ३३

भूतानां प्रकृत्यनुवर्तनप्रकारमेवाह ( इन्द्रियस्येति ) इन्द्रियस्यश्रोत्रादेर्ज्ञानेन्द्रियस्य । इन्द्रियस्य - वागादिकर्मेन्द्रियस्य । अर्थे - शब्दादिरूपे वचनादि रूपे च विषये । रागद्वेषौ - रागः - तदनुभवेच्छा, द्वेषः - तदनुभवप्रतिहतौ सत्यां क्रोधः । व्यवस्थितौ - अवर्जनीयौ - तथा च तावेवज्ञानयोगाय यतमानं नियमितसर्वेन्द्रियं पुरुषं स्ववशीकृत्य प्रसह्य विषयैस्संघटयतः,

---

**आत्मस्वरूप के जानकार पुरुष को भी अपनी प्राचीन वासनाओं से युक्त स्वभाव के वश हो सम्पूर्ण कार्य करने होते हैं क्योंकि प्राणीमात्र को अवश होकर अपनी प्रकृति के अनुसार कर्म करना होता है, इसलिए वे इस प्रकार बलवान् प्रकृति को रोककर किस प्रकार अपने वश में कर सकते हैं ? अर्थात् किसी प्रकार नहीं कर सकते हैं ।। ३३**

**चक्षु आदि ज्ञानेन्द्रिय, हस्तपाद आदि कर्मेन्द्रियों द्वारा रूप, रस, शब्दादि भोग्य विषयों की भोगेच्छा एवं उन भोगों के न मिलने पर भोग विघ्नकारी के प्रति क्रोध ये दोनों ही अपरिहार्य हैं अर्थात् यह काम और क्रोध दोनों ही ज्ञानयोग के साधक को वश में करके विषय भोगों में लिप्त कर देते हैं । अतः काम और क्रोध ज्ञानयोग के साधक के लिए दुर्जय ( कठिन ) शत्रु हैं । उसे कभी भी इनके वशीभूत नहीं होना चाहिए ।। ३४**





**श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।**
**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥३५॥**

अर्जुन उवाच—

**अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।**
**अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥३६॥**

---

ततश्चायमात्मानुभवविमुखो विनष्टो भवेदिति भावः । अतः । तयोः - रागद्वेषयोः । वशं - अधीनतां । नागच्छेत् । सहसैव ज्ञानयोगारम्भेहि तत्परवश्यमनिवार्यमिति भावः ॥ तत्र हेतुमाह ( ताविति ) हि यस्मात्कारणात् । अस्य - ज्ञानयोगिनो मुमुक्षोः । तौ - रागद्वेषौ । परिपन्थिनौ - दुर्जयौ प्रतिपक्षावित्यर्थः ॥ ३४

ननु युद्धादिरूपः कर्मयोगोपि दुःखरूपत्वाद्यथावत्कर्तुमशक्य इत्यत्राह ( श्रेयानिति ) स्वधर्मः - प्रकृतिसंसृष्टपुरुषस्य पूर्वाभ्यस्त सजातीयतया स्वतएवप्राप्तत्वात्स्वधर्मभूतः कर्मयोग इत्यर्थः । विगुणोपि - अङ्गविकलोपि । स्वनुष्ठितात् - सांगमनुष्ठितात् । परधर्मात् - पूर्वमनभ्यस्ततया स्वतोऽप्राप्तत्वेन परधर्मभूताज्ज्ञानयोगादपि । श्रेयान् - श्रेष्ठः । स्वधर्मे - स्वधर्मभूते कर्मयोगे । वर्तमानस्येतिशेषः । निधनं - तस्मिन्जन्मनि फलमप्राप्यैव मरणमपि । श्रेयः - श्रेष्ठं । अनन्तर जन्मन्यप्रतिहतकर्मयोगारम्भ सम्भवादितिभावः । परधर्मः - ज्ञानयोगस्तु । भयावहः - सप्रमादत्वाद्भयंकरः ॥ ३५ ॥

हे वार्ष्णेय ? अथेतिप्रश्ने । अयं - ज्ञानयोगायप्रवृत्तः । पूरुषः । अनिच्छन्नपिविषयानुभव - मनाकांक्षन्नपि । केन - हेतुना । प्रयुक्तः -

---

**कर्मयोग दुःखरूप होने पर भी उसका श्रेष्ठत्व बताते हैं कि अनादिकाल से अपनी-अपनी वासना के अनुसार अभ्यस्त होने से कर्मयोग ही स्वधर्म है । सुसाध्य यह कर्मयोग सर्वाङ्ग सुन्दर रूप से अनुष्ठित न हो तथापि यह परधर्म रूपी ज्ञानयोग से श्रेष्ठ है । ( इससे पूर्व जन्म-जन्मान्तर में भी अनभ्यस्त और अपने स्वभाव के मुताबिक नहीं कहकर ज्ञानयोग को परधर्म कहा जा रहा है ) अतएव स्वधर्म रूप कर्मयोग में यदि इस जन्म में सफलता प्राप्त न होकर मृत्यु भी हो जाय, तो भी श्रेयस्कर है । परधर्म रूप ज्ञानयोग प्रमादपूर्ण एवं भयंकर है ।। ३५**

**अर्जुन बोले—हे वृष्णिवंश में उत्पन्न होने वाले श्रीकृष्ण ! ज्ञानयोग में प्रवृत्त पुरुष विषयों के अनुभव का इच्छुक न होने पर भी उसे कौन विषयों के अनु-**

श्रीभगवानुवाच—

**काम एष क्रोध एष रजोगुणसमुद्भवः ।**
**महाशनो महापाप्मा विद्धयेनमिह वैरिणम् ॥३७॥**
**धूमेनाव्रियते वह्निर्यथाऽऽदर्शो मलेन च ।**
**यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥३८॥**

---

प्रेरितः। बलान्नियोजितइव - बलात्कारेण नियुक्त इव। पापं - विषयानुभवरूपमनर्थम् । चरति प्राप्नोति ॥ ३६

एषः - त्वया पृष्टो हेतुः । रजोगुणसमुद्भवः - रजोगुणजनितः। काम एव - शब्दादिविषयको राग एव। एषः - काम एव। क्रोधः। काम एवहि प्रतिहतगति स्सन् प्रतिहतिहेतुभूतचेतनान्प्रति क्रोधात्मना परिणमति। किंच। महाशनः - महत्, अशनं, यस्य स तथोक्तः। सकृद्विषयानुभवदानेन समाधातुमशक्यो दुष्पूर इत्यर्थः। विषयेष्वेव सर्वदा पुरुषं प्रवर्तयतीति स, महापाप्मा - क्रोधाकारेण परिणतोऽतिक्रूर इत्यर्थः। परहिंसादौ प्रवर्तकत्वादिति भावः। अतः। एनं - रजोगुणसमुद्भवं काममेव। इह - ज्ञानयोगे। वैरिणं - विरोधिनम्। विद्धि जानीहि ॥ ३७

कामस्य वैरित्वमेव दर्शयति ( धूमेनेति ) यथा। वह्निः - अग्निः। धूमेन। आव्रियते - आवृतो भवति। यथा च। आदर्शः - मुकुरः। मलेन - मालिन्येन। आव्रियते। यथावा। गर्भः। उल्बेन - जरायुणा। आवृतः -

---

भव की प्रेरणा देता है एवं किसके द्वारा बलपूर्वक प्रेरित होकर वह इस विषयानुभव रूप पाप को करता है ? ॥ ३६

श्रीभगवान के कहा—हे अर्जुन ! जबरन विषय भोगों में प्रेरणा देने वाला अथवा नियोजक कौन है, उसे सुनो। काम अर्थात् पूर्वकर्म और वासना के अनुगुण शब्दादि विषय भोगों का अनुराग खण्डित होने से विघ्नकारी के प्रति क्रोधाविष्ट हो उठता है, इस क्रोधात्मक काम की क्षुधा अत्यन्त प्रबल है, किसी से भी वह पूर्ण नहीं की जा सकती है, एवं परहिंसा रूप क्रोधात्मक यह काम भी महा पापात्मक है। इसलिए इस काम क्रोध दोनों को ज्ञानयोग के साधन का विरोधी जानो ॥ ३७

अग्नि जैसे धूएँ से आवृत्त रहती है। दर्पण जैसे धूल आदि मल के द्वारा आवृत्त रहता है जैसे गर्भस्थ भ्रूण जरायु नाम झिल्ली से ढँका रहता है, उसी प्रकार संसार में जन्मे प्राणीमात्र काम के द्वारा आवृत्त या आच्छान्न रहते हैं ॥ ३८





**आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।**
**कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥३९॥**
**इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।**
**एतै र्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥४०॥**

---

आच्छादितः। तथा - तेन प्रकारेण। इदं - जन्तुजातं। तेन - कामेन। आवृतं ॥ ३८

आवरणप्रकारमेवाह ( आवृतमिति ) हे कौन्तेय ! ज्ञानिनः - ज्ञानगुणकस्य जन्तोः। ज्ञानं। आत्मविषयं ज्ञानं। दुष्पूरेण - स्वरूपविरुद्धतया प्राप्स्यनर्हविषयेण। अनलेन - पर्याप्तिरहितेन च। कामरूपेण। एतेन। नित्यवैरिणा - सन्ततविरोधिना। आवृतं - आच्छादितम् ॥ ३९

कैरुपकरणैरयं काम आत्मानमधितिष्ठतीत्यत्राह ( इन्द्रियाणीति ) अस्य - कामस्य। इन्द्रियाणि - चक्षुरादीनि। मनः - अन्तःकरणं। बुद्धिः - अध्यवसायश्च। अधिष्ठानं - आत्माधिष्ठानोपकरणं। एषः कामः। एतैः - इन्द्रियादिभिरुपकरणैः। ज्ञानं - आत्मस्वरूपयाथात्म्यविषयं। आवृत्य - आच्छाद्य। देहिनं - शरीरिणं। विमोहयति - विविधं मोहयति। आत्मानुभवविमुखं विषयानुभवप्रवणं च करोतीति भावः ॥ ४०

हे भरतर्षभ ! तस्मात् - कारणात्। त्वं - प्रकृतिसंसृष्टतयेन्द्रियव्यापारप्रवणो भवान्। आदौ - मोक्षोपायारम्भ समय एव। इन्द्रियाणि - श्रोत्रादीनि। नियम्य - तद्व्यापारानुगुण कर्मयोगवियतया संयम्य। ज्ञान-

---

हे कौन्तेय ! जीवात्मा का स्वरूप स्वभावतः ज्ञानगुण युक्त है। उसका आत्मविषयक स्वाभाविक ज्ञान जिसको पूर्ण नहीं किया जा सकता, जो परिव्याप्ति रहित अग्नि के समान है, ऐसे कामरूपी इस नित्य बैरी के द्वारा ढँका हुआ है। यह दुष्पूर काम ही जीव का नित्य बैरी है ॥ ३९

चक्षु श्रोत्र आदि इन्द्रियाँ, संकल्प विकल्पात्मक मन एवं निश्चयात्मिका बुद्धि से ही काम के निवास स्थान हैं। इन इन्द्रिय, मन, बुद्धि पर स्थित होकर इनके द्वारा यह काम जीवात्मा के स्वाभाविक आत्म विषयक ज्ञान को आच्छन्न करके उसे नाना प्रकार से मोह में डालता है ॥ ४०

तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।
पाप्मानं प्रजहीह्येनं ज्ञानविज्ञाननाशनम् ॥४१॥
इन्द्रियाणि पराण्याहु रिन्द्रियेभ्यः परं मनः ।
मनसस्तु पराबुद्धिर्यो बुद्धेः परतस्तु सः ॥४२॥
एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥४३॥

॥ इति श्रीभगवद्गीतायां तृतीयोध्यायः ॥ ३ ॥

---

विज्ञाननाशनं - ज्ञानं - शरीरातिरिक्तात्मस्वरूपविषयकं, विज्ञानं - तद्विवेकविषयकं, तयोः, नाशनं - नाशकरं । एनं - कामरूपं । पाप्मानं - वैरिणं । प्रजहीहि - प्रकर्षेणत्यज, नाशयेत्यर्थः ॥४१

इन्द्रियाणि - श्रोत्रादीनि दश । पराणि - ज्ञानविरोधिषु प्रधानानि । आहुः । शास्त्राणीतिशेषः । यतइन्द्रियेषु विषयव्यापृतेष्वात्मविषयं ज्ञानं न जायते । इन्द्रियेभ्योपि । मनः । परं - प्रधानं । इन्द्रियेषूपरतेष्वपि मनसि-विषयप्रवणे ह्यात्मज्ञानं न जायते । मनसस्तु । बुद्धिः - अध्यवसायः । परा-प्रधानभूता । मनसि वृत्त्यन्तरविमुखेपि विपरीताध्यवसायप्रवृत्तावात्म-ज्ञानं न जायते । सतु - कामस्तु । यः । बुद्धेरपि । परतः - प्रधानभुतः । सः सर्वज्ञानविरोधिविलक्षण इत्यर्थः । स एवहि सर्वाणीन्द्रियादीनि विषयेषु वर्तयित्वाऽऽत्मज्ञानं निरुणद्धीति भावः ॥ ४२

उक्तमर्थमुपसंहरति ( एवमिति ) हे महाबाहो ! एवं - उक्तप्रकारेण, बुद्धेरपि । परं - कामं । बुध्वा - ज्ञात्वा । आत्मानं - मनः । आत्मना -

---

हे भरतवंश में श्रेष्ठ अर्जुन ! इसलिए अब जबकि तुम मोक्ष के साधन की ओर अग्रसर होने जा रहे हो ऐसे समयमें सर्वप्रथम विषयों में प्रवीण इन इन्द्रियों को संयत करके ज्ञान विज्ञान के नष्ट करने वाले एवं सम्पूर्ण पापों का मूलकारण, महान् शत्रु इस काम को सब प्रकार से नष्ट करो ॥ ४१

नेत्रादि ज्ञानेन्द्रिय व हस्तपादादि कर्मेन्द्रिय ये दश इन्द्रियाँ ज्ञान की विरोधी कही जाती हैं । इस विषय में इन्द्रियों से मन और भी आगे है, मन से भी बुद्धि और भी प्रबल विरोधी है । बुद्धि से भी बढ़कर यह काम ही ज्ञान विरोधियों में सबसे प्रधान है ॥ ४२ ॥

अब उपर्युक्त विषय का उपसंहार करते हैं—हे महाबाहो अर्जुन ! उक्त





अध्यवसायरूपया बुद्ध्या । संस्तभ्य - कर्मयोगे व्यवस्थाप्य । दुरासदं - मत्परेभ्योऽन्यैदुर्जयं । कामरूपं । शत्रुं - ज्ञानयोगवैरिणं । जहि - नाशय ॥४३

॥ इति श्रीभगवद्गीताभाष्यार्थसंग्रहतात्पर्यदीपे श्रीवरवरमुनि
विरचितायां बालबोधिन्यपराभिधानायां गीताविवृतौ
गीतार्थसंग्रहदीपिकायां

तृतीयोऽध्यायः





---

प्रकार से काम को बुद्धि से भी अधिक प्रबल जानकर निश्चयात्मिका बुद्धि (अध्य-साय) द्वारा इस कामरूपी दुर्जय शत्रु ( आत्म विषयक ज्ञान के शत्रु ) को विनष्ट करो ॥ ४३ ॥

॥ इति तृतीय अध्यायः ॥

श्रीः

* श्रीमते रामानुजाय नमः *

* श्रीमते वरवरमुनये नमः *

# अथ चतुर्थोऽध्यायः

★

श्रीभगवानुवाच—

**इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।**
**विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥**

एव मध्यायद्वयेन कर्मयोगस्य मोक्षसाधनत्वमुक्त्वा तमेव प्रपंचयिष्यन् प्रथमं सत्सम्प्रदायप्राप्तत्वेन तमेव प्रशंसति "इम" मित्यादिश्लोकत्रयेण ।

अहम् । अव्ययं - अपायरहितम् । इमम् - पूर्वोक्तम् । योगं कर्मयोगम् । विवस्वते - सूर्याय । प्रोक्तवान् - उपदिष्टवान् । विवस्वान्-सूर्यः । मनवे - वैवस्वताय । प्राह । मनुः - वैवस्वतः । इक्ष्वाकवे - स्वपुत्राय । अब्रवीत् ॥ १ ॥

हे परन्तप ! एवं - उक्तप्रकारेण । परम्पराप्राप्तं - सम्प्रदायागतम् । इमं - कर्मयोगम् । राजानश्च ते ऋषयश्च - राजर्षयः - जनकादयः । विदुः ।

## चतुर्थ अध्याय

**ज्ञानयोग**

**श्रीभगवान ने कहा—हे अर्जुन ! इस कर्मयोग की साधना अति प्राचीन काल से सत्पुरुषों से अनुष्ठित है, इसी बात को प्रारम्भ के तीन श्लोकों से कहते हैं— इस अविनाशी कर्मयोग के विषय में मैंने मन्वन्तर के प्रारम्भ में सूर्य को उपदेश दिया था। सूर्य ने अपने पुत्र वैवस्वत मनु को और मनु ने अपने पुत्र इक्ष्वाकु को इस कर्मयोग के बारे में उपदेश दिया था ॥ १ ॥**





**एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।**
**स कालेनेह महता योगो नष्टः परन्तप ॥ २ ॥**
**स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।**
**भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥**

अर्जुन उवाच—

**अपरं भवतो जन्म परं जन्म विवस्वतः ।**
**कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४ ॥**

ननु युद्धप्रोत्साहनायेदानीमेव मया प्रोक्त इति भावः । सः - कर्मयोगः । इह - लोके । महता - दीर्घेण । कालेन । नष्टः - विच्छिन्नः ॥ २ ॥

स एव - विवस्वदाद्युपदिष्टप्रकार एव, अस्खलितरूप इति यावत् । अतएव । पुरातनः । अयम् । योगः - कर्मयोगः । मे मम । भक्तः - भक्तिमान् । सखा - मित्रञ्च । असि - भवसि । इति - हेतोः । ते - प्रपन्नाय तुभ्यम् । अद्य - अधुना, तव युद्धनिवृत्तिसमये । मया - दुष्टनिग्रहायावतीर्णेन मया । प्रोक्तः - प्रकर्षेणोक्तः, सविस्तर मुक्तइत्यर्थः । एतत् । उत्तमं - परमम् । रहस्यं - गुह्यं हि ॥ ३ ॥

अस्मिन् प्रसंगे भगवदवतारयाथात्म्यं यथावज्ज्ञातुमर्जुनः पृच्छति (अपरमिति) हे कृष्ण ! भवतः - तव । जन्म । अपरं - सन्निकृष्टम्, अस्मज्जन्मसमकालम् । विवस्वतः - सूर्यस्य । जन्म तु । परं - विप्रकृष्टम् । अष्टाविंशतियुगकालव्यवहितमित्यर्थः । त्वमेव । आदौ-पूर्वम् । प्रोक्तवानिति । सूर्याय प्रोक्तवानिति एतत्-असम्भावनीयमिममर्थम् । कथं - केन प्रकारेण । विजानीयां - यथार्थं जानीयाम् ॥ ४ ॥

**हे परन्तप ! शत्रुतापी वीर अर्जुन ! इस प्रकार सत्सम्प्रदाय पुरस्सर आगत इस कर्मयोग के विषय में क्रमशः सनकादि राजर्षि गण भी अवगत हुए, आज यह दीर्घकाल से चले आने वाला कर्मयोग इस पृथ्वी पर नष्ट प्रायः हो गया है ॥ २ ॥**

**तुम मेरे भक्त तथा श्रेष्ठ मित्र हो इसलिए इस प्राचीन कर्मयोग के विषय में पहले के समान ही आज तुमको विशेष रूप से उपदेश दे रहा हूँ । इस कर्मयोग का ज्ञान उत्तम एवं विशेषता से युक्त है । ३ ॥**

**अर्जुन बोले—हे कृष्ण ! आपका जन्म तो बहुत बाद में हमारे समकाल में हुआ और सूर्य का जन्म तो बहुत पहले हुआ, तब फिर प्रारम्भ में सूर्य को उपदेश आपने दिया था यह कैसे सम्भव हुआ होगा यह कैसे मान लें ? ॥ ४ ॥**

श्रीभगवानुवाच—

**बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।**
**तान्यहं वेद सर्वाणि नत्वं वेत्थ परन्तप ॥ ५ ॥**
**अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोपि सन् ।**
**प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥ ६ ॥**

---

हे अर्जुन ! तव च - तवेव । मे - मम । बहूनि - असंख्येयानि । जन्मानि - अवताराः । व्यतीतानि - अतिक्रान्तानि । हे परन्तप ! तानि - त्वदीयानि मदीयानि च सर्वाणि । अहं - सर्वज्ञः । वेद - जानामि । त्वं - कर्मवशेन संकुचितज्ञानो भवांस्तु । न वेत्थ - न जानासि ॥ ५ ॥

ननूत्पत्तिविनाशरहितस्य सर्वेश्वरतयाऽकर्मवश्य तवकथं जीववज्जन्मेत्यत आह (अजइति) अजः - कर्मणोत्पत्तिरहितोपि सन् । अव्ययः - कर्मणा-नाशरहितः, आत्मा - स्वरूपं, यस्य सोऽव्ययात्मा सन्नपि । भूतानां-जन्तूनां । ईश्वरः - नियन्ता सन्नपि । स्वां - स्वकीयां, पारमेश्वरीं । प्रकृतिं । अधिष्ठाय - अत्यजन्नेव । आत्ममायया - आत्मनः - स्वस्य, मायया - संकल्परूपज्ञानेन । सम्भवामि - देवमनुष्यादिसजातीयतयाऽवतरामि ॥ "अजायमानो बहुधाविजायत" इति श्रुतेरिति भावः ॥ ६ ॥

---

श्रीभगवान ने उत्तर दिया ( ४ श्लोकों में ) हे अर्जुन ! इससे पूर्व तुम्हारे और मेरे बहुत से जन्म हो गये हैं । उन सब जन्मों को क्योंकि मैं सर्वज्ञ हूँ अतः जानता हूँ किन्तु हे परन्तप ! तुम्हारा ज्ञान संकुचित है इसलिए तुम उस बात को नहीं जानते हो । इस भगवदुक्ति से ईश्वर का अवतार लेना एवं जीव का जन्म लेना ये दोनों ही प्रतिपादित होते हैं ।। ५ ।।

यद्यपि मैं जन्ममृत्यु रहित अव्यय स्वरूप एवं सर्वभूतों का नियन्ता (ईश्वर) हूँ. फिर भी मैं अपना परमेश्वरत्व स्वभाव बिना त्यागे अपने संकल्प के अनुसार अर्थात् स्वेच्छा से देव, मनुष्य आदिक रूपों में अवतीर्ण होता रहता हूँ । (पूर्वश्लोक में जन्म की सत्यता, इस श्लोक में अवतार का प्रकार अर्था अजत्व, अव्ययत्व, सर्वेश्वरत्व स्वभाव का त्याग बिना किये अवतार शरीर भी अप्राकृत अर्थात् अपनी प्रकृति बिना त्यागे निजरूप में अवतार लेता हूँ ) और उस अवतरण का हेतु मेरी इच्छा मेरा संकल्प ही कहा जाता है ।। ६ ।।





**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।**
**अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ ७ ॥**
**परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।**
**धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥ ८ ॥**

---

जन्मकालमाह (यदेति) हे भारत ! यदायदा - यस्मिन्यस्मिन्काले । धर्मस्य - वर्णाश्रमोचितस्य वेदोक्तस्य श्रेयस्साधनस्य कर्तव्यस्यार्थस्य । ग्लानिः उत्सादः । भवति । यदायदा । अधर्मस्य । अभ्युत्थानं - उद्रेकश्च । भवति । तदा । अहं । आत्मानं - मां । सृजामि - स्वसंकल्पेनैवावतारयामि । जीववन्ममजन्मकालनियमो नास्तीत्यर्थः ॥ ७ ॥

जन्मनः प्रयोजनमाह (परित्राणायेति) साधूनां - परमवैदिकं धर्मानुष्ठानशीलानां वैष्णवाग्रेसराणाम्मदाश्रितानां । परित्राणाय - तदभीष्टप्रदानेन संरक्षणाय । दुष्कृतां - तद्विरोधिनां । विनाशाय - विनाशंकर्तुं च । धर्मसंस्थापनार्थाय - धर्मस्य - क्षीणस्य वैदिकधर्मस्य, संस्थापनार्थाय - सम्यक् स्थापनं च कर्तुं । युगेयुगे । सम्भवामि - अवतरामि ॥ ८ ॥

उक्तरूपाणामीश्वरजन्मकर्मणां ज्ञाने फलमाह (जन्मेति) एवं - उक्तरूपस्य कर्ममूलजन्मचेष्टारहितस्य । मे - मम । दिव्यं - अप्राकृतम् । जन्म-देवमनुष्यादिरूपेण जननम् । कर्म - तत्तज्जन्मानुगुणचेष्टितं च । तत्त्वतः - यथार्तः, परानुग्रहार्थत्वेनेति यावत् । यः - पुरुषः । वेत्ति - जानाति । हे

---

हे अर्जुन ! जब-जब वर्ण और आश्रमोचित वैदिक धर्म का अधःपतन होकर आसुरी अधर्म का प्रादुर्भाव होता है । तब-तब मैं अपने संकल्पानुसार स्वेच्छा से प्रयोजन से अनुकूल शरीर धारण करके अवतीर्ण होता हूँ ॥ ७ ।

अब ईश्वर के अवतार का प्रयोजन बतलाते हैं—मेरी आराधना के परायण मेरे ही आश्रित सज्जनों की सब प्रकार से रक्षा करने के लिए और साधुजनों के विरोधी दुष्टों के विनाश करने के लिए एवं ज्ञान का उपदेश तथा आचरण के द्वारा नष्ट प्राय: (दुर्बल) वैदिक धर्म की पुनः स्थापना करने के लिए मैं युग-युग में अवतीर्ण होता हूँ ।

**जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।**
**त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोर्जुन ॥ ९ ॥**
**वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।**
**बहवो ज्ञानतपसा पूता मद्भावमागताः ॥१०॥**

---

अर्जुन ! सः - पुरुषः । देहं - वर्तमानशरीरं । त्यक्त्वा - विहाय । पुनः - भूयोपि । जन्म - देहान्तरपरिग्रहरूपं । नैति - न प्राप्नोति । किन्तु, मामेव । एति - प्राप्नोति ॥ ९ ॥

कथं त्वदीयजन्मकर्मज्ञानेन त्वत्प्राप्ति स्स्यादित्यत्राह ( वीतरागेति ) ज्ञानतपसा - ज्ञानं - मदवताररहस्यविषयकं परिज्ञानं, तदेव तपः, तेन । पूताः - निरस्तमत्समाश्रयणविरोधिपापाः । बहवः - पुरुषाः । मां - सर्वेश्वरमाश्रितवात्सल्यैकजलधिम् । उपाश्रिताः - संश्रिताः । अतएव । वीतरागभयक्रोधाः - रागः - अलब्धविषयस्पृहा, भयं - लब्धविषयविश्लेषभीतिः, क्रोधः - तद्विश्लेषहेतुषु द्वेषः, वीताः - नष्टाः, रागादयः - येषां ते तथोक्ताः । मन्मयाः - मदेकचित्ताश्च सन्तः । मद्भावं - मत्साधर्म्यम् । गताः - प्राप्ताः ॥ १० ॥

न केवल मुक्तसाधुपरित्राणमेव मदवतारप्रयोजन मित्याह (ये यथेति) ये - मत्समाश्रयणपराः पुरुषाः । यथा - येन स्वापेक्षितेन प्रकारेण । माम् ।

---

ईश्वर के उपरोक्त प्रकार से जन्म कर्म ज्ञान का फल बतलाते हैं—उपर्युक्त प्रकार से सर्वेश्वरत्वादि से युक्त कर्म की परतन्त्रता से रहित स्वेच्छा से ग्रहण किया गया मेरा अप्राकृत जन्म अर्थात् देव मनुष्यादि रूप से आविर्भाव एवं उन - उन जन्मों के अनुसार दिव्य कर्मों के यथार्थ तत्व को जान पाते हैं, हे अर्जुन ! शरीर त्यागने के पश्चात् उन्हें फिर से जन्म नहीं लेना पड़ता, वे लोग मुझको प्राप्त करते हैं ॥९॥

मेरे अवतार विषय को लेकर पूर्वोक्त ज्ञानरूप तपस्या के द्वारा निष्पाप एवं पवित्र चित्त होकर बहुत से लोग मेरे शरणागत होते हैं । इसके बाद मेरी कृपा से 'वे लोग (अप्राप्त विषयों के प्रति उन्हें प्राप्त करने की इच्छा रूप) आसक्ति, प्राप्त विषय के विश्लेष से होने वाली आशङ्का रूप भय एवं विश्लेष कराने वाले के प्रति द्वेषरूप क्रोध रहित होकर तथा मेरे परायण होकर अपहत पाप्मत्वादि मेरे स्वधर्मों को प्राप्त होता है ॥ १० ॥





**ये यथा मां प्रपद्यन्ते तां स्तथैव भजाम्यहम् ।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥११॥**
**कांक्षन्तः कर्मणां सिद्धिं यजन्तः इह देवताः ।**
**क्षिप्रं हि मानुषेलोके सिद्धिर्भवति कर्मजा ॥१२॥**

---

संकल्प्य, प्रपद्यन्ते - समाश्रयन्ते । तान् । अहम् । तथैव - तदपेक्षितेनैव प्रकारेण मां दर्शयित्वा । भजामि - अनुगृह्णामि । हे पार्थ ! तस्मात् । मनुष्याः - मदनुवर्तनैकपरा मानवाः । मम । वर्त्म - मार्गं, हेयप्रत्यनीककल्याणैकतानस्वरूप गुणविभूतिकत्वरूपं स्वभावमिति यावत् । सर्वशः - स्वापेक्षितसर्वप्रकारैरपि । अनुवर्तन्ते - अनुभविष्यन्तीत्यर्थः ॥ ११ ॥

एवं प्रसक्तानुप्रसक्तमर्थं परिसमाप्य प्रकृतकर्मयोगेऽधिकारिदौर्लभ्यमाह ( कांक्षन्त इति ) इह - लोके । सर्वे पुरुषाः । कर्मणाम् । सिद्धिं - फलम् । कांक्षन्तः - कामयमाना स्सन्तः । देवताः - इन्द्रादिदेवतान्तराण्येव । यजन्ते - कर्मभिराराधयन्ति, नतु सर्वदेवतान्तर्यामिणं सकलकर्माराध्यं मां यजन्तीत्यर्थः । हि - यस्मात्कारणात् । मानुषे । लोके । कर्मजा - कर्मजन्या । सिद्धिः - पुत्रपश्वन्नादिरूपं फलम् । क्षिप्रं - शीघ्रमेव । भवति । अत्र मानुषलोकशब्दस्स्वर्गादेरप्युपलक्षणार्थः । सर्वेपि क्रियाफलकांक्षिण स्सन्तो देवतान्तराराधनपरा एव, न कश्चिदपि मुमुक्षुस्सन्मदाराधनैकरूपं कर्मयोगमारभत इति भावः ॥ १२ ॥

---

मेरी शरण में आया सज्जन व्यक्ति जिस प्रकार का संकल्प या प्रार्थना करके मेरी शरण में आता है, उसकी उस प्रार्थित अभिलाषा के अनुसार पति पुत्र आदि रूप अथवा वराह नृसिंह आदिक विग्रह स्वीकार करके मैं उन पर अनुग्रह करता रहता हूँ, इसलिए हे पार्थ ! ऐसा व्यक्ति मेरे सम्पूर्ण कल्याणमय स्वरूप, रूप, गुण, लीला और विभूति विशिष्ट स्वभाव को अपनी प्रार्थना के अनुसार सम्पूर्ण रूप से अनुभव करता रहता है ॥ ११ ॥

इस संसार में प्रायः सभी लोग पुत्र, कलत्र, धन, धान्य, प्रतिष्ठा आदिक कामनाओं के वशीभूत हैं । इसलिए वे काम्यकर्म उनकी फलसिद्धि के लिए इन्द्रादि देवों की आराधना करते रहते हैं (प्रायः कोई भी मुक्ति प्राप्ति के उद्देश्य से मेरी (श्रीकृष्ण की) आराधना रूप कर्म का अभ्यास नहीं करते, क्योंकि इस मृत्युलोक में काम्यकर्मों की फलसिद्धि शीघ्र ही हो जाती है निष्काम कर्मयोग की सिद्धि उनकी अपेक्षा वैसी शीघ्र नहीं होती है ॥ १२ ॥

**चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।**
**तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥१३॥**
**न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।**
**इति मां योऽभिजानाति कर्मभिर्न स बद्ध्यते ॥१४॥**

---

यथोक्तकर्मयोगारम्भविरोधि पापक्षयहेतुमाह श्लोकद्वयेन । चत्वारो वर्णा श्चातुर्वर्ण्यं, चातुर्वर्ण्यप्रमुखं कृत्स्नं जगदित्यर्थः । गुणकर्मविभागशः - गुणाः - सत्त्वादयः, कर्माणि - तदनुगुणशमदमादीनि, तेषां, विभागशः - विभागेन, सत्त्वप्रधानो ब्राह्मणवर्णः - तस्य शमदमादीनि कर्माणि, रजः प्रधानः क्षत्रियवर्णः - तस्य कर्माणि युद्धादीनि, रजस्तमः प्रधानो वैश्यवर्णः - तस्य कृषिवाणिज्यादीनि कर्माणि, तमः प्रधान शूद्रवर्णः - तस्य पूर्ववर्ण-शुश्रूषादीनि कर्माणीत्येवं रूपविभागेन सहेत्यर्थः । मया - सर्वेश्वरेण । सृष्टम् । इदं स्थितिसंहारयोरप्युपलक्षणम् । तस्य - विचित्रजगत्सृष्ट्यादेः । कर्तारमपि । अव्ययं - कर्मकृतोत्पत्तिविनाशरहितम् । अतएव । अकर्तारं-फलतः कर्तृत्वरहितमेव । माम् । विद्धि - जानीहि ॥ १३ ॥

कुतइत्यत्राह ( नमामिति ) कर्माणि - सृष्ट्यादीनि । मां । न लिम्पन्ति, नबध्नन्ति । किंतु - क्षेत्रज्ञपुण्यपापमूलकत्वेन तानेव लिपन्तीत्यर्थः । मे - अवाप्तसमस्तकामस्य मम - कर्मफले - सृष्ट्यादिकर्मफले च । स्पृहा -

---

सत्वादि गुण एवं उस-उस गुण से होने वाले शम दमादि कर्मों का विभाग करके ब्राह्मण, क्षत्रिय, वैश्य, शूद्र इन चतुर्वर्णों को मैंने ही पैदा किया है । चातुर्वर्ण्य आदिक इस जगत का सृष्टि कर्ता होकर भी मुझे अकर्ता ही जानो । जिस कारण से मैं कर्मकृत् उत्पत्ति - विनाश से रहित हूँ अतएव मैं अव्यय पुरुष हूँ इसलिए आसक्ति पूर्ण कर्तृत्व रहित वास्तविक रूप से अकर्ता हूँ ॥ १३ ॥

कर्ता होकर भी अकर्ता कैसे ? इसी को बताते हैं—सृष्टि इत्यादि जितने कर्म हैं वे मुझे लिप्त नहीं कर पाते । (मैं सृष्टि कर्ता होते हुए भी वास्तव में देव, मनुष्यादि यह विचित्र जगत् सृष्टि उन-उन जीवों के अपने-अपने कर्मफलों से होने वाली है, इसलिए मेरे द्वारा की नहीं, अतएव मैं इस रूप से अकर्ता हूँ) । मैं स्वयं अपने लाभ से परिपूर्ण हूँ । अतः मुझे किसी कर्मफल की इच्छा भी नहीं । जगत् सृष्टि आदि का कर्ता होते हुए भी मुझे जो इस प्रकार अकर्ता जानता है, वह काम्य-कर्मों से होने वाले पुण्य पापों से संसार में आबद्ध नहीं रहता, वह मुक्ति प्राप्त कर लेता है ॥ १४ ॥





**एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।**
**कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥१५॥**
**किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।**
**तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥१६॥**

---

इच्छा । नास्ति, किन्तु - क्षेत्रज्ञानामेवेति भावः । इति - अनेन प्रकारेण । यः । मां । अभिजानाति । सः । कर्मभिः - कर्मयोगारम्भ विरोधि पुण्य पापरूपैः । न बध्यते, किन्तु मुच्यत इत्यर्थः ॥ १४ ॥

कर्मयोगमेव प्रपंचयितुं तस्य कर्तव्यतां स्मारयति (एवं ज्ञात्वेति) एवं - उक्तप्रकारेण । ज्ञात्वा-मदीयावतारहस्यं बुद्ध्वा । पूर्वैः - प्राचीनैः । मुमुक्षुभिः - विवस्वदादिभिरपि । कर्म - कर्मयोगः । कृतं - आचरितम् । तस्मात् - कारणात् । त्वम् । पूर्वैः । कृतम् । अतएव । पूर्वतरं - पुरातनम् । कर्म - उक्त वक्ष्यमाणप्रकारकर्मयोगमेव । कुरु - समाचर ॥ १५ ॥

वक्ष्यमाणप्रकारस्य कर्मयोगस्य दुर्ज्ञानतामाह ( किं कर्मेति ) कर्म - मुमुक्षुभिरनुष्ठेयम् । किं - किं रूपम् । अकर्मच । किम् । अत्राकर्मशब्देन कर्मयोगाङ्गभूतं तदन्तर्गतं कर्तुरात्मनो याथात्म्यज्ञानं विवक्षितम् । तच्च किंरूपमित्यर्थः । इति - अनेन प्रकारेण । अत्र - अस्मिन्नर्थे । कवयः - विद्वांसोपि । मोहिताः - संजातमोहाः । यथावन्न जानन्तीत्यर्थः । तत् - ज्ञानगर्भं मदाराधनात्मकम् । कर्म । ते - तव । प्रवक्ष्यामि । यत् - कर्म । ज्ञात्वा - ज्ञानपूर्वकमनुष्ठाय । अशुभात् - संसारबन्धरूपादनर्थात् । मोक्ष्यसे - मुक्तो भविष्यसि ॥ १६ ॥

---

पूर्वोक्त प्रकार से मुझे आश्रितवत्सल, कर्म कर्तृत्व बुद्धि रहित एवं कर्मफलों में स्पृहा (अभिलाषा) रहित जानकर वैवस्वत मनु, जनक आदिक प्राचीन मुमुक्षु जनों ने कर्मयोग का अनुष्ठान किया है । इसलिए तुम भी उन प्राचीन मुमुक्षुओं के आचरित अति पुरातन कर्मयोग का ही आचरण करो ॥ १५ ॥

अब दो श्लोकों से कर्म के स्वरूप का उपदेश देते हैं—मुमुक्षुओं से अनुष्ठान करने योग्य इस कर्मयोग का स्वरूप किस प्रकार है एवं कर्मयोग के अङ्गरूप उसके अन्तर्गत ज्ञानाकारता रूप अकर्म का स्वरूप भी क्या है, उसे विद्वान् पुरुष भी यथार्थ रूप से नहीं जानते, उस ज्ञानाकार मेरे आराधन रूप कर्म का यथार्थ तत्व मैं तुम्हें उपदेश करता हूँ । उस तत्वज्ञान के अनुसार कर्म के अनुष्ठान द्वारा तुम संसार रूप बन्धन से विमुक्त हो जाओगे ॥ १६ ॥

**कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।**
**अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥१७॥**
**कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।**
**स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥१८॥**

कुतोऽस्य दुर्ज्ञानतेत्यत्राह (कर्मण इति) हि–यस्मात्कारणात् । कर्मणः - मोक्षसाधनभूतस्य कर्मयोगस्यापि । बोद्धव्यंज्ञातव्यं स्वरूपम् । अस्ति । विकर्मणः - नित्यनैमित्तिकादिरूपेण तत्साधनद्रव्यार्जनाद्यकारेण च विविधं कर्म विकर्म, तस्य च । बोद्धव्यम् । अस्ति । अकर्मणः - आत्मयाथात्म्यज्ञानस्य च । बोद्धव्यम् । अस्ति । अतः । कर्मणः - मुमुक्षुभिरनुष्ठेयस्य कर्मयोगस्य । गतिः - प्रकारः । गहना - दुर्बोधा ॥ १७ ॥

कर्माकर्मणो र्बोद्धव्यमाह (कर्मणीति) यः - पुरुषः । कर्मणि- कर्मयोगे । अकर्म - आत्मयात्म्यज्ञानं । पश्येत् - ज्ञानगर्भतया ज्ञानाकारतां पश्येदित्यर्थः । यः । अकर्मणि - आत्मयाथात्म्यज्ञाने । कर्मच । पश्येत् - ज्ञानस्य कर्मान्तिर्गततया कर्माकारतां च पश्येदित्यर्थः । स एव । कृत्स्नकर्मकृत् - कत्स्नं - सर्वं, कर्म - शास्त्रार्थं, करोतीति तथोक्तः ॥ १८ ॥

ननु प्रवृत्तिरूपस्य कर्मणो ज्ञानाकारता कथमित्यत्राह (यस्येति) यस्य - मुमुक्षोः । सर्वे - समस्ताः, द्रव्यार्जनादि लौकिककर्मपूर्वकाः ।

कर्मयोग की दुर्बोधता बताते हैं—

कर्मयोग रूप कर्मका धन, जन, द्रव्य संग्रह आदिक नित्यनैमित्तिक विकर्म का अर्थात् विविध कर्मों का एवं आत्म चिन्ता अथवा आत्मयाथार्थ ज्ञान रूप कर्म राहित्य अथवा अकर्म प्रत्येक के भिन्न-भिन्न स्वरूप हैं, जिन्हें कर्मयोगी मुमुक्षु व्यक्ति को अवश्य जानने चाहिए । अनुष्ठान करने योग्य कर्मयोग के अन्तर्गत कर्म के इस जानने योग्य रहस्य में प्रवेश करना कठिन है ॥ १७ ॥

जो व्यक्ति कर्मयोग में आत्मज्ञान रूप अकर्म अर्थात् यह कर्मयोग ज्ञानगर्भित बताकर ज्ञानाकार रूप में इसे जानते हैं एवं जो आत्मा के यथार्थ ज्ञान के मध्य में भी कर्म का आकार देखते हैं, मनुष्यों में वे ही बुद्धिमान कर्म के बार में तत्वज्ञ हैं और वे ही मोक्ष प्राप्त करने के उपयुक्त हैं एवं वे ही समस्त कर्मों को शास्त्र विधि से करते हैं ॥ १८ ॥





**यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः ।**
**ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥१९॥**
**त्यक्त्वा कर्मफलासंगं नित्यतृप्तो निराश्रयः ।**
**कर्मण्यभिप्रवृत्तोपि नैव किंचित्करोति सः ॥२०॥**

सम्यगारभ्यन्त इति समारम्भाः - कर्माणि । कामसंकल्पवर्जिताः - कामः - फलसङ्गः, एकीकृत्य कल्पनं संकल्पः - प्रकृति तद्गुणात्मैक्यभ्रमः, ताभ्यां वर्जिताः । भवन्ति - फलसङ्गवर्जिताः प्रकृतिवियुक्तात्मानुसन्धानयुक्तश्चेति यावत् । तं - कामसंकल्पवर्जितं कर्म कुर्वाणं । पण्डितं - विद्वांसम् । ज्ञानाग्निदग्धकर्माणं - ज्ञानेन - कर्मान्तिर्गतात्मयाथात्म्यज्ञानरूपेण, अग्निना, दग्धानि, कर्माणि - मोक्षविरोधिपापानि, यस्य तं तथोक्तम् । बुधाः - तत्वज्ञाः । आहुः - वदन्ति । प्रवृत्तिरूपस्यापि कर्मणोऽन्तर्गतात्मयाथात्म्य ज्ञानतया ज्ञानाकारत्वमुपपद्यत इति भावः ॥ १९ ॥

एतदेवविवृणोति (त्यक्त्वेति) यः । कर्मफलासंगं - कर्मणि - अनुष्ठीयमाने, फलासंगं - फलासक्ति । त्यक्त्वा । नित्यतृप्तः - नित्ये - स्वात्मन्येव, तृप्तः - तृप्तिंगतः । निराश्रयः - अस्थिरायां प्रकृतावाश्रयबुद्धिरहितश्च । भवति । सः । कर्माणि । अभिप्रवृत्तोपि - आभिमुख्येनप्रवृत्तोपि । किंचिदपि - कर्म । न करोत्येव - कर्मानुष्ठानव्याजेन ज्ञानाभ्यासमेव करोतीत्यर्थः, अतः कर्मणो ज्ञानाकारत्वमुपपन्नमिति भावः ॥ २० ॥

नित्यनैमित्तिक समस्त कर्मों को फल की अभिलाषा से रहित एवं देह में आत्मबुद्धि (अहङ्कार अथवा 'मैं कर्ता हूँ' इस बुद्धि) से रहित अर्थात् फल की कामना और कर्तृत्वाभिमान रहित होना ही यथार्थ ज्ञान है ऐसे ज्ञान पूर्वक किये कर्म का फल इस ज्ञानाग्नि द्वारा जला दिया जाता है । नष्ट हो जाता है एवं ऐसे निष्काम अर्थात् कामना रहित कर्म के कर्ता को कर्मफल भोग नहीं करना पड़ता है । क्रियमाण कर्म के बीच में ही उक्त ज्ञान से युक्त अनुष्ठाता यथार्थ ज्ञानी पण्डित पुरुष के पूर्व जन्मार्जित प्राचीन कर्म उसके युक्त ज्ञान रूप अग्नि के द्वारा भस्म होकर नष्ट हो जाते हैं, अर्थात् सम्पूर्ण प्राचीन कर्मों के पुण्य पाप रूप फल नष्ट हो जाते हैं, यह विद्वानों का मत है ॥ १९ ॥

जो पुरुष किसी भी प्राकृत (अनित्य) वस्तु की अपेक्षा नहीं रखता एवं नित्य वस्तु आत्मा के अनुभव में ही परितृप्त रहता है, अर्थात् फलासक्ति से रहित होकर

**निराशीर्यतचित्तात्मा त्यक्तसर्व परिग्रहः ।**
**शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥२१॥**
**यदृच्छालाभ सन्तुष्टो द्वन्द्वातीतो विमत्सरः ।**
**समः सिद्धावसिद्धौ च कृत्वापि न निबद्धयते ॥२२॥**

---

पुनरपिकर्मणो ज्ञानाकारत्वमेव विशोध्यते "निराशी" रित्यादिना । निर्गताः, आशिषः - फलकामनाः , यस्मात्स निराशीः । यतचित्तात्मा - चित्तं - मनः, आत्मा - शरीरं, यतो नियतौ, चित्तात्मानौ यस्य स तथोक्तः । त्यक्तसर्वपरिग्रहः - त्यक्ताः - परित्यक्ताः, सर्वे, परिग्रहाः - प्रकृतिप्राकृतवस्तुषु ममकाराः, येन स तथोक्तः; आत्मैकप्रयोजन इतियावत् । केवलं ज्ञाननिष्ठारहितं । शारीरं - शरीरमात्रसाध्यं । कर्म । कुर्वन्नपि । किल्बिषं - संसारं । नाप्नोति । ज्ञाननिष्ठां विनाप्यन्तर्गतात्मज्ञानत्वमात्रेणावलोकनरूपज्ञाननिष्ठाकार्यकरत्वेन ज्ञानाकारत्वं कर्मण इति भावः ॥ २१ ॥

यदृच्छालाभसन्तुष्टः - यदृच्छया - अयत्नेनैव, यो लाभः - शरीरधारणहेतु द्रव्यादिप्राप्तिः, तेन सन्तुष्टः । द्वन्द्वातीतः - द्वन्द्वानि - अवर्जनीयशीतोष्णादीनि, अतीतः; तत्सहिष्णुरित्यर्थः । विमत्सरः - अनिष्टागमे स्वकर्महेतुकत्वज्ञानेन परेषु विगतमत्सरः । सिद्धौ - असिद्धौ च - युद्धादिकर्मसु जयादि सिद्धय सिद्धयोः । समः - तुल्यः, निर्विकार इति यावत् । एतादृशः ।

---

सम्पूर्ण कर्म करता है वह कर्म करता हुआ भी कर्म नहीं करता, वह तो नाममात्र कर्म का अनुष्ठान करता है । यहाँ कर्म को उपलक्ष्य करके उस कर्म के अन्तर्गत ज्ञान का ही अभ्यास करता है । इससे कर्म की ज्ञानाकारता प्रतिपन्न होती है ॥२०

कर्म के फल में आसक्त न होकर, अपने मन, बुद्धि को संयत करके एवं समस्त प्राकृत वस्तुओं से ममता रहित होकर केवल शरीर द्वारा कर्म करने पर भी वह पुरुष कर्मफल से पैदा होने वाले किसी पाप का भागी नहीं होता अर्थात् उसे संसार भोग नहीं करना पड़ता है ॥ २१ ॥

जो बिना किसी चेष्टा के प्राप्त यदृच्छालब्ध द्रव्य के लाभ से ही सन्तुष्ट रहता है, शीतल-उष्ण (गरम), सुख दुःख आदिक द्वन्द्वों में विचलित नहीं होता, जो दूसरों के सुख को सहन न कर सकना रूप मात्सर्य से रहित हैं, एवं कार्य की सिद्धि अथवा असिद्धि दोनों अवस्थाओं में निर्विकार और निर्लिप्त रहते हैं उन्हें कर्म करते हुए भी संसार बन्धन की प्राप्ति नहीं होती अर्थात् वे मुक्तिलाभ प्राप्त करते हैं ।२२





**गत संगस्य मुक्तस्य ज्ञानावस्थितचेतसः ।**
**यज्ञाया चरतः कर्म समग्रं प्रविलीयते ॥२३॥**
**ब्रह्मार्पणं ब्रह्म हविः ब्रह्माग्नौ ब्रह्मणा हुतम् ।**
**ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म समाधिना ॥२४॥**

---

कृत्वापि - केवल कर्मकृत्वापि । न निबध्यते । ज्ञाननिष्ठां विनापि संसारं न प्राप्नोतीत्यर्थः ॥ २२ ॥

ज्ञानावस्थितचेतसः - ज्ञाने - देहातिरिक्तात्मविषयके, अवस्थितं - नियतं, चेतो यस्य तथोक्तस्य । अतएव । गतसंगस्य - गतः - नष्टः, संगः - आत्मेतरविषयासक्तिः यस्य तथोक्तस्य । अतएव । मुक्तस्य - निखिलपरिग्रहनिमुक्तस्य । यज्ञाय - यज्ञादिकर्मनिष्पत्तये । आचरतः - वर्तमानस्य पुरुषस्य । कर्म - बन्धहेतुभूतं प्राचीनपुण्यपापरूपं कर्म । समग्रं - निश्शेषं । प्रविलीयते ॥ २३ ॥

एवं प्रकृतिवियुक्तात्मज्ञानगर्भतया कर्मयोगस्य ज्ञानाकारत्वमुक्तं । इदानीं ब्रह्मात्मकत्वानुसन्धानयुक्ततया ज्ञानाकारत्वमाह (ब्रह्मार्पणमिति) ब्रह्मार्पणं - अर्प्यतेऽनेन हविरित्यर्पणंस्रुवस्रुवादिकं, ब्रह्म - ब्रह्मात्मकं, अर्पणं यस्य तत्तथोक्तं । ब्रह्महविः - ब्रह्म - ब्रह्मात्मकं, हविः - पुरोडाशादिकं होम-

---

जो आत्म तत्व को जानने वाले हैं एवं सांसारिक भोग्य वस्तुओं में वैराग्य पूर्ण हैं, इसलिए जिनकी भोग वासना तक निवृत्त हो गयी है, ऐसे पुरुष केवल ईश्वर के आराधन के लिए ही यज्ञादि सभी कर्मों को करते हैं । ऐसे लोगों के संसार बन्धन के कारण रूप पुन्य पाप फल को देने वाले प्राचीन कर्म सम्पूर्ण रूप से नष्ट हो जाते हैं ॥ २३ ॥

यज्ञ के 'श्रुक्' 'श्रुवादि' अर्पण करने वाले पात्र, 'पुरोडाश' तिल, घृत आदि होमाग्नि में अर्पण करने योग्य नैवेद्य, यज्ञकर्ता, यजमान आदि, एवं जिसे आहुति अर्पित की जाती है व 'अग्नि' आदि यज्ञ रूप कर्म के ये सब अङ्ग ब्रह्मात्मक हैं, इसलिए यज्ञ कर्म को भी ब्रह्मात्मक मानकर जो अनुष्ठान करते हैं, वे ब्रह्मात्मक या ब्रह्मभूत आत्मस्वरूप प्राप्त कर लेते हैं । यहाँ यज्ञ कर्म तो केवल उपलक्षण मात्र है । इस कथन से तो समस्त कर्म ही ब्रह्मात्मक या ब्रह्ममय हैं यह कहा गया है ।

( प्रत्येक कर्म ब्रह्मात्मकत्व रूप ज्ञानाकारता से अनुसन्धान द्वारा नैष्कर्म्य रूप ज्ञानयोग साधन के बिना भी आत्मावलोकन सिद्ध हो जाता है, उसी को बतलाते हैं ) ॥ २४ ॥

**दैवमेवापरे यज्ञं योगिनः पर्युपासते ।**
**ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ।।२५।।**
**श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।**
**शब्दादीन्विषयानन्ये इन्द्रियाग्निषु जुह्वति ।।२६।।**

---

द्रव्यं । ब्रह्मणा - ब्रह्मात्मकेन कर्त्रा । ब्रह्माग्नौ - ब्रह्मात्मक आहवनीयाग्नौ । हुतम् - त्यक्तम् । इति शब्दोऽध्याहर्तव्यः । इति - अनेनप्रकारेण । ब्रह्मकर्मसमाधिना - ब्रह्मात्मके कर्मणि, समाधिः - अनुसन्धानं, यस्य तेनतथोक्तेन । तेन - कर्त्रा । ब्रह्म - ब्रह्मात्मकतया ब्रह्मभूत मात्मस्वरूपमेव । गन्तव्यं - प्राप्यं । मुमुक्षुणाक्रियमाणं कर्म ब्रह्मात्मकत्वानुसन्धानयुक्ततया ज्ञानाकारं ज्ञाननिष्ठां विनैवात्मावलोकनसाधनमिति भावः ।। २४ ।।

कर्मणां ज्ञानाकारत्वमुक्त्वा कर्मयोगभेदानाह ( दैवमिति ) दैवं - इन्द्राणि देवतार्चनरूपमेव यज्ञं । अपरे योगिनः - केचित्कर्मयोगिनः । पर्युपासते - सेवन्ते, तत्रैव निष्ठांकुर्वन्तीत्यर्थः । अपरे – अन्ये कर्मयोगिनः । यज्ञं यज्ञसाधनं हविः । यज्ञेनैव - यज्ञोपकरण स्रुगादिनैव । ब्रह्माग्नौ । उपजुह्वति ।। २५ ।।

अन्ये-कर्मयोगिनः । श्रोत्रादीनि, श्रोत्रप्रभृतीनि; इन्द्रियाणि, संयमाग्निषु-संयमाः - नियमाएव, अग्नयः, तेषु । जुह्वति; इन्द्रियनियमनएव प्रयतन्त-इत्यर्थः । अन्ये - योगिनः । इन्द्रियाण्येवाग्नयः - तेषु । शब्दादीन् । विषयान् । जुह्वति । यादृच्छिकान् विषयाननुभवन्तोपि तत्रानासक्तास्सन्तोऽग्नित्वेन भावितेष्विन्द्रियेषु हविष्ट्वेन भावितान् शब्दादीन् प्रक्षिपन्तीत्यर्थः २६

---

कोई कोई कर्मयोगी इन्द्रादि देवगण की आराधना में निष्ठावान् दीख पड़ते हैं, इसलिए वे उन-उन देवों की अर्चनारूप यज्ञ का सम्यक् रूप से अनुष्ठान करते हैं और कोई-कोई कर्मयोगी अपनी निष्ठा के अनुसार श्रुक् आदि पात्रों से हवन करने योग्य द्रव्य को ब्रह्मरूप यज्ञाग्नि में डालकर हवन करते देखे जाते हैं ।। २५ ।।

कोई कर्मयोगी जन कर्ण आदि ज्ञानेन्द्रियों को संयमरूप अग्नि में आहुति देते हैं अर्थात् ज्ञानेन्द्रियों के संयम का अभ्यास करते हैं और कोई रूप, रस, शब्दादि गुणों से विशिष्ट भोग्य विषयों का इन्द्रियाग्नि में आहुति देते हैं अर्थात् भोग्य विषयों को चक्षु आदि इन्द्रियों से दूर रखते हैं अथवा अपनी अनिच्छा रखते हुए भी यदि भोग्य विषय सन्निकट होने पर भी इन्द्रियाँ उनमें लिप्त नहीं होती हैं ।। २६ ।।





**सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।**
**आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ।।२७।।**
**द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।**
**स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः । २८।।**

---

अपरे - योगिनः । सर्वाणि - समस्तानि । इन्द्रियकर्माणि इन्द्रियाणां - श्रोत्रादीनां, कर्माणि - श्रवणादीनि । प्राणकर्माणि - प्राणानां - पंचानां, कर्माणि - बहिर्गमनादीनि च । ज्ञान दीपिते । आत्मसंयमयोगाग्नौ - आत्मनः - मनसः, संयमः - नियमनरूपः, यो योगः, स एवाग्निः, तस्मिन्नेव । जुह्वति - प्रक्षिपन्ति । मनस इन्द्रियव्यापारप्रवणता निराकरणे प्रयतन्त इति भावः ।। २७ ।।

संशितव्रताः - दृढसंकल्पाः । यतयः - यतनशीलाः । केचित्कर्मयोगिनः । द्रव्ययज्ञाः - द्रव्येण - न्यायार्जितधनेन, यज्ञः - देवार्चन यागदानहोमरूपः, येषान्ते तथोक्ताः । भवन्ति । केचित् । तपो यज्ञाः - तपांसि - कृच्छ्रचान्द्रायणादीन्येव, यज्ञो येषान्ते तथोक्ताः । अन्ये । योगयज्ञाः - योगः पुण्यक्षेत्रपुण्यतीर्थादिप्राप्तिरेव, यज्ञो येषान्ते तथोक्ताः । तथा । अपरे । स्वाध्यायज्ञानयज्ञाः स्वाध्यायः - वेदाभ्यासः, ज्ञानं - तदर्थविचाररूपं, त एव यज्ञो येषां ते तथोक्ताः । केचित्स्वाध्याययज्ञाः केचित्तदर्थज्ञानयज्ञ इत्यर्थः ।। २८ ।।

अथ पूरकरेचककुम्भकभेदेन विविधप्राणायाम रूपं कर्मयोगं सार्धश्लोकेनाह (अपान इत्यादि) प्राणायामपरायणाः - प्राणायामः -"आतमितोः

---

कुछ लोग आत्मज्ञान विशिष्ट संयत मन से चलना फिरना लेना-देना आदि कर्मेन्द्रियों के समस्त व्यापारों एवं स्वास-प्रस्वास आदि प्राण आदि पंच वायु के समस्त कार्यों के नियमन करने का अभ्यास देह से अतिरिक्त आत्म वस्तु के ज्ञान द्वारा दीप्त मन की संयम रूप अग्नि में आहुति देते हैं ।। २७ ।।

दृढ़ संकल्प एवं यत्न करने वाले कर्मयोगी पुरुष से कोई कोई तो न्याय से कमाये धन द्वारा दान, देव पूजन, होम, आदिक कर्म करते हैं । कोई दूसरे चान्द्रायण आदि कायक्लेश से परिपूर्ण व्रताचरण करते देखे जाते हैं, और कोई पुण्यतीर्थों में निवास करते हैं । कुछ लोग वेदाध्ययन एवं वेदार्थ विचार रूप ज्ञान का अभ्यास करते हैं ।। २८ ।।

**अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे ।**
**प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥२९॥**
**अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति ।**
**सर्वेप्येते यज्ञविदो यज्ञ क्षपति कल्मषाः ॥३०॥**

---

प्राणमायच्छे" दित्यापस्तम्बोक्तरीत्या शरीरग्लानिपर्यन्तंप्राणानां नियमनरूपः, परायणं - प्रधानं, येषा ते तथोक्ताः; प्राणायामनिष्ठा इत्यर्थः । नियताहाराः - नियतः "द्वौभागौ पूरयेदन्नै स्तोयेनैकं प्रपूरयेत् । मारुतस्य प्रचारार्थं चतुर्थमेव शेषयेत् ॥" इत्युक्तरीत्या संकुचितः, आहारः-उदरभरणं, येषान्ते तथोक्ताः । अपरे - केचित्कर्मयोगिनः । अपाने प्राणं जुह्वति एकीकुर्वन्ति; अपानवायुना प्राणवायो रेकीकरणरूपं पूरकं कुर्वन्ति । तदानीं चापानमग्नितया तत्रैकीभवन्तं प्राणमाहुतितया तदेकीकरणं होमतया च भावयन्तीत्यर्थः । तथा अपरे - केचित्तथाविधाः कर्मयोगिनः । प्राणेऽपानं जुह्वति - प्राणवायुनाऽपानवायोरेकीकरणरूपं रेचकं कुर्वन्ति । तदानीं प्राणमग्नितयाऽपान - माहुतितया तदेकीकरणं होमतयाच भावयन्तीत्यर्थः । अपरे - तथाविधाः कर्मयोगिनः । प्राणापानगती - प्राणस्योर्ध्वगतिमपानस्याधोगतिं च । रुध्वा - निरुध्य । प्राणेष्वेव प्राणान् जुह्वति । सर्वेषां प्राणानामेकीकरणरूपं कुम्भकं कुर्वन्ति । तदानीं प्राणानग्नितया तेष्वेकीभवत स्तानेवाहुतितया तदेकीकरणं होमतया च भावयन्तीत्यर्थः ॥ २९ ॥

एवमुक्तानां द्वादशानां यज्ञविदां फलमाह (सर्वेइति) एते-पूर्वोक्ता द्रव्ययज्ञादिप्राणायामपर्यन्तकर्मयोगेषु प्रवृत्ताः । सर्वेपि - पुरुषाः । यज्ञान् - महायज्ञपूर्वकनित्यनैमित्तिकादिरूपान्, विन्दन्ति - लभन्त इति यज्ञविदः; तन्निष्ठा इत्यर्थः । अतएव । यज्ञक्षपितकल्मषाः - यज्ञै - पूर्वोक्तकर्मयोगरूपैः, क्षपितानि - नाशितानि, कल्मषाणि - परमपुरुषार्थप्रतिबन्धकपापानि, येषान्ते तथोक्ताः ॥ ३० ॥

---

**प्राणायाम परायण दूसरे कुछ लोग अपान (गुदास्थित वायु) वायु में प्राणवायु (हृदयस्थित) वायु को मिलाकर 'पूरक' प्राणायाम करते हैं। कुछ प्राण वायुमें अपान वायु मिलाकर 'रेचक' प्राणायाम करते हैं। कुछ प्राण वायु की ऊर्ध्व गति और अपान वायु की अधोगति—रोककर 'कुम्भक' प्राणायाम करते हैं। द्रव्ययज्ञ से प्राणायाम पर्यन्त समस्त कर्मयोग निष्ठ पुरुष यज्ञवित् हैं। इन सब यज्ञों के द्वारा उन सबके पाप नष्ट हो जाते हैं। ॥ २९-३० ॥**





**यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।**
**नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥३१॥**
**एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।**
**कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥३२॥**

---

यज्ञशिष्टामृतभुजः - यज्ञशिष्टं यदन्नादि, तदेवामृतं, तद्भुञ्जत इति तथोक्ताः; तेनैव शरीरधारणं कुर्वन्त इत्यर्थः । एवम्भूता स्सन्तएव । सनातनं - शाश्वतम् । ब्रह्म । यान्ति - प्राप्नुवन्ति । हे कुरुसत्तम - अर्जुन । अयज्ञस्य - महायज्ञपूर्वक नित्यनैमित्तिक कर्मरहितस्य । अयं - धर्मार्थकामरूपः । लोकः - पुरुषार्थः । नास्ति । अन्यः - एतद्विलक्षणमोक्षरूप पुरुषार्थः । कुतः - कस्माद्धेतोः सिध्यति ॥ ३१ ॥

उक्तान् कर्मयोगानुपसंहरति (एवमिति) एवं - उक्तरीत्या । बहुविधाः - बहुप्रकाराः । यज्ञाः - कर्मयोगाः । ब्रह्मणः - वेदस्यामुखे - वेदान्ते । वितताः - विस्तृताः; आत्मयाथात्म्यप्राप्तिसाधनतया विस्तरेण प्रतिपादिता इत्यर्थः । तान् - उक्तप्रकारान् । सर्वान् कर्मयोगान् । कर्मजान् - अहरहरनुष्ठीयमान नित्यनैमित्तिकादिकर्मजनितान् । विद्धि - जानीहि । एवं - उक्तप्रकारेण । ज्ञात्वा - ज्ञानपूर्वकमनुष्ठाय । विमोक्ष्यसे - संसारा द्विमुक्तोभविष्यसि ॥ ३२ ॥

एवमात्मयाथात्म्यज्ञानगर्भतया कर्मणो ज्ञानाकारत्वमुक्तं । ततो ज्ञानगर्भकर्मणि ज्ञानांशस्यैव प्राधान्यमाह (श्रेयानिति) हे परन्तप ! ज्ञान-

---

**जो व्यक्ति यज्ञ से अवशिष्ट अमृत रूपी अन्नादि को प्रसाद रूप में ग्रहणकर जीवन धारण करते हैं, वे सनातन ब्रह्मात्मक आत्म वस्तु को प्राप्त होते हैं। हे कुरुसत्तम ! जो नित्य नैमित्तिक कर्मरूप यज्ञ का परित्याग करते हैं, उन्हें इस लोक में ही धर्म, अर्थ, काम रूप पुरुषार्थ सिद्ध नहीं होता, इसलिए मोक्ष प्राप्ति रूप परम पुरुषार्थ तो उन्हें प्राप्त ही कैसे हो सकता है ? ॥ ३१ ॥**

**इस प्रकार उक्त बारह प्रकार के कर्म आत्म साक्षात्कार के उपाय रूप से विस्तार से कहे गये हैं। नित्य नैमित्तिक कर्मों के निष्काम भाव से अनुष्ठान करने से उन कर्मों का उत्कर्ष ही सिद्ध होता है यह जानना चाहिए (निष्काम कर्म के नित्य अनुष्ठान से क्रमशः पापों का क्षय, उससे सात्विक गुण की वृद्धि होकर प्राणायाम आदि कर्मयोग की महत्ता सिद्ध होती है) कर्मयोग का ऐसा प्रभाव जानकर और उसका अनुष्ठान कर संसार से मुक्ति प्राप्त होती है। ॥ ३२ ॥**

श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप ।
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥३३॥
तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिन स्तत्त्वदर्शिनः ॥३४॥

---

क्रियोभयरूपे कर्मणि । द्रव्यमयात् - द्रव्यत्यागरूप - क्रियाप्रचुरात् । यज्ञात् कर्मांशात् । ज्ञानयज्ञः - ज्ञानरूपो यज्ञः - ज्ञानांशः । श्रेयान् - श्रेष्ठः । तत्र हेतुमाह (सर्वमिति) हे पार्थ ! सर्वं - सर्वप्रकारम् । अखिलं - अविकलम् । कर्म - क्रियारूपोंऽशः । ज्ञाने - आत्मयाथात्म्यज्ञानेसाध्यभूते । परिसमाप्यते - पर्यवस्यतीति यावत् । "कषाये कर्मभिः पक्वे ततो ज्ञाने प्रवर्तत" इत्युक्तरीत्या कर्मणः फलभूतं ज्ञानमेव हि कर्मान्तिर्गततया कर्माभ्यासेनाभ्यस्यमानं क्रमेण प्राप्यदशां प्रतिपद्यत इति भावः ॥ ३३ ॥

एवंभूतात्मज्ञानवैशद्यमाह (तद्विद्धीति) तत् - "अविनाशितु तद्विद्धी" त्यादिना मयोपदिष्टमात्मविषयकं ज्ञानम् । प्रणिपातेन - नमस्कारेण । परिप्रश्नेन - जिज्ञासितसकलप्रकारकप्रश्नेन । सेवया - शुश्रूषयाच । विद्धि-प्रत्यक्षवद्विशदाकारं जानीहि । ज्ञानिभ्यइत्यनुषङ्गः । तत्त्वं - आत्मस्वरूप याथात्म्यं, पश्यन्तीति तत्त्वदर्शिनः - ज्ञानिनः, पण्डिताः । ते - प्रणिपातादिभिः प्रसादयत स्तव । ज्ञानम् । उपदेशन्ति - उपदेशेन प्रत्यक्षवद्विशदीकरिष्यन्तीत्यर्थः ॥ ३४ ॥

---

हे परन्तप अर्जुन ! कर्मयोग में क्रिया का अंश और ज्ञान का अंश ये दो अंश होते हैं । उनमें से द्रव्य संग्रह करना रूप क्रिया की अधिकता वाला कर्म अंश से वेदों का अर्थ सहित अभ्यास करना आदिक शास्त्र चिन्तन रूप ज्ञानांश ही श्रेष्ठ है । हे पार्थ ! यथार्थ रीति से किया कर्मांश क्रमशः पापक्षय एवं चित्तशुद्धि करके आत्म स्वरूप ज्ञान अर्थात् प्राप्य परमात्मा साक्षात्कार रूप ज्ञान में पर्यवसित हो जाता है ॥ ३३

यह आत्म विषयक ज्ञान बहुत दुर्बोध है अतः इसे तुम किसी यथार्थ रूप से ज्ञानी गुरु की सन्निधि में जाकर उनकी सेवाशुश्रूषा से उन्हें सन्तुष्ट कर और प्रश्न करने के उपयुक्त काल की प्रतीक्षा करते हुए साष्टांग प्रणाम पूर्वक जिज्ञासु भाव से जानने योग्य इस विषय को जानो । तुम्हारे इस प्रकार नम्रतापूर्वक प्रणाम शुश्रूषादि से सन्तुष्ट ज्ञानी गुरु तुम्हें आत्म विषयक ज्ञान को विशेष रूप से उपदेश कर प्रत्यक्षवत् दिखा देंगे ॥ ३४





यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥३५॥
अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ॥३६॥

---

आत्मयाथात्म्यविषयकप्रत्यक्षरूपज्ञानस्य लक्षणमाह (यदिति) हे पाण्डव ! यत् - ज्ञानम् । ज्ञात्वा । पुनः - भूयोपि । एवम् - इत्थम्भूतं । मोहं - देहात्मैक्यभ्रमं । न यास्यसि । येन ज्ञातेन ज्ञानेन । सर्वाणि । भूतानि - देवमनुष्याद्याकारेणानुसंहितान्यात्मवस्तूनि । अशेषेण - कात्स्न्येन । आत्मन्येव - स्वात्मन्येव । द्रक्ष्यसि - प्रत्यक्षीकरिष्यसीति यावत् । ज्ञानैकाकारतया स्वात्मसमतयैव प्रत्यक्षीकरिष्यसीत्यर्थः । अथो - अनन्तरम् । सर्वाणि भूतानि । मयि द्रक्ष्यसि - मत्समानाकारतया प्रत्यक्षीकरिष्यसि । प्रकृतिविनिर्मुक्तं ह्यात्मवस्तुपरस्परं सर्वेश्वरेण च सममिति भावः ॥ ३५ ॥

उक्तरूपस्य ज्ञानस्य माहात्म्यमाह (अपि चेदिति) त्वं । सर्वेभ्यः । पापेभ्यः - पापकृद्भ्यः । पापकृत्तमः - अतिशयेन पापकृदपि । असि चेत् - भवसि यदि । सर्वं । वृजिनं - पापसमुद्रम् । ज्ञानप्लवेनैव - ज्ञानं आत्मयाथात्म्यप्रत्यक्षं, तदेव प्लवः - पोतः, तेन । सन्तरिष्यसि - सम्यक्तरिष्यसि ॥ ३६ ॥

हे अर्जुन ! यथा । समिद्धः - प्रज्वलितः । अग्निः । एधांसि -

---

हे पाण्डव ! इस आत्म स्वरूप के विषय में विशेष ज्ञान प्राप्त कर लेने पर तुम्हें फिर शरीर को आत्मा जानना रूप मोह नहीं होगा । आत्म स्वरूप के प्रत्यक्ष होने पर उसके विशद ज्ञान के द्वारा तुम देव मनुष्यादि के शरीरों में स्थित आत्म वस्तु को अपनी आत्मा में ही सम्यक् रूप से देखोगे, बाद में हमारी आत्मा में भी देखोगे । प्रकृति से मुक्त आत्मा ज्ञानाकार रूप से वस्तुतः सम्पूर्ण जीवों में समानाकार तथा परमात्मा के साथ भी ज्ञानाकार रूप से समान ही है) ॥ ३५ ॥

समस्त पापियों में यदि तुम सबकी अपेक्षा अधिक पापी भी हो तो भी तुम इस ज्ञान रूप नौका के द्वारा उस पाप समुद्र को अच्छी प्रकार से पार कर जाओगे ॥ ३६ ॥

यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥३७॥
नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥३८॥
श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥३९॥

---

इन्धनानि । भस्मसात्कुरुते - कार्त्स्न्येन भस्मीभूतानि करोति । तथा । ज्ञानाग्निः - अग्निवत्प्रकाशरूपं ज्ञानं । सर्वकर्माणि - अनारब्धकार्याणि पुण्यपापरूपाणि सर्वाणि कर्माणि । भस्मसात्कुरुते - साकल्येन नाशयतीत्यर्थः ॥ ३७ ॥

अत्र हेतुमाह ( नहीति ) हि - यस्मात्कारणात् । इह - जगति । ज्ञानेन - आत्मयाथात्म्यविषयकेण । सदृशं - समानं । पवित्रं - शुद्धिकरं- वस्तु । न विद्यते - नास्ति । अतो ज्ञानं सर्वं पापं नाशयतीतिभावः । तत् - पवित्रंज्ञानं । योगसंसिद्धः - योगेन - अहरहरनुष्ठीयमानेन कर्मयोगेन, संसिद्धः निर्मलान्तः करणः पुरुषः । कालेन - बहुकालेन । आत्मनि - स्वात्मनिविषये । स्वयमेव । अनायासेन । विन्दति - लभते ॥ ३८ ॥

तदेव स्पष्टमाह ( श्रद्धावानिति ) श्रद्धावान् - गुरूपदिष्टेऽर्थे विश्वासशाली । तत्परः - तस्मिन्नर्थे नियतमनाः । संयतेन्द्रियः - तदितरविषय विमुखेन्द्रियः । पुरुषः । ज्ञानं - प्रत्यक्षवद्विशदतममात्मविषयं ज्ञानं ।

---

हे अर्जुन ! प्रज्वलित अग्नि जैसे ईंधन रूप काष्ठ समूह को जलाकर भस्म कर देता है, उसी प्रकार आत्म स्वरूप का यथार्थ ज्ञानरूपी अग्नि जीव के अनादिकाल से चले आ रहे संचित कर्मों को जलाकर भस्म कर देता है ॥ ३७ ।

निश्चय ही इस जगत् में आत्म स्वरूप ज्ञान के समान शुद्ध करने वाली वस्तु दूसरी नहीं है । कर्मयोग का अनुष्ठान कर मनुष्य बहुत समय बाद सिद्धि प्राप्तकर निर्मल अन्तःकरण का ही आत्म विषयक उस पवित्र ज्ञान को उपदेश आदि की अपेक्षा न रख अपने आप प्राप्त कर लेता है ॥ ३८ ॥

ज्ञानी गुरु के द्वारा उपदिष्ट विषय में पूर्णरूप से विश्वास रखने वाला, और उसी में मन लगाने वाला एवं उससे भिन्न समस्त प्राकृत वस्तुओं से अपनी इन्द्रियों





अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥४०॥
योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।
आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ॥४१॥

---

लभते । तथाविधं । ज्ञानं । लब्ध्वा । परां - निरतिशयाम् । शान्तिं - मोक्षरूपां निवृत्तिं । अचिरेण - शीघ्रमेव । अधिगच्छति - प्राप्नोति ॥ ३९

एवं ज्ञानाधिकारिणमुक्त्वा तद्विपरीतमधिकारिणमाह (अज्ञश्चेति) अज्ञः - उक्तरीत्या गुरूपदेशलब्धज्ञानरहितः । अश्रद्दधानश्च गुरूपदिष्टज्ञानविवृद्धौ त्वरारहित इत्यर्थः । संशयात्मा - गुरूपदिष्टज्ञान इदमित्थमन्यथावेति संशयाकुलः, आत्मा - मनः, यस्य तथोक्तश्च । विनश्यति - नष्टोभवति । एषु त्रिष्वपि संशयात्मा सर्वथा नश्यतीत्याह (नायमिति) संशयात्मनः । अयं । लोकः । नास्ति । परः - परलोकोपि । नास्ति । सुखं - मोक्षसुखमपि । नास्ति । देहातिरिक्तात्मयाथात्म्यज्ञानपूर्वक शास्त्रीयकर्मसिद्धिरूपत्वात्सर्वपुरुषार्थानां ज्ञानरहितस्य कथं पुरुषार्थलाभस्स्यादिति भावः ॥ ४० ॥

योगसन्न्यस्तकर्माणं - योगः - आत्मयाथात्म्यानुसन्धानेन सह कृतस्य कर्मणः परब्रह्मात्मकत्वानुसन्धानेन च युक्तत्वं, तेन, सन्न्यस्तानि - सन्त्यक्तानि, कर्माणि यस्य तं - तथोक्तं । "कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति

---

को संयत रखने वाला पुरुष उस तत्वज्ञान को प्रत्यक्षवत् उपलब्ध करता है । तब वह शीघ्र ही मोक्षरूप अत्यन्त निवृत्ति या निर्वाण प्राप्त करता है । ३९ ॥

गुरु के द्वारा दिये गये ज्ञान से रहित और ज्ञान में श्रद्धा न रखने वाला एवं गुरु के द्वारा बताया अर्थ यथार्थ (सही) है या नहीं इस प्रकार का शंकालु पुरुष नष्ट हो जाता है, क्योंकि इस प्रकार के संशय से युक्त पुरुष के लिए यह लोक, परलोक अथवा, मोक्षरूप सुख कुछ भी नहीं है ॥ ४० ॥

कर्मयोगी के तीन लक्षण होते हैं—कर्तापन, फल और आसक्ति इन तीनों से रहित हो, आत्म स्वरूप का अनुसन्धान एवं परमेश्वर के लिए सम्पूर्ण कर्मों को अर्पण कर देना । इस प्रकार ज्ञान पूर्वक कर्म के करने वाला कर्मयोगी कर्म करके भी कर्म न करने वाला है । आत्म स्वरूप के ज्ञान द्वारा जिसके सम्पूर्ण संशय नष्ट हो गये हैं अतएव जो शान्तचित्त है ऐसे पुरुष को हे अर्जुन ! कोई कर्म संसार बन्धन में नहीं डाल सकते हैं ॥ ४१ ॥

**तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञानासिनात्मनः ।**
**छित्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥४२॥**

॥ इति श्रीभगवद्गीतायां चतुर्थोऽध्यायः ॥ ४ ॥

---

स" इत्युक्तरीत्या ज्ञानाकारतापन्नकर्माणमित्यर्थः । ज्ञानसंछिन्नसंशयं - ज्ञानेन - गुरूपदेशलब्धवैशद्येनात्मज्ञानेन, संछिन्नः - सम्यक्छिन्नः, संशयः - आत्मस्वरूपगोचरसन्देहः, यस्य तं तथोक्तम् । आत्मवन्तं - प्रशान्तमनसं, उपदिष्टेऽर्थे दृढावस्थितमनसमित्यर्थः । एवं विधं । हे धनञ्जय - अर्जुन ! कर्माणि - अनादिकालार्जितबन्धहेतुकर्माणि । न निबध्नन्ति - बद्धं न कुर्वन्ति । किन्तु नश्यन्तीत्यर्थः ॥ ४१ ॥

अध्यायार्थमुपसंहरति ( तस्मादिति ) हे भारत ! तस्मात् - प्रधानभूतात्मयाथात्म्यज्ञानगर्भकर्मयोगेन विना पुंसः पुरुषार्थयोग्यताविरहाद्धेतोः । अज्ञानसम्भूतम् - देहातिरिक्तात्माज्ञानबीजसमुत्पन्नं । हृत्स्थं हृदयालवालस्थितं । एनं - पूर्वोक्तम् । आत्मनस्संशयम् - आत्मविषयकं सन्देहम् । ज्ञानासिना - मदुपदिष्टज्ञानखड्गेन । छित्वा - खण्डयित्वा । योगं - मदुपदिष्टं कर्मयोगं । आतिष्ठ - अनुतिष्ठ । तदर्थम् उत्तिष्ठ ॥ ४२ ॥

इति श्रीमद्भगवद्गीताभाष्यार्थसंग्रहतात्पर्यदीपे श्रीवरवरमुनिविरचितायां बालबोधिन्यपराभिधानायां गीतार्थसंग्रहदीपिकायां

॥ चतुर्थोऽध्यायः ॥

समरीतिर्निर्दाहेतोजाः परकृष्ण सनातनः ।
जयताज्ज्ञानकीनाथो वेदवेद्यो महामतिः ॥
ankurnagpal108@gmail.com

---

हे भरतवंश में श्रेष्ठ अर्जुन ! इसलिए देहात्मबोध रूप अज्ञान से मनमें पैदा होने वाले पूर्वोक्त इस आत्म विषयक सन्देह को मेरे द्वारा उपदिष्ट ज्ञानरूप तलवार से तुम काट डालो और मेरे कथनानुसार कर्मयोग का आचरण करो तथा अपने कर्तव्य कर्म युद्ध करने के लिए खड़े हो जाओ ॥ ४२ ॥

॥ चतुर्थ अध्याय समाप्त ॥



श्रीः

✽ श्रीमते रामानुजाय नमः ✽

✽ श्रीमते वरवरमुनये नमः ✽

# अथ पञ्चमोऽध्यायः

★

अर्जुन उवाच—

**संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।**
**यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ १ ॥**

---

इत्थं चतुर्थेऽध्याये कर्मयोगस्य ज्ञानयोगगर्भत्वं तत्स्वरूपभेदो ज्ञानांशस्य प्राधान्यं चोक्तम् । इदानीं'कर्मयोगस्यात्मप्राप्तिसाधन ज्ञाननिष्ठापेक्षया शैघ्र्यं कर्मयोगान्तर्गता कर्तृत्वानुसन्धानं चाह ॥

हे कृष्ण ! पुनः - भूयोपि । 'यच्छ्रेयस्स्या न्निश्चितं ब्रूही' ति प्रश्नानन्तरमपीत्यर्थः । कर्मणां । सन्न्यासं - त्यागं, ज्ञानयोगं । योगं - कर्मयोगं च । शंससि - "सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते । नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ॥" इत्यादिना ज्ञानयोगं, "न कर्मणा मनारम्भात्" "कर्मज्यायोह्यकर्मणः" इत्यादिना कर्मयोगं च, प्रशंससि । एतयोः - ज्ञानयोग कर्मयोगयोर्मध्ये । श्रेयः - आत्मप्राप्तिसाधनत्वे सौकर्येण शैघ्र्येण च श्रेष्ठम् । यत् । एकम् । अस्ति । तत् - श्रेष्ठमेकम् । मे - मम । सुनिश्चितं यथा भवति तथा । ब्रूहि ॥ १ ।

---

## पंचम अध्याय

### कर्म-संन्यास योग

अर्जुन ने कहा—हे श्रीकृष्ण ! अभी आपने 'न हि ज्ञानेन सदृशं पवित्रमिह विद्यते' गीता ४–३६ के द्वारा कर्म का एकावारगी सम्यक् त्यागरूप संन्यास की प्रशंसा की, और बाद में 'कर्मज्यायो ह्यकर्मणः' गीता० ३–८ के द्वारा कर्मयोग की प्रशंसा की, इस प्रकार विरुद्ध उक्तियों में कौन श्रेष्ठ है । इनमें से शीघ्र सहजसाध्य एवं शीघ्र फलदायक कौन है उसे सुनिश्चित रूप से कहिये ॥ १ ॥

श्रीभगवानुवाच—

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥ २ ॥
ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न कांक्षति ।
निर्द्वन्द्वो हि महाबाहो सुखं बन्धात् प्रमुच्यते ॥ ३ ॥

---

एवमर्जुनेन पृष्टे भगवानुत्तरमाह ( सन्न्यास इति ) सन्न्यासः - कर्मसन्न्यासः, ज्ञानयोगः । कर्मयोगश्च । उभौ द्वावपि । निश्श्रेयसकरौ - मोक्षहेतू । तयोः - ज्ञानयोगकर्मयोगयोर्मध्ये तु । कर्मसन्न्यासात् - ज्ञानयोगात् । कर्मयोग एव । विशिष्यते - अतिशेते ॥ २ ॥

तत्र हेतुमाह ज्ञेयइति) हे महाबाहो ! यः - कर्मयोगी । न कांक्षति- कर्मयोगान्तर्गतात्मानुभवतृप्ततया तद्व्यतिरिक्तमनुकूलं नेच्छति । न द्वेष्टि - प्रतिकूले द्वेषं न करोति । अतएव । निर्द्वन्द्वः - शीतोष्णादिद्वन्द्वसहश्च- भवति । सः । नित्यसन्न्यासी - नित्यं ज्ञाननिष्ठः । ज्ञेयः । स हि । सुखं पूर्वाभ्यस्तसजातीयसुकरकर्मयोगनिष्ठतयाऽनायासेन । बन्धात् - संसारात् । प्रमुच्यते - विमुच्यते ॥ ३ ॥

ज्ञानयोगकर्मयोगयोरात्मप्राप्तिसाधनयो रन्योन्यनिरपेक्षत्वमाह ( सांख्येति ) न पण्डिताः - पण्डिता ये न भवन्ति तथाभूताः अकृत्स्नविदः ।

---

भगवान् श्रीकृष्ण ने अर्जुन के प्रश्न का उत्तर देते हुए कहा—कि ज्ञानयोग एवं कर्मयोग दोनों ही श्रेयस्कर हैं अर्थात् मोक्ष प्राप्ति के कारण हैं, लेकिन ज्ञानयोग की अपेक्षा कर्मयोग ही अधिक श्रेयस्कर है ॥ २ ॥

हे अर्जुन ! उसका कारण है, जो पुरुष कर्मयोग के अन्तर्गत आत्मानुभव में तृप्त रहता है और उससे अतिरिक्त किसी भी प्राकृत विषय की आकांक्षा नहीं करता अथवा—किसी प्राकृत वस्तु के लाभ में विघ्न होने पर विघ्न करने वाले के प्रति द्वेष नहीं करता, सुख दुःख आकांक्षा-द्वेष, शीत-उष्ण आदिक द्वन्द्वों से जो रहित है उस पुरुष के द्वारा कर्मयोग का अनुष्ठान करने पर भी वह नित्य संन्यासी या ज्ञान- निष्ठ कहा जाता है । ऐसा व्यक्ति बिना क्लेश के ही संसार बन्धन से मुक्त हो जाता है ॥ ३ ॥





सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।
एकमप्यास्थितः सम्यगुभयो र्विन्दते फलम् ॥ ४ ॥
यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।
एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥ ५ ॥

---

बालाः - अनिष्पन्नज्ञानाः । सांख्ययोगौ - ज्ञानयोगकर्मयोगौ । पृथक् - कर्मयोगोज्ञानयोगमेवसाधयति, ज्ञानयोगस्त्वेक एवात्मावलोकनं साधयतीति फलभेदेन पृथग्भूतौ । प्रवदन्ति । उभयोः - द्वयोर्मध्ये । एकं । आस्थितोपि अनुतिष्ठन्नपि । सम्यक् - समीचीनं । फलं - आत्मावलोकनरूपं । विन्दते लभते । उभयोरप्यात्मावलोकनरूपैक फलसाधनत्वादिति भावः ॥ ४ ॥

एतदेव विवृणोति (यदिति) सांख्यैः - ज्ञानयोगिभिः । यत् । स्थानं आत्मावलोकनरूपं फलं । प्राप्यते । तत् - फलं । योगैरपि - कर्मयोगिभि- रपि । गम्यते - प्राप्यते । सांख्यं च । योगं च । एकं आत्मावलोकनरूप- फलैक्यादभिन्नं । यः । पश्यति - जानाति । सः । पश्यति, पण्डित इत्यर्थः ॥ ५ ॥

तर्हि किं कर्मयोगेनेत्यत आह (सन्न्यास स्त्विति) सन्न्यासः - ज्ञान- योगस्तु । अयोगतः - कर्मयोगं विना । आप्तुं - साधयितुं । दुःखं - अश- क्यमित्यर्थः । योगयुक्तः - कर्मयोगयुक्तस्तु । मुनिः - अन्तर्गतज्ञानेन स्वय-

---

जो सांख्य अर्थात् ज्ञानयोग एवं योगः अर्थात् कर्मयोग को अलग कहकर पुकारते हैं वे यथार्थ रूप से पण्डित नहीं है वे तो अल्पबुद्धि बालक हैं । क्योंकि इन दोनों में से जिस किसी एक का सम्यक् रूप से अनुष्ठान करने से आत्मावलोकन रूप सम्पूर्ण फल प्राप्त किया जा सकता है ॥ ४ ॥

ज्ञानयोग का साधक जिस आत्म साक्षात्कार रूप फल का लाभ करता है, कर्मयोग का साधक भी उसी फल को प्राप्त कर लेता है । इस प्रकार एक ही फल देने के कारण ज्ञानयोग और कर्मयोग को एक ही कहता या जानता है वही व्यक्ति पण्डित है ॥ ५ ॥

संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।
योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥ ६ ॥
योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥

मेवात्ममननशीलः । अतः । न चिरेण - अल्पकालेन । ब्रह्म - आत्मानम् । अधिगच्छति - सुखेन कर्मयोगसाधनद्वारा प्राप्नोतीत्यर्थः । केवलज्ञानयोगयुक्तस्तु महता दुःखेनात्मावलोकनं साधयित्वा चिरेणात्मावलोकनं प्राप्नोति । अत स्सौकर्याच्छैघ्र्याच्च ज्ञानयोगतः कर्मयोगएव श्रेयानिति भावः ॥ ६ ॥

एतदेव विवृणोति (योगेति) योगयुक्तः - योगेन - परमगुरुषाराधनैकवेषेण शुद्धेन शास्त्रीयेण कर्मणा, युक्तः । विशुद्धात्मा - विशुद्धः - निर्मलः, आत्मा - मनः, यस्य स तथोक्तः । विजितात्मा - विजितः - स्वाभ्यस्तकर्मव्यापृततया सुखेन जितः, आत्मामनः, यस्य स तथोक्तः । अतएव । जितेन्द्रियः - निर्जितबाह्येन्द्रियः । सर्वभूतात्मभूतात्मा - सर्वेषां, भूतानां - देवमनुष्यादीनां, आत्मभूतः - आत्मभिस्समानाकारतयाऽभिन्नत्वेनानुसन्धीयमानः, आत्मा स्वात्मा, यस्य स तथोक्तः । प्रकृतिवियुक्तास्सर्वे ह्यात्मानो ज्ञानाकारतयातुल्याः, देवत्वमनुष्यत्वादीनां शरीरधर्मत्वादिति भावः । एवं भूतः । कुर्वन्नपि - कर्माचरन्नपि । नलिप्यते - अनात्मन्यात्माभिमानादिना न वध्यते । फलाभिसन्धिपूर्वकमनुष्ठितं हि कर्मरुचिवासनादि द्वारादेहात्माभिमानादिबन्धहेतुर्भवतीति भावः । अतोऽचिरेणात्मानं प्राप्नोतीत्यभिप्रायः ॥ ७ ॥

हे अर्जुन ! कर्मयोग से रहित अर्थात् कर्म संन्यास पूर्वक आत्म चिन्तन रूप ज्ञानयोग का साधन कठिन है, किन्तु कर्मयोग का साधक आत्म मननशील होकर शीघ्र ही आत्मवस्तु का साक्षात्कार कर लेता है ॥ ६ ॥

कर्मयोग क्यों सरल और शीघ्र फलप्रद है उसी को बताते हैं—

कर्मयोग में रत पुरुष अपने मन एवं समस्त इन्द्रियों को अच्छी प्रकार जीतकर सब प्राणियों के अन्तरभूत आत्मा के साथ अपनी आत्मा को अभिन्न अर्थात् समस्त आत्मायें ज्ञानाकार रूप से परस्पर समान हैं यह समझता है । इस प्रकार कर्म करने पर भी, वह कर्म संसार-बन्धन का कारण नहीं होता है ॥ ७ ॥





नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यञ् शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपन्श्वसन् ॥ ८ ॥
प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ९ ॥

एवं श्रेष्ठस्य कर्मयोगस्यापेक्षितमाह "नैवे" त्यादिश्लोकद्वयेन । तत्त्ववित् आत्मयाथात्म्यवित् । युक्तः - उक्तलक्षणकर्मयोगनिष्ठः । पश्यन् - रूपसन्दर्शनं कुर्वन्नपि । शृण्वन् - शब्दश्रवणं कुर्वन्नपि । स्पृशन् - स्पर्शसाक्षात्कारं कुर्वन्नपि । जिघ्रन् - गन्धाघ्राणं कुर्वन्नपि । अश्नन्—रससाक्षात्कारं कुर्वन्नपि । गच्छन् - गमनं कुर्वन्नपि । स्वपन् - निद्रां कुर्वन्नपि । श्वसन् - श्वासं कुर्वन्नपि ॥ ८ ॥

प्रलपन् - सम्भाषणं कुर्वन्नपि । विसृजन् - मूत्रपुरीषविसर्गं कुर्वन्नपि । गृह्णन्—आदानं कुर्वन्नपि । उन्मिषन् - उन्मीलनं कुर्वन्नपि । निमिषन् - निमीलनं कुर्वन्नपि । इन्द्रियार्थेषु - शब्दादिविषयेषु । इन्द्रियाण्येव वर्तन्ते, दर्शनश्रवणादि कर्माणीन्द्रियाण्येव कुर्वन्तीत्यर्थः । इति - अनेन प्रकारेण । धारयन् - बुद्धया निश्चिन्वन्सन् । अहं । किंचिदपि कर्म । नैव करोमीति । मन्येत - अनुसन्दधीत । इन्द्रियेषु कर्तृत्वमारोप्य स्वस्मिन्नकर्तृत्वानु सन्धानं कर्तव्यमिति भावः ॥ ९ ॥

(अत्राश्नन्नित्यन्तेन बाह्येन्द्रियव्यापार उक्तः । गच्छन्निति पादव्यापारः । स्वपन्निति बुद्धिव्यापारः । श्वसन्निति प्राणव्यापारः । प्रलपन्निति वागिन्द्रियस्य । विसृजन्निति पायूपस्थयोः । गृह्णन्निति पाण्योः । उन्मिषन्निमिषन्नित्यपि प्राणस्येति बोद्धव्यं ॥ ) ।

इन्द्रियाँ ही कर्म में प्रवृत्त होती हैं आत्मा नहीं होती, सो बताते हैं—आत्म स्वरूप को जानने वाला, उक्त लक्षणों से विशिष्ट कर्मयोग निष्ठ पुरुष रूप, रस, शब्द, स्पर्श, गन्धयुक्त विषयों के दर्शन, आस्वादन, श्रवण, स्पर्श, सूँघना आदि करके एवं सम्भाषण, श्रवण, गमन, मलमूत्र त्याग, निश्वास, प्रश्वास क्रिया, नेत्रोन्मीलन, निमीलन करके, यह सम्पूर्ण कार्य चक्षु कर्ण आदि ज्ञानेन्द्रिय एवं वाक्, हाथ, पैर आदिक कर्मेन्द्रियों के द्वारा ही किये जाते हैं, इस प्रकार की दृढ़ भावना करते हैं एवं आत्मा इस सम्बन्ध में कुछ भी नहीं करता है, इस प्रकार जो अनुसन्धान करते हैं ॥ ८-९ ॥

**ब्रह्मण्याधाय कर्माणि संगं त्यक्त्वा करोति यः ।**
**लिप्यते न स पापेन पद्मपत्र मिवाम्भसा ॥१०॥**
**कायेन मनसा बुद्धया केवलैरिन्द्रियैरपि ।**
**योगिनः कर्म कुर्वन्ति संगं त्यक्त्वात्मशुद्धये ॥११॥**

---

एवमकर्तृत्वानुसन्धानस्य फलमाह (ब्रह्मणीति) यः। कर्माणि। ब्रह्मणि - ब्रह्म - प्रकृतिः, तस्मिन् - प्रकृतिपरिणामविशेषरूपेन्द्रियवर्गे। आधाय - पश्यन्नित्यादिप्रकारेण सन्नयस्य, तत्रैव कर्तृत्वमारोप्येत्यर्थः। संगं - फलासक्तिं। त्यक्त्वा। करोति - अहं न किंचित्करोमीत्यनुसन्धानपूर्वकं कर्माचरति। सः। अम्भसा उदकेन। पद्मपत्रमिव - पद्मपलाशमिव। पापेन - देहाद्यात्माभिमान रूपेणबन्धहेतुना। न लिप्यते - न वध्यते ॥१०॥

योगिनः कर्मयोगनिष्ठाः। संगं - स्वर्गादिफलासंगम्। त्यक्त्वा। आत्मशुद्धये - प्राचीनकर्मबन्धनाशाय। कायेन - शरीरेण। मनसा - चित्तेन। बुद्धया - अध्यवसायात्मिकया। केवलैः - अभिनिवेशरहितैः। इन्द्रियैरपि - श्रोत्रादिवागादिभिश्च। कर्म। कुर्वन्ति ॥११॥

युक्तः - आत्मैकप्रवणतयाऽऽत्मव्यतिरिक्तफलेष्वचपलः। कर्मफलं। त्यक्त्वा। कर्मानुतिष्ठन्निति शेषः। नैष्ठिकीं - स्थिरां। शान्तिं - आत्मानुभवरूपां निर्वृतिं। आप्नोति - प्राप्नोति। अयुक्तः आत्मानुभवविमुखत-

---

**आत्मा के इस अकर्तृत्व का फल बताते हैं—**

**पूर्वश्लोक कथित जो दर्शनादि कर्मों के कर्तृत्व को प्रकृति में ही आरोपित मानते हैं—अर्थात् देखना, सुनना आदि सब प्राकृत इन्द्रियाँ ही करती हैं, फल की आसक्ति को त्यागकर जो उक्त प्रकार से आचरण करता है वह व्यक्ति कमल-दल जैसे जल में रहते हुए जल से लिपायमान नहीं होता, वैसे ही सम्पूर्ण सांसारिक कर्म करते हुए भी देहात्माभिमान शून्य होने से संसार बन्धन के कारण रूप पाप से लिपायमान नहीं होता है ॥ १० ॥**

**कर्मयोगी व्यक्ति चित्तशुद्धि के लिए अर्थात् संसार बन्धन का कारण चित्त की प्राचीन कर्मवासनाओं को नष्ट करने के लिए स्वर्गादि फल की आसक्ति से रहित होकर शरीर मन बुद्धि एवं विषयों के प्रति अभिनिवेश रहित होकर इन्द्रियों द्वारा कर्म करते रहते हैं ॥ ११ ॥**





**युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।**
**अयुक्तः कामकारेण फले सक्तो निबद्धयते ॥१२॥**
**सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।**
**नवद्वारे पुरे देही नैव कुर्वन्नकारयन् ॥१३।**
**न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।**
**न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥१४॥**

---

याऽऽत्मव्यतिरिक्तफलेषु चपलः। कामकारेण - कामतः प्रवृत्त्या। फले - स्वर्गादिरूपे। सक्तः - आसक्तः। कर्म कुर्वन्नित्यनुषंगः। निबध्यते - नित्यसंसारी भवति ॥ १२ ॥

अथदेहाकारेण परिणतायां प्रकृतौकर्तृत्वसन्न्यास उच्यते (सर्वेति) वशी - जितेन्द्रियः। देही। मनसा - आत्मनः कर्मकर्तृत्वं न स्वरूपप्रयुक्तं, अपितु - कर्ममूलदेहसम्बन्धप्रयुक्तमिति विवेकविषयेण मनसा। कर्माणि - स्वयमनुष्ठीयमानानि। नवद्वारे - नेत्रेनासिके श्रोत्रे मुखं पायूपस्थौचेत्येवं रूपैर्नवभिर्द्वारैर्युक्ते। पुरे - नगरे, शरीर इत्यर्थः। सन्नयस्य - त्यक्त्वा। नैवकुर्वन् - देहसम्बन्धप्रयुक्तं किमप्यकुर्वन्नेव। न कारयन् अन्येनापि किंचिदकारयन्नेव। सुखंयथा तथा। आस्ते - वसति ॥ १३ ॥

साक्षादात्मनस्स्वाभाविकं रूपमाह (नेति) प्रभुः - अकर्मवश्यः स्वाभाविकरूपेणावस्थित आत्मा। लोकस्य - देवमनुष्यादिप्रकृतिसंसृष्टतया वर्तमानस्य जनस्य। कर्तृत्वम्। न सृजति - देवाद्यसाधारणं कर्तृत्वं नोत्पादयति। कर्माणि - तत्तदसाधारण कर्माणि। न सृजति। कर्मफलसंयोगं -

---

**आत्मा के अनुसन्धान में एकाग्रचित्त कर्मयोगी पुरुष कर्मफल का त्यागपूर्वक उक्त प्रकार से कर्म करके आत्म दर्शन रूप स्थिर निवृत्ति शान्ति प्राप्त करता है, किन्तु आत्मानुभव से रहित विषयों में आसक्त पुरुष प्राचीन वासना से पैदा होने वाले कर्मों के फल में आसक्त होकर संसार बन्धन में पड़ता है ॥ १२ ॥**

**जितेन्द्रिय पुरुष 'देह आत्मा से पृथक् है' इस विवेक से युक्त मन के द्वारा सब कर्मों का कर्तापन नौ छिद्रों वाले शरीर पर डालकर एवं 'मैं स्वयं कोई कर्म नहीं करता हूँ, न कराता ही हूँ' इस प्रकार दृढ़ निश्चय पूर्वक सुख से रहता है ॥ १३ ॥**

**देह एवं इन्द्रियों का स्वामी यह जीवात्मा, देहधारी इस जीव के कर्मों का कर्ता नहीं है एवं उन - उन कर्मों के फलों का पैदा करने वाला भी नहीं है। पूर्व जन्मों में अर्जित प्राचीन कर्म एवं उस पूर्वकर्मकृत प्राचीन वासना के अनुसार त्रिगुण-**

नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः ।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥१५॥

तत्तत्कर्मजन्यदेवादिभावरूपफलसंयोगञ्च । न सृजति । कस्तर्हि ? सृजतीत्यत आह (स्वभाव इति) स्वभावः - पूर्वपूर्वजन्मजनितदेवाद्याकारप्रकृतिसंसर्गकृतप्रकृतिवासनारूपः । प्रवर्तते - प्रवृत्तिं करोति; कर्तृत्वादिकं सर्वमादिप्रकृतिवासना प्रयुक्तं न स्वरूपप्रयुक्तमित्यर्थः ॥ १४ ॥

विभुः प्रकृतिवियुक्तस्वरूपआत्मा । कस्यचित् - स्वसम्बन्धितयाऽभिमतस्य पुत्रादेः । पापं - दुःखम् । नादत्ते - न परिहरति । कस्यचित् - प्रतिकूलतयाभिमतस्य कस्यापि । सुकृतम् - सुखञ्च । नैवादत्ते - न परिहरति । अयं कस्यचिदपि नानुकूलो न प्रतिकूलश्चेत्यर्थः । अनुकूलत्वाभिमानादिकन्तु वासनाकृतमिति भावः । नन्वीदृशस्वभावस्य कथमियं वासनोत्पद्यत इत्यत्राह (अज्ञानेनेति) अज्ञानेन - ज्ञानविरोधिप्राचीनकर्मणा । ज्ञानं जन्तूनामात्मयाथात्म्यविषयकं ज्ञानम् । आवृतं - स्वस्वफलानुभवयोग्यत्वायाच्छादितम्, संकुचितमित्यर्थः । तेन - ज्ञानावरणेन । जन्तवः जीवाः । मुह्यन्ति - देहात्माभिमानादिरूपं मोहं प्राप्नुवन्तीत्यर्थः । अतोऽस्य विपरीतवासनाचोपपद्यत इति भावः ॥ १५ ॥

नन्वीदृशमज्ञानं केन निवर्तत इत्याकांक्षायां "सर्वं ज्ञानप्लवेन" "ज्ञानाग्निस्सर्वकर्माणि" इत्यादिना पूर्वोक्तमेव स्मारयति (ज्ञानेनेति) येषां -

मयी अपनी अपनी प्रकृति ही कर्म करने में प्रवृत्त कराने वाली है । यहाँ प्रकरण प्राप्त होने से प्रभु शब्द का जीवात्मा ही अर्थ सङ्गत है । जीवात्मा स्वरूपतः अणु है ॥ १४ ॥

प्रकृति से रहित विशुद्ध आत्मा किसी के सुख अथवा दुःख कुछ भी ग्रहण नहीं करता, अर्थात् वह किसी अपने प्रिय व्यक्ति के पाप स्वयं ग्रहण कर ले और उसे पाप मुक्त कर दे अथवा अपने शत्रु के पुण्य ग्रहण कर उसे पुण्य का फल सुख भोगने से बंचित कर दे, ऐसा नहीं कर सकता है । उसे तो अपेक्षा रहित, ज्ञान के विरोधी प्राचीन कर्मों से होने वाले अज्ञान के द्वारा जीव का आत्मविषयक ज्ञान आच्छादित रहता है अर्थात् वह पूर्वजन्मार्जित कर्मों के फल भोग के उपयोगी करण (इन्द्रियाँ) एवं कलेवर (शरीर) प्राप्त करता है । इसलिए जीवात्मा का आवरण रूपी पूर्वकर्म जनित इस अज्ञान के कारण ही उसे देह में आत्माभिमान रूप मोह से ग्रस्त रहना पड़ता है ॥ १५ ॥





ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥१६॥
तद्बुद्धयस्तदात्मान स्तन्निष्ठा स्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥१७॥

आत्मनां । ज्ञानेन - आत्मयाथात्म्यविषयकज्ञानेन तु । तत् ज्ञानावरणभूतं । अज्ञानं - प्राचीनकर्मसंचयरूपम् । नाशितं । ध्वंसितम् । तेषां । तत् - स्वाभाविकम् । परं - अपरिच्छिन्नं ज्ञानम् । आदित्यवत् - सूर्यइव । प्रकाशयति - सर्वं यथावस्थितं प्रत्यक्षीकरोति ॥ १६ ॥

प्रकृतिवियुक्तात्मस्वरूपोपासकानां फलमाह (तद्बुद्धय इति) तद्बुद्धयः तस्मिन् - अज्ञाननाशके प्रकृतिवियुक्तात्मस्वरूपदर्शन रूपे, बुद्धिः - अध्यवसायः, येषां ते तथोक्ताः । तदात्मानः - तद्विषयमानसाः । तन्निष्ठाः - तस्मिन् - आत्मज्ञाने, निष्ठास्थैर्यं, येषान्ते तथोक्ताः, तज्ज्ञानाभ्यासपरा इत्यर्थः । तत्परायणाः - तदेव, परायणं - परमप्रयोजनं, येषान्ते तथोक्ताः; । अतएव । ज्ञाननिर्धूतकल्मषाः - ज्ञानेन - अनवरताभ्यस्तज्ञानेन, निर्धूतानि विनाशितानि, कल्मषाणि - प्राचीनकर्माणि, येषान्ते तथोक्ताः । एवं विधाः पुरुषाः । अपुनरावृत्तिं - पुनरावृत्तिरहितावस्थापन्नमात्मानम् । गच्छन्ति - प्राप्नुवन्ति ॥ १७ ॥

प्रकृतिविनिर्मुक्तमात्मस्वरूपमाह (विद्येति) पण्डिताः - आत्मस्वरूपयाथात्म्यविदः । विद्याविनयसम्पन्ने - विद्या - ज्ञानं, विनयः - तत्कार्यभूतोऽनौद्धत्यगुणः, ताभ्यां, सम्पन्ने पुंसि । ब्राह्मणे - ततो निकृष्टे केवल-

जिन जीवों का आत्म स्वरूप ज्ञान के द्वारा संचित प्राचीन कर्मों के अनुगत ज्ञानावरण रूप अज्ञान नष्ट हो गया है, उनका वह स्वाभाविक अपरिच्छिन्न ज्ञान सूर्य की तरह सम्पूर्ण प्राकृत और अप्राकृत वस्तुओं को यथार्थ रूप से प्रकाशित करता है ॥ १६ ॥

उस प्रकृति से रहित, विशुद्ध आत्मज्ञान में जिनकी बुद्धि, मन एवं निष्ठा सब प्रकार से स्थित है और उस आत्म ज्ञान को ही जो परम प्रयोजन मानते हैं, लगातार इस प्रकार के ज्ञानाभ्यास द्वारा जिनके पाप नष्ट हो गये हैं, ऐसे पुरुष इस संसार में आवागमन से मुक्ति प्राप्त करते हैं ॥ १७ ॥

विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥१८॥
इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।
निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥१९॥

---

ब्राह्मणे । गवि - धेनौ । हस्तिनि - ततो महति गजे । शुनि - शुनके च । श्वपाके च - श्वमांसभक्षके च । विद्यमाने प्रकृष्टनिकृष्टशरीरगत आत्मस्वरूप इति शेषः । समदर्शिन एव - समं - ज्ञानैकाकारतया समानं यथा तथा, पश्यन्तीति तथोक्ताः । ब्राह्मणत्वाद्याकारवैषम्यं प्रकृतेरेव, नात्मनः, आत्मातु सर्वत्र ज्ञानैकाकारतया सम इत्येव पश्यन्तीत्यर्थः ॥ १८ ॥

साम्यदर्शनस्य माहात्म्यमाह ( इहेति ) तैः - पुरुषैः । इहैवसाधनानुष्ठानदशायामेव । सर्गः - सृष्टिः, संसारः । जितः - नाशितः । येषां - पुरुषाणाम् । मनः । साम्ये - सर्वे ष्वात्मसु ज्ञानैकाकारतया समत्वे । स्थितं निष्ठितम् । तत्र हेतुमाह । हि - यस्मात्कारणात् । निर्दोषं - प्रकृतिसंसर्गदोषविनिर्मुक्तम् । समं ज्ञानैकाकारतया समानमात्मवस्तु । ब्रह्म । तस्मात् । ते - साम्यनिष्ठाः । ब्रह्मणि । स्थिता एव । अत आत्मसु ज्ञानैकाकारतया - साम्यमनुसन्दधाना मुक्ता एवेत्यर्थः ॥ १९ ॥

येनाकारेणावस्थितस्य कर्मयोगिनः समदर्शनरूपज्ञान विपाको भवति तमेव प्रकार मुपदिशति (नेति) पुमान् । प्रियं - अनुकूलम् । प्राप्य । न प्रहृष्येत् - प्रहर्षं न प्राप्नुयात् । अप्रियं - प्रतिकूलं च । प्राप्य । नोद्वि-

---

ज्ञानाकार आत्मवस्तु दर्शन का फल बतलाते हैं—

यथार्थ आत्मस्वरूप दर्शी व्यक्ति ज्ञानी एवं उस ज्ञान से होने वाली नम्रता से युक्त पुरुष, साधारण ब्राह्मण, गाय, हाथी, कुत्ता एवं चाण्डाल आदि इन समस्त प्राणियोंमें समदर्शी होकर रहता है, अर्थात् उत्कृष्ट निकृष्ट विभिन्न देहोंमें स्थित आत्मा स्वरूपतः ज्ञानाकार होने से समस्त आत्मायें समान आकार की दीखती हैं ॥ १८ ॥

जिन व्यक्तियों का मन सम्पूर्ण जीवों के देहों में ज्ञानाकार रूप से परस्पर समान आत्मदर्शन रूप साम्य में स्थित है, उनका इस जीवन में ही संसार नष्ट हुआ मानो अर्थात् वे जीवन में ही मुक्त हैं । कारण प्रकृति रहित परस्पर समान सभी आत्माओं को ब्रह्म कहा जाता है, अतएव उक्त प्रकार से साम्यदर्शी व्यक्ति ब्रह्म में स्थित है ॥ १९ ॥





न प्रहृष्येत् प्रियं प्राप्य नोद्विजेत् प्राप्य चाप्रियम् ।
स्थिरबुद्धि रसम्मूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥२०॥
बाह्यस्पर्शे ष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् ।
स ब्रह्मयोगयुक्तात्मा सुखमक्षय्यमश्नुते ॥२१॥

---

जेत् - भयं न प्राप्नुयात् । तत्र हेतुमाह ( स्थिरबुद्धिरिति ) स्थिरबुद्धिः - स्थिरे - आत्मनि, बुद्धिर्यस्य स तथोक्तः । असम्मूढः - अस्थिरेण शरीरेणात्मान मेकीकृत्य मोहः - सम्मोहः, तद्वान् सम्मूढः, स न भवतीत्यसम्मूढः । तत्र हेतुमाह (ब्रह्मविदिति) ब्रह्मवित् - उपदेशेन लब्ध ब्रह्मज्ञानः । ब्रह्मणि-विषये । स्थितः - अभ्यासयुक्तश्च । भवेदिति शेषः ॥ २० ॥

यः - पुमान् । बाह्यस्पर्शेषु - शब्दादिबहिर्विषयानुभवेषु । असक्तात्मा - आसक्तिरहितमनाः । आत्मन्येव । सुखम् । विन्दति - लभते । सः । ब्रह्मयोगयुक्तात्मा - ब्रह्मयोगे - ब्रह्माभ्यासे, युक्तः, आत्मा - मनः, यस्य स तथोक्त स्सन् । अक्षयम् । सुखं - मोक्षरूपम् । अश्नुते ॥ २१ ॥

प्राकृतभोगस्य सुत्यजतामाह (येहीति) संस्पर्शजाः - संस्पर्शेन - विषयेन्द्रियसन्निकर्षेण, जाताः । ये । भोगाः - विषयानुभवाः । आद्यन्तवन्तः - आद्यन्तौ - उत्पत्तिविनाशौ, एषां स्त इत्याद्यन्तवन्तः - अल्पकाल-

---

ब्रह्म को जानने वाला व्यक्ति पूर्वोक्त प्रकार से ब्रह्म में स्थित होकर अर्थात् सद्गुरु के द्वारा दिये गये उपदेश से प्राप्त आत्मज्ञान से युक्त पुरुष उस ब्रह्मज्ञान के अनुशीलन में संलग्न हो इस स्थिर, नित्य आत्मवस्तु में निष्ठावान् हो जाता है तथा शरीर को आत्मा कहकर देहात्माभिमान रूप अज्ञान या मोह से दूर रहता है । ऐसा व्यक्ति प्रियवस्तु की प्राप्ति पर आनन्दित एवं अप्रिय वस्तु की प्राप्ति पर घबराता नहीं है ॥ २० ॥

जो पुरुष आत्मा से अतिरिक्त रूप, रस, शब्दादि प्राकृत बाह्य विषयों में आसक्ति रहित मन वाला होकर केवल आत्मानुभव में ही सुख का लाभ प्राप्त करता है, ऐसा कर्मयोगी प्रकृति निर्मुक्त आत्मस्वरूप ब्रह्म के अभ्यास का परायण होकर अक्षयसुख मोक्ष प्राप्त करता है ॥ २१ ॥

प्राकृत विषय क्यों त्याज्य हैं यही बताते हैं—

इन्द्रिय सम्बन्ध से होने वाले प्रकृति सम्बन्धी विषयों के सम्पूर्ण भोग अनित्य

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥२२॥
शक्नोतीहैव य स्सोढुं प्राक्छरीरविमोक्षणात् ।
कामक्रोधोद्भवं वेगं स युक्त स्स सुखी नरः ॥२३॥
योऽन्तः सुखोऽन्तराराम स्तथांतर्ज्योतिरेव यः ।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥२४॥

---

र्वतिन इत्यर्थः। ते - भोगाः। दुःखयोनयः - दुःखस्य, योनयः - कारणान्येव हि। हे कौन्तेय ! तेषु - भोगेषु। बुधः - विषयस्वरूपयाथात्म्यवित्। न रमते - न क्रीडति ॥ २२ ॥

यः - नरः। शरीरविमोक्षणात् - शरीरत्यागात्। प्राक् - पूर्वं। यावद्देहपातमित्यर्थः। इहैव - साधनानुष्ठानदशायामेव। कामक्रोधोद्भवं कामक्रोधजनितम्। वेगं - शरीरेन्द्रियक्षोभरूपम्। सोढुं - निरोद्धुम्। शक्नोति - समर्थो भवति। आत्मानुभवे प्रीत्यतिशयादिति भावः। सः - नरः। युक्तः - आत्मानुभवयोग्यः। स एव। सुखी - शरीरमोक्षानन्तरमात्मानुभवैकसुख स्सम्पत्स्यते ॥ २३ ॥

यः - योगी। अन्तस्सुखः-अन्तः - आत्मन्येव, सुखं यस्य स तथोक्तः। बहि र्विषयानुभवं सर्वं विहायात्मानुभवैकसुख इत्यर्थः। अन्तरारामः - अन्तः - आत्मैव, आरामः - क्रीडास्थानं, यस्य स तथोक्तः। तथा। यः -

---

एवं मात्र दुःख के कारण होते हैं। इसलिए हे अर्जुन ! इन विषयों के स्वरूप को जानने वाला विद्वान् पुरुष भोगों से प्रेम नहीं करता है, बल्कि वह इन प्राकृत भोगों का परित्याग ही करता है ॥ २२ ॥

उस सिद्धावस्था की प्राप्ति कैसे सम्भव है सो बताते हैं—

साधन दशा में काम एवं क्रोध का जीतना अति कठिन होने पर भी देहत्याग से पूर्व इस साधन दशा में ही जो कर्मयोगी पुरुष काम और क्रोध इन दो प्रबल शत्रुओं के कारण रहने पर भी उनके वेग को सह लेता है, अर्थात् काम और क्रोध के कारण रहने पर भी जो अपने शरीर, मन वाणी से अडिग रहता है, वह आत्मानुभव का उपयुक्त पात्र है, वह उससे होने वाले सुख को प्राप्त कर लेता है ॥ २३

जो बाहरी विषयों का भोग त्यागकर केवल देहस्थित आत्मानुभव में ही सुखी होता है, उसी में जो लगा रहता है, और जो आत्मविषयक ज्ञान से ज्ञानवान्





लभन्ते ब्रह्मनिर्वाण मृषयः क्षीणकल्मषाः ।
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥२५॥
कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनां ॥२६॥

---

योगी। अन्त र्ज्योतिरेव - अन्तः - आत्मन्येव, ज्योतिः - ज्ञानं, यस्य स तथोक्तः। आत्मैकविषयज्ञान इत्यर्थः। सः। ब्रह्मभूतः - ब्रह्मनिष्ठः। योगी। ब्रह्मनिर्वाणं - आत्मानुभवैकसुखम्। अधिगच्छति - प्राप्नोति ॥२४

छिन्नं - द्वैधं - शीतोष्णादिद्वन्द्वं, येषां ते तथोक्ताः। यतात्मानः - यतः - आत्मन्येव नियतः, आत्मा - मनः, येषां ते तथोक्ताः। सर्वभूतहिते - सर्वेषां भूतानां हिते - इष्टसाधन एव। रताः - आत्महित इव निरताः। ऋषयः - अतीन्द्रियार्थद्रष्टारः, आत्मावलोकनपरा इत्यर्थः। एतादृशाः। क्षीणकल्मषाः - क्षीणानि - नष्टानि, कल्मषाणि - आत्मप्राप्तिविरोधिपापानि, येषां ते तथोक्ता स्सन्तः। ब्रह्मनिर्वाणं - आत्मानुभवसुखं। लभन्ते - प्राप्नुवन्ति ॥ २५ ॥

उक्तलक्षणणानां कर्मयोगिनां ब्रह्मात्यन्तसुलभमित्याह। (कामेति) कामक्रोधवियुक्तानां - रागद्वेषरहितानां। यतीनां - यत्नशीलानां। यत-

---

ऐसा ब्रह्मनिष्ठ योगी पुरुष देह त्याग के अनन्तर ब्रह्म निर्वाण या आत्मानुभव से होने वाले परम सुख का लाभ करता है ॥ २४

यहाँ तक पाँच श्लोकों से आत्मदर्शन के साधन रूप हर्षोद्वेग की निवृत्ति, बाह्य विषयों में अनासक्ति, काम और क्रोध के वेग का निवारण एवं आत्मानुभव में ही एकमात्र भोग्यता का वर्णन हुआ। प्रस्तुत श्लोक में सब जीवों में समदर्शित्व के अनुष्ठान से सिद्धदशा की प्राप्ति का उपदेश देते हैं—

जो शीत उष्ण, सुख-दुःखादि द्वन्द्वों से मुक्त हो चुके हैं जिनका मन आत्मा में ही निरत है, एवं जो सब जीवों के कल्याण साधन में ही नियुक्त हैं, ऐसे अतीन्द्रिय विषयों के द्रष्टा ऋषिगण, आत्मप्राप्ति के विरोधी पापों से मुक्त होकर ब्रह्मानुभव रूप सुख प्राप्त कर लेते हैं अर्थात् वे अनिष्ट निवृत्ति पूर्वक इष्ट प्राप्ति करते हैं ॥ २५

आत्मानुभव में यत्नशील, काम-क्रोध से रहित, संयत मन वाला, जितेन्द्रिय पुरुष के पक्ष में सुखरूप आत्मवस्तु उनके हाथ में रखी ही जानो अर्थात् उनके लिए आत्मवस्तु अति सुलभ है ॥

**स्पर्शान्कृत्वा बहि र्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।**
**प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥२७॥**
**यतेन्द्रियमनोबुद्धिर्मु नि र्मोक्षपरायणः ।**
**विगतेच्छाभयक्रोधो य स्सदा मुक्त एव सः ॥२८॥**

---

चेतसां - यतं - विषयेभ्यो निर्वर्तितं, चेतो येषां तेषां तथोक्तानाम् । अतएव । विजितात्मनां - जितमनस्कानां, पुरुषाणाम् । निर्वाणं - सुखरूपम् । ब्रह्म- आत्मस्वरूपम् । अभितो वर्तते - करस्थमित्यर्थः ॥ २६ ॥

उक्तं कर्मयोगं योगशिरस्कमुपसंहरति "स्पर्शा" नित्यादि श्लोक-द्वयेन । यः - कर्मयोगी । बाह्यान् - बहिर्भवान्, आत्मव्यतिरिक्तानिति-यावत् । स्पर्शान् । विषयानुभवान् । बहिः कृत्वा - बहिष्कृत्य, त्यक्त्वे-त्यर्थः । चक्षुश्च । भ्रुवोः । अन्तरएव । कृत्वा । नासाभ्यन्तरचारिणौ - नासिकाया अभ्यन्तरचारिणौ - उच्छ्वास निश्वास रूपेणान्त स्सञ्चरन्तौ । प्राणापानौ । समौ - समगती । कृत्वा ॥ यतेन्द्रियमनोबुद्धिः - यताः - आत्मावलोकनादन्यत्रप्रवृत्त्यनर्हीकृताः, इन्द्रियाणि - बाह्येन्द्रियाणिदश, मनः - चित्तं, बुद्धिः - अध्यवसायश्च, यस्य स तथोक्तः । अतएव । विगते-च्छाभयक्रोधः - रागभयद्वेषरहितः । मोक्षपरायणः - मोक्षैकप्रयोजनः । मुनिः आत्ममननशीलः, आत्मावलोकनशीलश्च । भवति । सः । सदा - सर्वदा, साध्यदशायामिव साधनानुष्ठानदशायामपीत्यर्थः । मुक्तएव निवृत्त-संसारएव ॥ २७-२८ ॥

योगशिरस्कस्य कर्मयोगस्य - सुशकत्वमाह (भोक्तारमिति) कर्मयो-गाधिकारी । मां । सर्वलोकमहेश्वरं - सर्वेषां लोकानां महांतमीश्वरं -

---

**जो कर्मयोगी पुरुष आत्मा से अतिरिक्त सम्पूर्ण बाह्य विषयों के स्पर्श या भोग त्याग करके दोनों नेत्रों को अपनी भ्रकुटि के मध्य में स्थित करके, नाक के मध्य में विश्वास प्रश्वास रूप प्राण एवं अपान वायु को समान रूप में गतिशील करके, अपनी इन्द्रिय मन बुद्धि को वश में करके संयम पूर्वक, काम क्रोध एवं भय से रहित होकर केवल मोक्ष लाभ के लिए आत्म मननशील (मुनि होता है, वह सिद्धा वस्था के समान साधन अवस्था में भी संसार निवृत्ति रूप मुक्त होकर रहता है ॥ २७-२८ ॥**





**भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।**
**सुहृदं सर्वभूतानां ज्ञात्वा मां शान्ति मृच्छति ॥२९॥**

इति श्रीभगवद्गीतायां पंचमोऽध्यायः ॥ ५ ॥

---

सर्वेषां लोकेश्वराणामपीश्वरमित्यर्थः । सर्वभूतानां - सर्वेषां प्राणिनां । सुहृदं - परममित्रभूतं । अतएव । यज्ञतपसां - यज्ञाः - महायज्ञादयः - तपांसि - कृच्छ्रचान्द्रायणादीनि, तेषां । भोक्तारं - आराध्यम् । ज्ञात्वा - विदित्वा । शान्ति - कर्मयोगानुष्ठाने सुखं । ऋच्छति - प्राप्नोति ॥ २९ ॥

इति श्रीमद्भगवद् गीताभाष्यार्थ संग्रहतात्पर्यदीपे
श्रीवरवरमुनिविरचितायां बालबोधिन्याख्यायां
गीतार्थसंग्रहदीपिकायां

**पंचमोऽध्यायः ॥५॥**





---

**जो कर्मयोगी पुरुष मुझे सब जीवों का महेश्वर एवं सब जीवों का सुहृद (मित्र) अतएव महायज्ञादि कृच्छ्रचान्द्रायनादि कठोर व्रत आदि का भोक्ता अथवा आराध्य जानता है, वह मेरे आराधन रूप इस कर्मयोग के अनुष्ठान से मानसिक क्लेश शान्ति रूप सुख प्राप्त करता है ॥ २९ ॥**

॥ पंचम अध्याय समाप्त ॥

श्रीरस्तु

# अथ षष्ठोऽध्यायः

★

श्रीभगवानुवाच—

**अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।**
**स संन्यासी च योगी च न निरग्निर्नचाक्रियः ।। १ ।।**

एवं कर्मयोगं सपरिकरमुक्त्वेदानीं ज्ञानयोगकर्मयोगसाध्यात्मावलोकनरूपयोगस्याभ्यासो विधीयते। तत्कर्मयोगमेव निरपेक्षात्मावलोकनरूपयोगसाधनत्वेन प्रशंसति "अनाश्रित" इत्यादिना। यः। कर्मफलं - स्वर्गादिकं। अनाश्रितः - अनपेक्षमाणस्सन्। कार्यं - सर्वसुहृद्भूतपरमपुरुषाराधनरूपत्वात्स्वतः प्रयोजनभूतम्। कर्म - यज्ञादिकं। करोति - स्वतः प्रयोजनबुद्धयाऽनुतिष्ठतीत्यर्थः। सः। सन्न्यासी - ज्ञानयोगनिष्ठश्च। योगी - कर्मयोगनिष्ठश्च। आत्मावलोकनरूपयोगसाधनोभयनिष्ठ इत्यर्थः। निरग्निः - अग्निशब्देनाग्निसाध्यानि कर्माण्युच्यन्ते, न विद्यन्तेऽग्नयोयस्य स तथोक्तः। न - सन्न्यासी न भवति। अक्रियः - नविद्यन्ते - क्रियाः - अनग्निसाध्याः, पूर्तादिकाः यस्य स तथोक्तः। न च सन्न्यासी न भवति ।। १ ।।

## षष्ठ अध्याय

### आत्मसंयमयोग (योगाभ्यास अथवा ध्यान योग)

भगवान् श्रीकृष्ण बोले—जो व्यक्ति कर्मफल की इच्छा न रखकर केवल कर्तव्य बुद्धि से सर्वसुहृद् परमपुरुष परमात्मा नारायण की आराधना रूप समस्त कर्म करता रहता है, उसी को ज्ञानयोगनिष्ठ संन्यासी एवं उसी को कर्मयोग निष्ठ योगी कहा जाता है किन्तु जो अग्नि सम्पर्क त्यागने वाला संन्यासी है अथवा न अन्यान्य कर्मों को त्यागने वाला योगी ही है ।। १ ।।





**यं सन्यासमिति प्राहु र्योगन्तं विद्धि पाण्डव ।**
**नह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ।। २ ।।**
**आरुरुक्षोर्मुने र्योगं कर्म कारणमुच्यते ।**
**योगारूढस्य तस्यैव शमः कारणमुच्यते ।। ३ ।।**

ननु ज्ञानेनविनाऽनिवृत्तदेहात्माभिमानस्य केवलं कर्माचरतः कथं ज्ञानयोगित्वमित्यत्राह (यमिति) यं। सन्न्यास इति - ज्ञानयोग इति। प्राहुः - पण्डिताः प्रवदन्ति। हे पाण्डव! तं। योगं - कर्मयोगमेव। विद्धि - जानीहि। न कर्मयोग बहिर्भूतो ज्ञानयोग इत्यर्थः। तत्र हेतुमाह (नहीति) हि - यस्मात्कारणात्। कश्चन - कश्चिदपि। योगी - कर्मयोगी। असन्न्यस्तः - अपरित्यक्तः, संकल्पः - देहात्माभिमानः, येन स तथोक्तः, आत्मयथात्म्यज्ञानशून्य इति यावत्। न भवति - न विद्यते। उक्तलक्षण कर्मयोगएव ज्ञानमप्यस्तीति भावः ।। २ ।।

कर्मयोगएवाप्रमादेन योगं साधयतीत्याह (आरुरुक्षोरिति) योगं - आत्मावलोकनरूपं। आरुरुक्षोः - आरोढुमिच्छोः - प्राप्तुमिच्छोः। मुनेः - मननशीलस्य मुमुक्षोः। कर्मयोगएव। कारणं - साधनं। उच्यते। शास्त्रेष्वितिशेषः। योगारूढस्य - प्रतिष्ठितयोगस्य। तस्यैव - मुमुक्षोः शमः - कर्मनिवृत्तिः। कारणं - मोक्षसाधनं। उच्यते। यावदात्मावलोकनप्राप्ति कर्म कार्यं मित्यर्थः ।। ३ ।।

पण्डित लोग जिसे संन्यासी अथवा ज्ञानयोग कहकर निर्देश करते हैं उसी को कर्मयोग जानना चाहिए, अर्थात् ज्ञानयोग प्रकृत पक्ष में कर्मयोग के ही अन्तर्गत रहता है उससे बाहर नहीं। इसका कारण यह है कि कर्म में देहात्माभिमान जनित कर्तृत्व (कर्तापन) ममत्व एवं फलाभिसन्धि रूप संकल्प का त्याग बिना किये कोई भी कर्मयोगी नहीं हो सकता। देहाभिमान रूप अज्ञान का नाश एवं आत्मज्ञान की चिन्ता ही कर्मयोग का सारांश है ।। २ ।।

आत्मा का अवलोकन रूपयोग साधन में अभिलाषी मननशील पुरुष को कर्मयोग की साधना करना ही कर्तव्य है। यह शास्त्र में कहा है। जो कर्मयोग में परिपक्व हो गया है उसके लिए ही ज्ञानयोग मोक्ष का साधन हो सकता है अर्थात् जब तक पुरुष की विषयों की अभिलाषा विलुप्त नहीं होती तब तक कर्म करना कर्तव्य है ।। ३ ।।

यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥ ४ ॥
उद्धरेदात्मनाऽऽत्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ५ ॥

---

कदाऽयं प्रतिष्ठितयोगी भवतीत्यत्राह (यदाहीति) यदा । अयं कर्मयोगी । इन्द्रियार्थेषु - आत्मव्यतिरिक्त - प्राकृतविषयेषु । नानुषज्जते - आत्मानुभवैकप्रवणतया तत्र संगं न करोति । कर्मसु च तत्साधनभूतेषु । नानुषज्जते । तदाहि । सर्वसंकल्पसंन्यासी सर्वान्, संकल्पान् - मनोरथान्, सन्यसितुं शीलमस्यास्तीति तथोक्तः । योगारूढः - प्रतिष्ठितयोगः । उच्यते ॥ ४ ॥

आत्मना - विषयाननुषक्तेन मनसा । आत्मानं - स्वात्मानं । उद्धरेत् - संसारादुत्तारयेत् । आत्मानं । नावसादयेत् - विषयानुषक्तेन मनसा न क्लेशयेदित्यर्थः । हि - यस्मात्कारणात् । आत्मनः - स्वस्य । आत्मैव - विषयाननुषक्तं मन एव । बन्धु - हितः । आत्मैव - विषयानुषक्तम्मनएव । रिपुः - शत्रुः । प्रतिकूल इत्यर्थः ॥ ५ ॥

उक्तमेवार्थं विवृणोति (बन्धुरिति) येन पुरुषेण । आत्मनैव-स्वेनैव । आत्मा - मनः । जितः - विषयविमुखीकृतः । तस्य । आत्मनः - स्वात्मनः ।

---

उपर्युक्त कर्मयोगी पुरुष की आत्मानुभव में अत्यन्त प्रीति या आसक्ति के कारण जब उसमें इन्द्रिय भोग्य शब्दादि विषयों के भोग की अभिलाषा एवं उसके समस्त उपायों की आसक्ति अपने से ही दूर हो जाय तब उस सर्वसंकल्प त्यागी कर्मयोगी को योगारूढ़ कहा जाता है ॥ ४

विषयों में आसक्ति रहित मन से अपनी आत्मा को संसार बन्धन से उद्धार करना चाहिए । विषयों में आसक्त मन से अपनी आत्मा को दुःखी न करे, संसार में मग्न न रखे । विषयों में अनासक्त मन ही आत्मा का हितकारी बन्धु है, विषयासक्त मन ही आत्मा को संसार बन्धन में डालने के कारण शत्रु कहा जाता है ॥ ५

जिस पुरुष के द्वारा अपना मन जीत लिया गया है अर्थात् विषयों से विमुख कर लिया गया है, उस पुरुष का वह मन उसका बन्धुवत् हितकारी है और जिस





बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ ६ ॥
जितात्मनः प्रशांतस्य परमात्मा समाहितः ।
शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥ ७ ॥
ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्टाश्मकांचनः ॥ ८ ॥

---

आत्मा । बन्धुः । अनात्मनः - अजितमनस्कस्य तु पुरुषस्य । आत्मैव - स्वकीयं मन एव । शत्रुवत् - शत्रुणा तुल्यं । शत्रुत्वे - स्वाभीष्टप्रतिबन्धादि शत्रुकृत्ये । वर्तेत - प्रवर्तेतेत्यर्थः ॥ ६ ॥

योगस्यारम्भावस्थामाह ( जितेति ) शीतोष्णसुखदुःखेषु । तथा । मानापमानयोश्च । एवं रूपेषु द्वन्द्वेषु । जितात्मनः - जितमनस्कस्य - निर्विकारचित्तस्येति यावत् । अतएव । प्रशान्तस्य - निर्दुःखस्य पुरुषस्य । आत्मा - शुद्धस्वरूपो जीवः । परं - अत्यन्तम् । समाहितः - सम्यङ्मनस्याहितः, ध्यानविषयो भवतीत्यर्थः ॥ ७ ॥

ज्ञानं - आत्मस्वरूपज्ञानम्, विज्ञानं - आत्मनः प्रकृतिविविक्ताकारज्ञानम्, ताभ्यां, तृप्तः - निर्वृतः, आत्मा - मनः, यस्य स तथोक्तः । कूटस्थः कूटे देवत्वमनुष्यत्वादिसकलावस्थास्वनुवर्तमानतया सर्वसाधारणे ज्ञानैकाकार आत्मनि, तिष्ठतीति - तथोक्तः, तदेकनिष्ठ इत्यर्थः । अतएव । विजितेन्द्रियः - निर्जित सकलेन्द्रियः । समलोष्टाश्मकांचनः - लोष्टं - घटशकलं,

---

के द्वारा मन वश में नहीं है ऐसा स्वेच्छाचारी विषय प्रवण मन ही उसका शत्रु के समान हानिकारक है, अर्थात् संसार में निमग्न मन केवल दुःख ही देता है ॥ ६

जिस पुरुष का मन शीत, उष्ण, सुख-दुःख, मान-अपमान, रूप द्वन्द्वों से मुक्त हो गया है, ऐसे शान्त मन वाले व्यक्ति के मनमें उसकी विशुद्ध आत्मा ध्यान का विषय बन पाती है, अर्थात् मन जब द्वन्द्वातीत हो शान्त एवं स्थिर हो जाता है तभी वह आत्मज्ञान के लिए उपयुक्त होता है ॥ ७

जिस पुरुष का मन आत्मा के स्वरूप ज्ञान एवं प्रकृति से पृथक् विलक्षण ज्ञान द्वारा तृप्त एवं कूटस्थ अर्थात् देव मनुष्यादि में सर्वदा एकरूप आत्मवस्तु में ही चिन्तनशील रहता है अतएव जो जितेन्द्रिय अर्थात् विषयों के भोग में अभिलाषा रहित होकर ढेला,पत्थर,सुवर्ण आदि विभिन्न वस्तुओंमें समदर्शी है ऐसे कर्मयोगी पुरुष का मन ही आत्म ध्यान रूप योगाभ्यास के उपयुक्त है ॥ ८

**सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।**
**साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ६ ॥**

---

अश्मा पाषाणः, कांचनं - स्वर्णं, एतानि, समानि - अविशेषतया प्रतीयमानानि, यस्य स तथोक्तः। प्रकृतिविविक्तात्मस्वरूपनिष्ठतया प्राकृतवस्तुषु भोग्यताबुद्धयभावादिति भावः। एवंविधः। योगी कर्मयोगी। युक्तः - आत्मावलोकनरूपयोगाभ्यासयोग्यः। इत्युच्यते - एवं तत्त्वज्ञैः कथ्यते ॥ ८ ॥

सुहृदः - वयोविशेषानादरेण हितैषिणः, मित्राणि - सवयसो हितैषिणः, अरयः - निमित्तवशेनानर्थाकांक्षिणः, उदासीनाः - उभयहेत्वभावाद्धितैषित्वाहितैषित्वोभयरहिताः, मध्यस्थाः - जन्मत एव तदुभयरहिताः, द्वेष्याः - जन्मत एवानर्थैषिणः, बन्धवः - जन्मत एव हितैषिणः, तेषु। साधुषु - धर्मशीलेषु च। पापेषु - पाप शीलेष्वपि। समबुद्धिः - तुल्यधीः। तैः प्रयोजनाभावाद्विरोधाभावाच्चेति भावः। एवंभूतः पुरुषः। विशिष्यते योगाभ्यासार्हत्वेऽतिशेते ॥ ६ ॥

अथ सांगयोगमुपदिशति 'योगी" त्यादिना। यतचित्तात्मानियतमनोबुद्धिः। निराशीः - आत्मव्यतिरिक्तसकलवस्तुनि निरपेक्षः। अपरि-

---

**(यहाँ 'ज्ञान'—आत्मस्वरूप ज्ञान। 'विज्ञान'—अर्थात् जिस-जिस लक्षण से प्रकृति से आत्मा का पार्थक्य सिद्ध होता है, उसका ज्ञान। 'कूटस्थ'—देव मनुष्यादि सबके शरीर में सर्वदा ज्ञानाकार रूप से एक प्रकार से स्थित आत्मवस्तु। 'युक्तः'—उपयुक्त अर्थ है ॥ ८ )**

**सुहृद्, मित्र, उदासीन, मध्यस्थ, हिंसक, बन्धु, साधु एवं पापी आदिक भिन्न प्रकृति के लोगों के साथ किसी प्रकार का कोई प्रयोजन या स्वार्थ न रहने से प्रिय या अप्रिय बुद्धि से रहित जो समान बुद्धि से युक्त पुरुष ही आत्मध्यान रूप योगाभ्यास का अति श्रेष्ठ योग्यपात्र हैं। ( यहाँ सुहृद्—अवस्था में बड़ा हितैषी पुरुष। 'मित्र' समान वायु वाला हितैषी व्यक्ति, सखा। 'अरि'—स्वार्थ के लिए अनर्थ करने का इच्छुक। 'उदासीन' हितैषीपन और अहितैषीपन दोनों से रहित पुरुष )। 'मध्यस्थ'—जन्म से ही हित और अहित की आकांक्षा से रहित। 'द्वेषी'—जन्म से ही अनर्थ चाहने वाला। 'बन्धु'—स्वाभाविक हित चाहने वाला। 'साधु'—धर्मशील पुरुष ) ॥ ६**





**योगी युञ्जीत सततमात्मानं रहसि स्थितः ।**
**एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥१०॥**
**शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।**
**नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥११॥**

---

ग्रहः - परिग्रहशून्यः। आत्मव्यतिरिक्ते कस्मिंश्चिदपि वस्तुनि ममतारहितः। एवं वधः। योगी - कर्मलक्षणयोगनिष्ठः। रहसि - विजने निश्शब्दे च देशे। एकाकी - असहायः। स्थित स्सन्। सततं - अहरहर्योगकाले। आत्मानं - स्वात्मानम्। युंजीत - युक्तं कुर्वीत, स्वदर्शननिष्ठं कुर्वीतेत्यर्थः ॥ १० ॥

शुचौ - पवित्रे। देशे - स्थूले। आत्मनः - स्वस्य। अत्युच्छ्रितं - अत्युन्नतं, न भवतीति - नात्युच्छितम्। अतिनीचं - अतिनिम्नं, न भवतीति नातिनीचम्। चेलं - वस्त्रं, अजिनं - व्याघ्रादिचर्म, ते, कुशोत्तरे - कुशेभ्य उपरि स्थिते, यस्मिन् तच्चेलाजिनकुशोत्तरं - कुशोपर्यजिनं - अजिनस्योपरि चेलं चास्तीर्येत्यर्थः। स्थिरं - अचंचलम्। आसनं - दार्वादिनिर्मितम्। प्रतिष्ठाप्य - निक्षिप्य ॥ ११ ॥

तत्र - तस्मिन् आसने। उपविश्य - उपविष्टः। मनः। एकाग्रं - योगैकप्रवणम्। कृत्वा - विधाय। यताः - उपसंहृताः, चित्तस्य - मनसः,

---

**अब तक आत्मध्यान योग के अधिकारी बताये गये। अब ६ श्लोकों से आत्मध्यानयोग का अंग सहित उपदेश करते हैं—**

**जिस कर्मयोगी व्यक्ति ने अपने मन और बुद्धि अर्थात् चित्त को अपने वश में कर लिया है एवं आत्मा से अतिरिक्त किसी भी वस्तु से जिसे प्रयोजन नहीं है अतएव समस्त विषयों से ममता रहित हो गया है, ऐसा कर्मयोगी व्यक्ति निर्जन स्थल में अकेला रहकर प्रतिदिन योगाभ्यास के समय (आत्मा के साथ युक्त होने के लिए) आत्म साक्षात्कार के लिए प्रयत्न करे ॥ १०**

**पूर्वोक्त परमात्म ध्यान रूप योग का अधिकारी व्यक्ति पवित्र स्थान में प्रथम कुशासन तब उसके ऊपर मृगचर्म तथा उस पर वस्त्र का आसन रखकर जो कि अधिक ऊँचा न हो न अधिक नीचा ही ऐसा आसन अचंचल रूप से लगाकर उस पर बैठकर अपने मन और चक्षु आदि ज्ञानेन्द्रियों एवं हस्तपादादि कर्मेन्द्रियों को बाह्य**

तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥१२॥
समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥१३॥
प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥१४॥

---

इन्द्रियाणां - श्रोत्रादीनां च, क्रियाः - व्यापाराः, येन सः - यतचित्तेन्द्रियक्रिय स्सन् । आत्मविशुद्धये - आत्मनो बन्धनिवृत्तये । योगं - आत्मावलोकनम् । युंज्यात् - कुर्यादित्यर्थः ॥ १२ ॥

कायशिरोग्रीवं - कायः - मध्यदेहः, शिरः - मूर्धा, ग्रीवा - कण्ठः, तासां द्वन्द्वैकवचनं तत् । समं - अवक्रम् । अचलं - निश्चलम् । स्थिरं - सापाश्रयत्वेन दृढं च यथा तथा । धारयन् । दिशश्च । अनवलोकयन् - अपश्यन् ॥ १३ ॥

स्वं - स्वकीयम् । नासिकाग्रं - नासाग्रभागम् । सम्प्रेक्ष्य - दृष्ट्वा । नासाग्रनिवेशितार्धनिमीलितनयन इत्यर्थः । प्रशान्तात्मा - अत्यन्तनिर्वृतमनाः । विगतभीः - वीतभयः । ब्रह्मचारिव्रते - ब्रह्मचर्यव्रते । स्थितः - वर्तमानः । मनः । संयम्य - सम्यङ्नियम्य, विषयेभ्य उपसंहृत्येत्यर्थः । मयि चित्तं यस्य सः - मच्चित्तः । युक्तः अवहितः । अहमेव परं प्राप्यं

---

(बाहरी) विषय भोगों के लिए होने वाले सम्पूर्ण व्यापार से निवृत्त करके एकाग्र मन से आत्मशुद्धि के लिए अर्थात् संसार बन्धन से मुक्त होने के लिए आत्मा के अवलोकन रूपयोग में प्रवृत्त हो ॥ ११–१२ ॥

ऐसे योगी पुरुष द्वारा अपने शरीर, शिर, कण्ठ को सीधा निश्चल एवं स्थिर (द्रढ़) भाव से धारण कर तथा किसी भी ओर न देखता हुआ केवल अपने भोंहों के मध्य भाग में अर्ध मुदे नेत्रों से नासिका (नाक) के अग्र भाग में अपनी दृष्टि रखे । इस प्रकार आत्मा के ध्यान का अभ्यास करने से क्रमशः वह प्रशान्त चित्त, भय शून्य एवं ब्रह्मचर्य व्रत में स्थित हो, विषयों से मन को संयमित कर आत्म दर्शन के लिए एकाग्र चित्त होवे । ऐसे योगी पुरुष का इस प्रकार जब मन सम्पूर्ण रूप से निर्मल हो जावे तब उसे कल्याणमय भगवान ही का ज्ञान होने लगता है और मुझ में ही मन लगाकर मेरे परायम होकर रहने लगता है ॥ १३–१४ ॥



युञ्जन्नेवं सदात्मानं योगी नियतमानसः ।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥१५॥
नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।
न चाति स्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥१६॥

---

यस्य सः - मत्परः, तथाभूतश्च सन् । आसीत - मामेव चिन्तयन् वर्तेतेत्यर्थः ॥ १४ ॥

योगाभ्यासफल माह (युंजन्निति) एवं - उक्तरीत्या । मयि ब्रह्मणि । सदा - सन्ततम् । आत्मानं - मनः । युंजन् - समाहितं कुर्वन् । नियतमानसः - निश्चलचित्तः । मत्संस्थां - मयि, संस्था - सम्पत्तिः, यस्यां तां तथोक्ताम् । निर्वाणपरमां - सुखकाष्ठारूपाम् । शान्तिं - संसारनिवृत्तिरूपां मुक्तिम् । अधिगच्छति ॥ १५ ॥

एवमात्मयोगमारभमाणस्य भगवति शुभाश्रये चेतस स्स्थिति मभिधायान्यदपि योगोपकरणमाह (नेति) हे अर्जुन ! अत्यश्नतस्तु अमितं भुञ्जानस्य च । योगः - आत्मावलोकनाभ्यासरूपः । नास्ति न सिद्ध्यति । एकान्तम् - अत्यन्तम् । अनश्नतः - अभुञ्जानस्य च । नास्ति । अतिस्वप्नशीलस्य - अतिनिद्रास्वभावस्य च । नास्ति । जाग्रतः - अत्यन्तजागरणशीलस्य च । नास्त्येव । अत्रात्यन्ताहारविहारशीलस्यात्यन्तमायासानायासशीलस्य च योगासिद्धिरनुसन्धेया ॥ १६ ॥

---

उक्त योगाभ्यास का फल बताते हैं—

पूर्वोक्त प्रकार से जिस पुरुष का एकाग्र मन सर्वदा परब्रह्म मुझ में निश्चल रूप से लगा रहता है वह निश्चय ही शान्ति एवं संसार की निवृत्ति रूप मुक्ति को प्राप्त होता है ॥ १५ ॥

अब ऐसे योगी के आहार विहार की बात कहते हैं—

हे अर्जुन ! अधिक भोजन करने वाला, अत्यन्त कम भोजन करने वाला, अधिक जगने वाला एवं अधिक सोने वाला अर्थात् अधिक आहार विहार परायण पुरुष के द्वारा यह आत्मावलोकन योग अथवा आत्मध्यान योग में सिद्धि प्राप्त नहीं हो पाती ॥ १६ ॥

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥१७॥
यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥१७॥
यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥१९॥

---

तर्हि कथंभूतस्य योगसिद्धिरित्यत्राह ( युक्तेति ) युक्ताहारविहारस्य युक्तौ - मितौ, आहारविहारौ - आहारसंचारौ, यस्य तस्य तथोक्तस्य । कर्मसु - कार्येषु विषये । युक्तचेष्टस्य - मितायासस्य । युक्तस्वप्नावबोधस्य- मितनिद्राजागरस्य च । दुःखहासकलबन्धनाशनः । योगः । भवति - सिद्धयति ॥ १७ ॥

योगार्हस्य स्वरूपमाह ( यदेति ) यदा - यस्मिन् काले । चित्तं - प्रयोजनचिन्तापरं मनः । आत्मन्येव । विनियतं - निरतिशय प्रयोजनतया विशेषेण निश्चलम् । अवतिष्ठते - प्रतिष्ठितं भवति । तदा - तस्मिन् काले । सर्वकामेभ्यः । निस्पृहः - निवृत्ताशस्सन् । युक्तः - योगार्ह इति । उच्यते ॥ १८ ॥

यतचित्तस्यात्मस्वरूपं दृष्टान्तमुखेन स्फुटयति ( यथेति ) यथा । निवातस्थः - वातरहितप्रदेशस्थः । दीपः । नेङ्गते - न चलति, अचल-

---

जिस पुरुष का आहार, विहार, कार्य में परिश्रम, निद्रा एवं जागरण ये सब नियमित, परिमित होता है, वही इन सम्पूर्ण दुःखों को हरण करने वाले भव बन्धन को काटने वाले योग में सिद्धि प्राप्त कर पाता है ॥ १७ ॥

जब व्यक्ति का मन अपनी आत्मा में ही निश्चल भाव से प्रतिष्ठित हो जाता है, तब वह आत्मा से अतिरिक्त समस्त बाहरी प्राकृत भोगों से निःस्पृह हो केवल परमात्मध्यानरूप योग का उचित अधिकारी कहा जाता है ॥ १८ ॥

वायु रहित स्थान में जैसे दीपक की लौ कम्पायमान नहीं होती बल्कि स्थिर भाव से जलती रहती है, उसी प्रकार प्राकृत विषयों की अभिलाषा से रहित संयत चित्त आत्मावलोकन रूपयोग का अभ्यासी योगी का परिशुद्ध मन आत्मस्वरूप में निश्चल रूप से स्थित रहता है अर्थात् उसकी मनोवृत्ति संयमित एवं स्थिर होने से





यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥२०॥
सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥२१॥

---

प्रभश्च तिष्ठति । यतचित्तस्य - यतं - निवृत्तं, चित्तं - सकलबहिर्विषयम- नोव्यापारः, यस्य तस्य । योगिनः । योगम् - स्वात्मविषयकावलोकना- भ्यासम् । युञ्जतः - कुर्वतः । आत्मनः - स्वस्वरूपस्य । सा - निवातस्थो दीपः । उपमा - दृष्टान्तः ॥ १९ ॥

अथ योगस्वरूपं वदन् तस्यावश्यकर्तव्यतामाह ''यत्रे' त्यादि श्लोक- चतुष्टयेन । योगसेवया - योगाभ्यासेन हेतुना । निरुद्धं - सर्वविषयान्तरेभ्यो निवर्तितम् । चित्तं - मनः । यत्र - योगे । उपरमते - अतिशयितसुख- मिदमिति रमते - क्रीडति । यत्र च - योगे । आत्मना - मनसा । आत्मा- नम् । पश्यन् - अवलोकयन् । आत्मन्येव । तुष्यति । अन्यन्नावेक्षते ॥२०

अतीन्द्रियं - विषयेन्द्रियसम्बन्धाजन्यम् । बुद्धिग्राह्यं - बुद्धया ग्राह्यं, आत्मविषयकबुद्धयेकविषयभूतम् । आत्यन्तिकम् - नित्यम् । यत्तत् - किमपि । सुखम् । यत्र - योगे । वेत्ति - अनुभवति । यत्र - योगे । स्थितः । अयं - पुरुषः । तत्त्वतः - तद्भावात् । न चलत्येव । सुखाति- शयादिति भावः ॥ २१ ॥

---

उसका मन विविध भोग्य विषयों में न लगकर केवल आत्म स्वरूप के अवलोकन में ही लगा रहता है ॥ १९ ॥

उक्त योगाभ्यास के द्वारा केवल आत्म स्वरूप में निविष्ट मन जिस अवस्था विशेष में स्थित होकर निरतिशय सुख का अनुभव करता है एवं जिस अवस्था में स्थित होकर मन के द्वारा आत्मा का अवलोकन कर केवल आत्मवस्तु में ही सन्तुष्ट रहता है ॥ २० ॥

जिस अवस्था में स्थित होकर यह पुरुष इन्द्रियातीत केवल बुद्धि से ग्राह्य आत्यन्तिक सुख का अनुभव करता है और उस तात्विक भाव से किसी भी प्रकार विचलित नहीं होता है ॥ २१ ॥

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यते ॥२२॥
तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥२३॥
संकल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥२४॥

---

यं - योगम् । लब्ध्वा । ततः - योगात् । अधिकं - अतिशयितम् । अपरं - अन्यम् । लाभं च । न मन्यते । यस्मिन् - योगे । स्थितः - निष्ठावान् । गुरुणा - गुणवत्पुत्रवियोगादिजनिततयाऽधिकेनापि । दुःखेन - शोकेन । न विचाल्यते - नप्रकम्प्यते ॥ २२ ॥

तम् । दुःखसंयोगवियोगं - दुःखसंयोगस्य - दुःखसम्बन्धस्य, वियोगं - प्रत्यनीकम्, विरोधिनमिति यावत् । योगसंज्ञितं - योगशब्दाभिधेयम् । विद्यात् - जानीयात् । सः । योगः । निश्चयेन - एवंरूपो योग इत्यारम्भदशायामेव निर्णयेन । अनिर्विण्णचेतसा - अनिर्विण्णेन - फलसिद्धौ किंचिद्विलम्बे निर्वेदरहितेन; चेतसा - चित्तेन । योक्तव्यः - कर्तव्यः ॥ २३ ॥

संकल्पप्रभवान् - संकल्पात् - देहात्माभिमानरूपात्, प्रभवः - जन्म, येषां तां स्तथोक्तान् । सर्वान् - पुत्रक्षेत्रशब्दस्पर्शादिविषयकान् समस्तान् । कामान् - मनोरथान् । अशेषतः - सवासनं यथा तथा । त्यक्त्वा - विहाय । समन्ततः - सर्वस्मादपि विषयात् । इन्द्रियग्रामं - इन्द्रियसमूहम् । मनसैव - विषयदोषानुसन्धानपरेण चेतसैव । विनियम्य - उपसंहृत्य ॥ २४ ॥

---

और जिस अवस्था को परमात्म स्वरूप दर्शन रूप लाभ को प्राप्त कर व्यक्ति अन्य लाभ को उसकी अपेक्षा अधिक नहीं मानता है, और जिस अवस्था में स्थिर होकर उसे दुःसह दुःख भी विचलित नहीं कर पाते ॥ २२ ॥

उसी सम्पूर्ण दुःखों को हरण करने वाली अवस्था को 'योग' नाम से कहा जाता है सो जानो । ऐसा योग उद्वेग रहित चित्त से निश्चय ही अभ्यास करने योग्य है । २३ ॥

संकल्पों से होने वाली समस्त कामनाओं को वासना सहित परित्याग कर एवं मन से इन्द्रियों को विषयों से हटाकर ॥ २४ ॥





शनैःशनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनःकृत्वा न किंचिदपि चिन्तयेत् ॥२५॥
यतोयतो निश्चरति मनश्चञ्चल मस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥२६॥
प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् । २७॥

---

धृतिगृहीतया - धृतिः - विवेकः, गृहीता - विषयीकृता, यथा तथा तथोक्तया । बुद्ध्या - अध्यवसायेन । शनैश्शनैः - मन्दम्मन्दम् । उपरमेत् आत्मव्यतिरिक्तविषयादुपरतो भवेत् । मनः - चित्तम् । आत्मसंस्थं - आत्मैकनिष्ठम् । कृत्वा । किंचिदपि - आत्मव्यतिरिक्तं किमपि । न चिन्तयेत् ॥ २५ ॥

रजोगुणवशान्मनश्चलने किं कर्तव्यमित्यत्राह ( यत इति ) चंचलं - चलनस्वभावम् । अस्थिरं - आत्मनि स्थैर्यरहितम् । मनः । यतोयतः - यस्मिन्यस्मिन् विषये । निश्चरति - निर्गच्छति । ततस्ततः - तस्मात्तस्माद्विषयात् । एतत् - मनः । नियम्य । आत्मन्येव - विषये । वशम् । नयेत् प्रापयेत् ॥ २६ ॥

एवं पुनः पुनः प्रत्याहारेण मनोवशीकरणफलमाह (प्रशान्तेति) हि - यस्मात्कारणात् । अकल्मषं - योगाभ्यासेन दग्धकल्मषम् । अतएव । शान्तरजसं - नष्टरजोगुणम् । अतएव । प्रशान्तमनसं - प्रशान्तं - आत्मान्य-

---

विचारशील स्थिर बुद्धि के द्वारा धीरे धीरे आत्मा से अतिरिक्त समस्त विषयों से विरक्त होवे एवं मन को आत्मवस्तु में ही लगाकर उससे अतिरिक्त अन्य कुछ भी चिन्ता न करे ॥ २५ ॥

चञ्चल स्वभाव का यह स्थिर न रहने वाला मन जिस-जिस प्राकृत शब्दादि भोग्य विषय की ओर संसार में दौड़ता है, उस-उस विषय से इस मन को निवृत्त कर संयम पूर्वक केवल परमात्मा में ही लगावे ॥ २६ ॥

उक्त योगाभ्यास द्वारा बार-बार इन्द्रिय संयम की चेष्टा कारण क्रमशः संयत मन, रजोगुण से रहित जिस योगी के पाप नष्ट होकर शान्तचित्त हो गया है, ऐसे ब्रह्मभूत योगी को अर्थात् परमात्म परायण को उस अवस्था का परम सुख प्राप्त होता है ॥ २७ ॥

युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥२८॥
सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥२९॥

---

विषयेभ्य उपरतं, मनो यस्य तं तथोक्तम् । अतएव । ब्रह्मभूतं - स्वस्वरूपेवस्थितम् । एनम् । योगिनम् । उत्तमं - उत्कृष्टम् । सुखं - स्वरूपानुभवरूपम् । उपैति - प्राप्नोति । उत्तमसुखरूपत्वादात्मस्वरूपस्येति भावः ॥ २७ ॥

एवं - उक्तप्रकारेण । आत्मानं । युञ्जन् - योगेनावलोकयन् । अत एव । विगतकल्मषः - विगतसमस्तप्राचीनपापः । योगी । ब्रह्मसंस्पर्शं - ब्रह्मानुभवरूपं । अत्यन्तं - अपरिमितं - सुखं । सुखेन - अनायासेन । सदा-सततं । अश्नुते - अनुभवति ॥ २८ ॥

अथ चतुर्विधा योगविपाकावस्थोच्यते "सर्वभूतस्थ" मित्यादिना । योगयुक्तात्मा - योगेनयुक्तः - आत्मा - मनो यस्य सथोक्तः पुरुषः । सर्वत्र - प्रकृतिवियुक्तेषु सर्वेष्वात्मसु । समदर्शनः - ज्ञानैकाकारतया तुल्यबुद्धिम्सन् । आत्मानं - स्वस्वरूपं । सर्वभूतस्थं - सर्वेषु भूतेषु तिष्ठतीति तथोक्तं, सर्वभूत समानाकार मित्यर्थः । सर्वभूतानि - सर्वभूताना मात्मस्वरूपाणि । आत्मनि - स्वात्मनि । स्थितानीतिशेषः । स्वात्मसमानाकाराणिचेत्यर्थः । ईक्षते - पश्यति । अनेन सर्वेष्वात्मसु साम्यदर्शनावस्थोक्ता भवति ॥ २९ ॥

---

इस प्रकार मन को परमात्म स्वरूप में अच्छी प्रकार से अवस्थित करने से निष्पाप हो वह योगी स्वतः ही सर्वदा ब्रह्मानुभव अर्थात् प्रकृति से रहित आत्म स्वरूप का अनुभव रूप असीम सुख अनुभव करता है ॥ २८ ॥

जिस योगी ने आत्म दर्शन का लाभ प्राप्त कर लिया है वह सर्वत्र प्रकृति विमुक्त समस्त आत्माओं को ज्ञानाकार रूप से परस्पर समान हैं । उसमें वैषम्य केवल प्राकृत देह इन्द्रिय आदि से होने वाला है इस प्रकार जानता है । तब वह सम्पूर्ण आत्माओं में ज्ञानाकारता रूप से समान दर्शन के कारण अपनी आत्मा को सम्पूर्ण जीवों में स्थित एवं सब जीवों में स्थित आत्म वस्तु को अपने में स्थित अनुभव करता है ॥ २९ ॥





यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥३०॥
सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥३१॥

---

ततोप्यधिकदशामाह ( यइति ) यः - योगी । मां - मत्स्वरूपं । सर्वत्र - सर्वेष्वात्मस्वरूपेषु । पश्यति । सर्वं - आत्मवस्तु । मयिच, पश्यति । प्रकृतिसम्बन्धविनिर्मुक्तानां परमात्मना सह परमसाम्य मापन्नानांच । जीवात्मानां परमात्मनश्च समानाकारत्वादिति भावः । अहं, तस्य-योगिनः । न प्रणश्यामि - अदृश्योन भवामि । 'सदापश्यन्ती' त्युक्तरीत्या तस्य सर्वदाऽपरोक्षानुभवविषयो भवामीत्यर्थः । मे - ममच । सः - योगी । न प्रणश्यति - अदृश्यो न भवति । सर्वदा मत्कृपावलोकनविषयो भवतीत्यर्थः । अनेनात्मपरमात्मनोस्साम्यदर्शनावस्थोक्ता ॥ ३० ॥

ततोप्यधिकां विपाकावस्थामाह ( सर्वेति ) यः - योगी । सर्वभूतं स्थितं - सर्वेषुभूतेष्वन्तर्यामितयाऽवस्थितं । मां । एकत्वं - असंकुचितज्ञानैकाकारतयैक्यं । आस्थितः - अङ्गीकृतवान् सन् । भजति - योगदशायां देवत्वमनुष्यत्वादि प्राकृतभेदपरित्यागेन सुदृढं भजते । सः । योगी । शरीरादुत्थानकाले । सर्वथा - सर्वप्रकारेण, केनापिप्रकारेणेत्यर्थः । वर्तमानोपि । मयि वर्तते - मामेव चिन्तयन्वर्तत इत्यर्थः ॥ ३१ ॥

---

जो सिद्ध योगी मेरे स्वरूप के साथ प्रकृति विनिर्मुक्त सम्पूर्ण आत्माओं को ज्ञानैककारता रूप समान रूप से देखने के कारण सम्पूर्ण जीवों की आत्मा के भीतर मुझ परमात्मा स्वरूप को उपलब्ध करते हैं एवं मुझ परमात्मा में समस्त आत्माओं को देखते हैं अर्थात् परमात्मा का ज्ञानाकार रूप होने से आत्मा के साथ साम्य देखता है ऐसे योगी से मैं अदृश्य नहीं रहता है और वह भी मेरी कृपा दृष्टि से वञ्चित नहीं रहता है ॥ ३० ।

उससे भी उत्तम अवस्था बतलाते हैं—

जो सिद्धयोगी सब जीवात्माओं में अन्तर्यामी से अवस्थित मुझ परमात्मा को देव मनुष्यादि विभिन्न शरीरों में भिन्न-भिन्न रूप से न जानकर असंकुचित ज्ञानाकार रूप से सम्पूर्ण आत्माओं में मेरा एकाकार रूप ही उपलब्ध कर मुझे ही देखता है वह योगी सब अवस्थाओं में मुझे ही चिन्तन करता हुआ रहता है ॥ ३१ ॥

**आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।**
**सुखं वा यदि वा दुःखं स योगी परमो मतः ॥३२॥**

अर्जुन उवाच—

**योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।**
**एतस्याहं न पश्यामि चंचलत्वात् स्थितिं स्थिराम् ॥३३॥**

---

ततो विपाककाष्ठामाह ( आत्मौपम्येनेति ) हे अर्जुन ! यः-योगी । आत्मौपम्येन - आत्मानां - प्रकृतिवियुक्तात्मनां, औपम्येन - असंकुचितज्ञानैकाकारत्वसाम्येन हेतुना । सर्वत्र - स्वात्मन्यन्येषु च । वर्तमानोमति शेषः । सुखं - पुत्रजन्मादिरूपम् । यदि वा दुःखम् - तद्वियोगादिदुःखमपिवा । समं-तुल्यम् । पश्यति स्वकीयसुखदुःखे परकीयसुखदुःखसमतया पश्यतीत्यर्थः । सः । योगी । परमः - योगकाष्ठां गतः । मतः - सम्मतः ॥ ३२ ॥

उक्तरूपस्य योगस्य मनोनिग्रहसाध्यत्वा त्तन्निग्रहोपायजिज्ञासयाऽर्जुनः पृच्छति - "योयं योग" इत्यादि श्लोकद्वयेन । हे मधुसूदन ! त्वया । साम्येन - ज्ञानैकाकारतया समत्वेन । योयं योगः - सर्वेष्वात्मसु परमात्मनि च समदर्शनरूपः । प्रोक्तः । चञ्चलत्वात् - मनसश्चलस्वभावत्वा द्धेतोः । एतस्य - सर्वत्र सम दर्शनरूपयोगस्य । स्थिरां - अचलश्चलाम् । दीर्घकालामिति यावत् । स्थितिम् । अहम् । न पश्यामि ॥ ३३ ॥

---

**योगी के सर्वाधिक परिपक्व दशा बताते हैं—**

जो योगी आत्मस्वरूप साक्षात्कार कर चुका है एवं जो संकोच रहित ज्ञानाकार रूप सब प्रकार से शुद्ध आत्मवस्तु को समान रूप से देखता है, इसी कारण जो अपने और दूसरे में होने वाले सुख दुःख को समान भाव से अनुभव करता है, वह इस योग में पराकाष्ठा की अवस्था प्राप्त कर चुका है, यह मैं मानता हूँ। (जैसे संसार में दूसरे के पुत्र जन्म या मरण से व्यक्ति स्वयं अविभूत नहीं होता ठीक वैसे ही अपने पुत्र जन्म-मरण से भी स्वयं अभिभूत न होकर उदासीन रहता है वह योगी सिद्ध है) ॥ ३२ ॥

**इस उपदेश को सुन अर्जुन ने पूछा —**

हे मधुसूदन ! देव मनुष्यादि भेद से विभिन्न रूप में प्रतीयमान समस्त जीवात्मायें एवं उनका अन्तर्यामी परमात्मा ये सब ज्ञानाकार एवं पुण्यपाप से रहित, निर्दोष आदि रूप से परस्पर समान हैं। ऐसे योग का आपने उपदेश किया। किन्तु मेरा मन चंचल स्वभाव का होने के कारण इस प्रकार के योग अथवा साम्यदर्शन की स्थिति में बहुत समय तक रहपायेगा, ऐसा मैं नहीं देखता हूँ ॥ ३३ ॥





**चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ।**
**तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥३४॥**

श्रीभगवानुवाच—

**असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।**
**अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥३५॥**

---

हे कृष्ण ! चंचल - अनवरताभ्यस्तविषयेष्वपि स्वत एव चंचलम् । मनः - चित्तम् । प्रकर्षेण मथितुं शील मस्यास्तीति प्रमाथि - शरीरेन्द्रियक्षोभकर मित्यर्थः । अतएव । बलवत् - जेतु मशक्यम् । तत्र हेतु माह (दृढमिति) दृढं - अनादिवासनया विषयान्तरे ष्वनिवर्त्यं प्रसरं हि । तस्य - चञ्चलस्वभावस्य मनसः । वायोरिव - प्रतिकूलगतेर्महावातस्येव । निग्रहम् - कदाचिदप्यनभ्यस्त आत्मनि नियमनम् । सुदुष्करं - अतीव कर्तु मशक्यम् । अहम् । मन्ये - जानानि । अतो मनोनिग्रहापायो वक्तव्य इति भावः ॥३४॥

हे महाबाहो ! चलं - स्वभाव चञ्चलं । मनः । दुर्निग्रहं - निगृहीतुमशक्यम् । असंशयं - अस्मिन्नर्थे संशयोनास्ति । किन्तु—हे कौन्तेय ! अभ्यासेन - आत्मनि कल्याणगुणाश्रयत्वानुसन्धान जनितात्माभिमुख्येन । वैराग्येण - आत्मव्यतिरिक्तेषु दोषाश्रयत्वानुसन्धान जनित वैतृष्ण्येन च । गृह्यते - कथंचिन्नियम्यते ॥ ३५ ॥

---

क्योंकि हे कृष्ण ! यह मन अनादिवासना जनित विविध भोग लालसाओं में दृढ़ भाव से तत्पर है, अतएव यह स्वभाव से ही अति चञ्चल तथा देह-इन्द्रियों को अपनी इच्छानुसार बल पूर्वक चलायमान कर देता है, इसलिए यह अति बलवान भी है। ऐसे मन का निग्रह करना या वश में करना चञ्चल वायु के निग्रह के समान अति कठिन मानता हूँ। अर्थात् ऐसे चञ्चल और बलवान मन को कैसे वश में किया जाय, सो बताइये ॥ ३४ ॥

भगवान् श्रीकृष्ण बोले – हे महाबाहु अर्जुन ! मन स्वभाव से ही अति चपल, अतएव उसे वश में करना अति कठिन है इसमें कोई सन्देह नहीं, किन्तु हे कौन्तेय ! आत्मा ज्ञानाकार, निर्दोष एवं कल्याण गुणाकार है और आत्मा से अतिरिक्त प्राकृतिक वस्तुयें सदोष हैं इस बार-बार के अनुसन्धान से होने वाले वैराग्य के द्वारा उस मन को वश में किया जा सकता है ॥ ३५ ॥

**असंयतात्मना योगो दुष्प्राप इति मे मतिः ।**
**वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥३६॥**

अर्जुन उवाच—

**अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।**
**अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥३७॥**

---

असंयतात्मना - असंयतः - अनिर्जितः, आत्मा - मनः, येनसः - तेन तथोक्तेनपुंसा । योगः - सर्वत्र समदर्शनरूपः । दुष्प्रापः - सर्वथापि प्राप्तुमशक्य एव । इति । मे - मम । मतिः - निश्चयः । किन्तु । उपायतः - पूर्वोक्तान्तर्गत ज्ञानमदाराधनैकरूप कर्मयोगेनोपायेन । वश्यात्मना - वशीकृतमनसा । यतता - यत्नं कुर्वन्तापुरुषेण । योगः । अवाप्तुं - प्राप्तुं । शक्यः ॥ ३६ ॥

अभ्यासवैराग्याभावादप्राप्तयोगः किंफलं प्राप्नोतीत्यर्जुनः पृच्छति "अयतिश्श्रद्धये" त्यादि श्लोकत्रयेण । हे कृष्ण ! श्रद्धया - आस्तिक्यबुद्धया । उपेतः, योगे प्रवृत्तः । अयतिः - दृढतराभ्यास रूपयत्नरहितः । योगसंसिद्धिम् - योगस्य - समदर्शनरूपस्य, संसिद्धिसम्य क्सिद्धिम् । अप्राप्य- अलब्ध्वा । योगात् । चलितमानसः - च्युतमनस्कः पुरुषः । कां गतिं - भोगमोक्षयोर्मध्ये किं फलम् । गच्छति - प्राप्नोति ॥ ३७ ॥

---

जिस पुरुष का मन संयत नहीं हुआ है, उस पुरुष के द्वारा सर्वत्र समदर्शन रूप योग का प्राप्त करना अति कठिन है, किन्तु जो पूर्वोक्त श्लोक कथित अभ्यास एवं वैराग्य के द्वारा मन को वश में करके निष्काम कर्म के अन्तर्गत ज्ञानांश अनुसन्धान पूर्वक मेरी आराधना रूप कर्मयोग के अभ्यास करते हैं वे इस समदर्शन रूप योग को प्राप्त करने में समर्थ होते हैं ऐसा मेरा मत है ॥ ३६ ॥

अभ्यास और वैराग्य के अभाव में इस योग सिद्धि के न प्राप्त करने पर साधक की क्या दशा होती है उसे अर्जुन पूछते हैं—

हे श्रीकृष्ण ! कोई व्यक्ति योग में श्रद्धायुक्त है किन्तु असंयमी होने के कारण आत्मावलोकन रूप इस योगाभ्यास के करने में असमर्थ होने से उसका मन इस योग ( भगवत् साक्षात्कार ) से च्युत हो जाय तब उस पुरुष की कौन सी गति होती है ॥ ३७ ॥





**कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।**
**अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥३८॥**
**एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः ।**
**त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते । ३९॥**

श्रीभगवानुवाच—

**पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।**

---

हे महाबाहो ! अप्रतिष्ठः - प्रतिष्ठारहितः - अनुष्ठीरामानेषु कर्मसु फलाभिसन्धिसहित इत्यर्थः । ब्रह्मणः । पथि - उपक्रान्तब्रह्म प्राप्ति साधनभूतयोगमार्गे । विमूढः - प्रच्युतः । अत एव । उभय विभ्रष्टः - भोगमोक्षरूपोभय पुरुषार्थशून्यस्सन् । छिन्नाभ्रमिव - पूर्वस्मान्महतो मेघाद्विश्लिष्य मेघान्तरंचामाप्तं यदभ्रं - मेघशकल, तदिव । ननश्यतिकच्चित् - नष्टो न भवति किं ॥ ३८ ॥

हे कृष्ण ! मे - मम । एतं । संशयं - किं भोगमोक्षयोरन्यतरत्फलं प्राप्नोति - किंवा - उभयभ्रष्टोनश्यतीत्येवं रूपं सन्देहं । अशेषतः - सवासनम् । छेत्तुं - परिहर्तुम् । अर्हसि । हि - यस्मात्कारणात् । त्वदन्यः - त्वद्व्यतिरिक्तः । अस्य । संशयस्य । छेत्ता - परिहर्ता । नोपपद्यते - न सम्भवति ॥ ३९ ॥

हे पार्थ ! तस्य - श्रद्धया योग मुपक्रम्य तस्माच्च्युतस्य । इह - अस्मिन् लोके । अमुत्र - परस्मिन् लोके च । विनाशः - प्राकृतभोगानुभवे ब्रह्मानुभवे चाभीष्टानवाप्तिरूपः प्रत्यवायरूपानिष्टा वाप्तिरूपश्च । नैव

---

हे महाबाहो कृष्ण ! ऐसा भ्रष्ट योगी पुरुष एक ओर तो फल की कामना से रहित होने के कारण ऐश्वर्य लाभ से बंचित एवं प्रतिष्ठा हीन रहता है दूसरी ओर आत्मदर्शन रूपयोग मार्ग से भ्रष्ट होने के कारण भोग और मोक्ष दोनों पुरुषार्थों से बंचित हो छिन्न-भिन्न मेघ खण्ड के समान नष्ट नहीं हो जाता ? ॥ ३८ ॥

हे कृष्ण ! मेरे इस संशय को आप ही दूर करने में समर्थ हो, क्योंकि आपसे अन्य दूसरा कोई इस संशय को काट सकता है, ऐसी सम्भावना नहीं है ॥ ३९ ॥

श्रीभगवान बोले— हे पार्थ ! इस आत्मावलोकन रूप योग को श्रद्धा सहित एकबार आरम्भ करके बाद में यदि इससे कोई व्यक्ति च्युत हो जाता है तो भी इस

न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ।।४०।।
प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ।।४१।।
अथवा योगिनामेव कुले भवति धीमताम् ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ।।४२।।

विद्यते । हि - यस्मात्कारणात् । कल्याणकृत् - निरतिशयकल्याण रूपयोगकृत् । कश्चित् । दुर्गतिं - प्राकृतभोगानवाप्तिमनिष्टावाप्तिं वा । न गच्छति - कालत्रयेपि न प्राप्नोति ।। ४० ।।

कथमुभयं भविष्यतीत्यत्राह ( प्राप्नोति ) योगभ्रष्टः - योगप्रच्युतः पुरुषः । पुण्यकृतां - सुकृतिनाम् । लोकान् - स्वर्गादीन् । प्राप्य । तत्र । शाश्वतीः - बह्वीः । समाः - सम्वत्सरान् । उषित्वा - स्थित्वा । ततः । शुचीनां - परिशुद्धानां, सदाचारशीलानामित्यर्थः । श्रीमतां - ऐश्वर्यसम्पन्नानाम् । गेहे - गृहे । अभिजायते - अभिजातो भवति । योगोपक्रम एव भ्रष्टे उपक्रान्तयोगमाहात्म्याद्योगोपक्रमयोग्यानां कुले भवतीति भावः ।। ४१ ।।

अल्पकालाभ्यस्तयोगभ्रष्टस्य गतिरुक्ता । परिपक्वयोगभ्रष्टस्य तु पक्षान्तरमाह ( अथवेति ) योगभ्रष्ट इत्यनुषज्यते । चिराभ्यस्तयोगात्प्रच्युतः । धीमतां - स्वयमेव योगोपदेशसमर्थानाम् । योगिनां - योगं

लोक में और परलोक में कहीं भी उसका विनाश नहीं होता, क्योंकि हे प्यारे ! योग साधना रूप कल्याण कर्म के करने वाले किसी भी व्यक्ति की दुर्गति नहीं होती है ।। ४० ।।

अल्पकाल अभ्यास करने वाले योगभ्रष्ट की क्या दशा होती है इसे बताते हैं—यह योगभ्रष्ट पुरुष मृत्यु के बाद स्वर्गादि लोकों में जाकर वहाँ बहुत वर्षों तक सुख भोग करके बाद में फिर से इस पृथ्वी पर सदाचारी, पवित्र एवं धन-धान्यादि ऐश्वर्य सम्पन्न लोगों के घर में अर्थात् फिर से इस योग के आरम्भ करने के लिए उपर्युक्त कुल में जन्म लेते हैं ।। ४१ ।।

अथवा जो बहुत समय तक योगाभ्यास करने के बाद योगभ्रष्ट हो गये हैं, ऐसे पुरुष योग का उपदेश देने में समर्थ बुद्धिमान योगियों के घर में फिर से जन्म लेते हैं। ऐसे योगियों के कुल में जन्म इस संसार में निःसन्देह अत्यन्त दुर्लभ है ।। ४२ ।।





तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ।।४३।।
पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोपि सः ।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ।।४४।।

कुर्वतामेव । कुले - गृहे । भवति - जायते । ईदृशं - योगयोग्यानां योगिनां च कुले लभ्यमानम् । यत् । जन्म । एतत् - जन्म । लोके । दुर्लभतरं - प्राकृतजनानामत्यन्तं दुर्लभं हि ।। ४२ ।।

ततः कमित्यत आह (तत्र तमिति) हे कुरुनन्दन ! तत्र - तस्मिन्नुभयविधे जन्मनि । पौर्वदैहिकं - पूर्वदेहे भवम् । तमेव । बुद्धिसंयोगं - बुद्ध्या योगविषयया, संयोगं - सम्बन्धम् । लभते - प्राप्नोति । ततः - तदनन्तरम् । सुप्तप्रबुद्ध इव । भूयः - पुनरपि । संसिद्धौ - योगसिद्धौ विषये । यतते - यत्नं करोति च ।। ४३ ।।

सः - योगभ्रष्टः । अवशः - अनिच्छन्नपि । तेन । पूर्वाभ्यासेन - पूर्वेणाभ्यानेनैव । ह्रियते - योगविषय एवाकृष्यते । हि - एतद्योगमहात्म्यं प्रसिद्धमित्यर्थः । इममर्थं कैमुतिकन्यायेन दृढयति - (जिज्ञासुरिति) जिज्ञासुः - योगे प्रवृत्तिं विना केवलं ज्ञातुमिच्छन्नपि पुरुषः । शब्दब्रह्म - देवमनुष्यादि पृथिव्यन्तरिक्षादिशब्दाभिलापयोग्यं ब्रह्म प्रकृतिः, तत् । अतिवर्तते - अतिक्रामति, प्रकृतिसम्बन्धान्मुक्तो भवति; देवमनुष्यादिशब्दाभिलापानर्हं ज्ञानानन्दैकस्वरूपमात्मानं प्राप्नोतीत्यर्थः ।। ४४ ।।

हे अर्जुन ! वहाँ योग साधन के उपयोगी, पवित्र और श्रीमानों के घर में अथवा बुद्धिमान् योगी के घर में जन्म ग्रहण करके वह योगभ्रष्ट पुरुष पूर्व संस्कार के वश होकर पूर्व जन्म में अभ्यस्त इस योग के विषय में बुद्धि संयोग वाला होता है, तब वह पुरुष फिर से इस परमात्म प्राप्ति रूप सिद्धि के लिए पहले से भी बढ़कर प्रयत्न करता है ।। ४३ ।।

वह योगभ्रष्ट पुरुष पूर्वसंस्कार के वश, इच्छा न रहने पर भी अवश होकर इस परमात्म योग के विषय में निश्चित रूप से फिर से आकृष्ट होता है । इस योग के विषय को जानने का इच्छुक पुरुष भी देव मनुष्य, पृथ्वी - स्वर्गादि शब्दवाच्य-प्रकृतिरूप बन्धन से मुक्ति लाभ कर जाता है ।। ४४ ।।

**प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।**
**अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥४५॥**
**तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।**
**कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥४६॥**

योगी - चलितयोगस्तु । प्रयत्नात् - प्रयत्नेन । यतमानः - उत्तरोत्तरमधिकयोगे यत्नं कुर्वन् । संशुद्धकिल्बिषः - संशुद्धं - योगेन विधूतं, किल्बिषं - यस्य स तथोक्तः । अनेकजन्मसंसिद्धः - अनेकेषु जन्मस्वभ्यासेन संसिद्धयोगस्सन् । तत एव । परां उत्कृष्टाम् । गतिम् । याति - प्राप्नोति ॥ ४५ ॥

योगिनस्सर्वस्मादाधिक्यमाह (तपस्विभ्य इति) योगी । तपस्विभ्यः - कृच्छ्रचान्द्रायणादि तपोनिष्ठेभ्योऽपि । अधिकः - श्रेष्ठः । ज्ञानिभ्यः - शास्त्रजन्य ज्ञानवद्भ्योऽपि । अधिकः । कर्मिभ्यः - इष्टापूर्तादिकर्मानुष्ठानपरेभ्योपि । योगी । अधिकः । मतः - सम्मतः । तस्मात् - कारणात् । हे अर्जुन । त्वं । योगी - योगनिष्ठः । भव ॥ ४६ ॥

एवं परविद्यांगभूतं प्रत्यगात्मावलोकनमुक्त्वा परविद्यां प्रस्तौति (योगिनामिति) यः - योगी । मद्गतेन - प्रीत्यतिशयान्मदेकप्रवणेन । अन्तरात्मना - मनसा । श्रद्धावान् - मत्प्राप्तिविषयकत्वरायुक्तस्सन् । मां - अखिलहेयप्रत्यनीककल्याणैकतानं । भजते - उपास्ते । सः । सर्वेषां - योगविपाकभेदेन भिन्नानां पूर्वोक्तानां । योगिनामपि - षष्ठ्या स्सम्बन्धसामा-

विचलित मन वाला योगी योगभ्रष्ट होने पर भी प्रकृष्ट रूप से चेष्टा के द्वारा इस योग में उत्तरोत्तर अधिक यत्नशील होता है, इस प्रकार क्रमशः समस्त पापों से मुक्त होकर अनेक जन्मों के बाद इस योग में सम्यक् सिद्धि प्राप्त कर ऊँची गति भी प्राप्त करता है ॥ ४५ ॥

आत्मावलोकनशील योगी, कृच्छ्रचान्द्रायण व्रतादि कायक्लेश युक्त तपोनिष्ठ पुरुष की अपेक्षा श्रेष्ठ है और विभिन्न शास्त्र कथित ज्ञान से ज्ञानवान् पुरुष की अपेक्षा भी श्रेष्ठ है एवं कुआँ खोदना, अश्वमेध यज्ञादि ऐश्वर्य फल को देने वाले कर्मों को करने वाले लोगों की अपेक्षा भी श्रेष्ठ है, क्योंकि परमात्म ध्यान परायण पुरुष तपस्वी, ज्ञानी एवं कर्म परायण पुरुषों की अपेक्षा उत्कृष्ट (श्रेष्ठ) फल प्राप्त करता है । अतएव हे अर्जुन ! तुम आत्मावलोकन रूप योगनिष्ठ हो ओ ॥ ४६ ॥





**योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।**
**श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥४७॥**

॥ इति षष्ठोऽध्यायः ॥ ६ ॥

न्यविषयत्वेन योगिभ्योऽपीति पंचम्यर्थेषष्ठी, वक्ष्यमाण योगिनः पूर्वोक्तयोगिष्वनन्तर्गतत्वेन निर्धारणषष्ठ्यसम्भवात् । मे - मम । युक्ततमः - श्रेष्ठतमः । मतः - सम्मतः ॥ ४७ ॥

इति श्रीमद्भगवद्गीताभाष्यार्थ संग्रहतात्पर्यदीपे
श्रीवरवरमुनिविरचितायां बालबोधिन्याख्यायां
गीतार्थसंग्रहदीपिकायां

**षष्ठोऽध्यायः ॥ ६ ॥**



(प्रथम छः अध्यायों में भगवद् भजन के अङ्ग रूप जीवात्मा का स्वरूप उसके साक्षात्कार का विषय कहा गया है । इस षष्ठ अध्याय के इस अन्तिम श्लोक द्वारा भगवद् भजन रूप पराविद्या (भक्तियोग) की प्रस्तावना प्रस्तुत करते हैं । बीच की छः अध्यायों में इस भक्तियोग के विषय में विशेष रूप से कहा जायगा) ।

जो पुरुष मुझ में अत्यन्त प्रीति के कारण मुझ में ही चित्त लगाकर मुझ को प्राप्त करने के लिए अत्यन्त आग्रह युक्त हो मेरा भजन करता है वह योगी, तपस्वी, कर्मनिष्ठ आदिक सब भजनशील पुरुषों की अपेक्षा भी अधिक श्रेष्ठ है, यह मेरा मत है ॥ ४७ ॥

॥ षष्ठ अध्याय समाप्त ॥

श्रीरस्तु

# अथ सप्तमोऽध्यायः

★

श्रीभगवानुवाच—

मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः ।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ १ ॥

एवं प्रथमेनाध्यायषट्केन परब्रह्मप्राप्त्युपायभूतस्य यदुपासनस्यांगभूतमात्मज्ञानपूर्वककर्मानुष्ठानसाध्यं प्राप्तुः प्रत्यगात्मनस्स्वरूपयाथात्म्यदर्शनमुक्तं । इदानीन्मध्यमेनषट्केन परब्रह्मस्वरूपं भक्तिशब्दवाच्यं तदुपासनंचोच्यते । तत्र सप्तमे ध्याये भगवत्स्वरूपयाथात्म्यं तस्य प्रकृत्यातिरोधनं तन्निवृत्तये भगवत्प्रपत्तिरुपासकभेदो ज्ञानिन श्श्रैष्ठ्यं चोच्यते । हे पार्थ - अर्जुन ! मदाश्रयः - अहमेवाश्रयो यस्य स मदाश्रयः - मया विनास्वात्मधारणाशक्त्या मदेकाधारः । मयि - विषये । आसमन्तात् सक्तं मनो यस्य सः - आसक्तमनाः । योगं । युञ्जन् - कर्तुं प्रवृत्तः । त्वं । समग्रं - सकलं । मां-योगविषयभूतं मां । यथा येन ज्ञानेन । असंशयं संशयरहितं यथा तथा । ज्ञास्यसि । तत् - ज्ञानं । शृणु - सावधानमाकर्णय ॥ १ ॥

## सप्तम अध्याय

### ज्ञान-विज्ञान योगः

श्रीभगवान बोले—हे अर्जुन ! अनन्य प्रेम से मुझ में ही एकमात्र आश्रित होकर और मुझ में ही अपने मन को लगाकर योग साधन का अभ्यास करते-करते मेरा सम्पूर्ण विभूति, बल, ऐश्वर्य आदि स्वरूप तुम निःसन्देह ही जिस प्रकार जान सकते हो उसे सुनो ॥ १ ॥





ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ २ ॥
मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ३ ॥

वक्ष्यमाणं ज्ञानं स्तौति (ज्ञानमिति) सविज्ञानं - समस्त चिदचिद्वस्तु ज्ञानाद्विविक्ताकारविषयं ज्ञानं - विज्ञानं, तेन सहितं । अशेषतः - अशेषं । इदं - वक्ष्यमाणरूपं । ज्ञानं - मत्स्वरूपविषयकं ज्ञानम् । ते - तव । अहम् । वक्ष्यामि । यत् - ज्ञानम् । ज्ञात्वा । इह - मयि । भूयः - पुनरपि । ज्ञातव्यं - ज्ञेयम् । अन्यत् - तत्त्वम् । नावशिष्यते - अवशिष्टं न भवति ॥ २ ॥

वक्ष्यमाणज्ञानदुर्लभत्वमाह (मनुष्याणामिति) मनुष्याः - शास्त्राधिकारिणः, तेषां । सहस्रेषु - मध्ये । कश्चिदेव । सिद्धये - मम साक्षात्काररूपसिद्धिपर्यन्तम् । यतति - यत्नं करोति । स एव प्रथमं दुर्लभ इत्यर्थः । यततां - सिद्धिपर्यन्तं यतमानानां । सहस्रेषु । कश्चिदेव । मां । वेत्ति - विदित्वा सिद्धये यत्नं करोतीत्यर्थः । अयं पूर्वोक्ताधिकारिणोपि

इस ज्ञान की महिमा बताते हैं—मैं तुम्हें मुझसे सम्बन्धित ज्ञान-विज्ञान सहित अर्थात् समस्त चित् एवं अचित् वस्तु विषयक विभिन्न ज्ञान के सहित समग्र रूप से तुम्हें बतलाता हूँ । जिसके जानने से मुझ से सम्बन्धित कोई भी जानने योग्य तत्व अवशिष्ट नहीं रह जाता है ॥ २ ॥

यह ज्ञान अत्यन्त दुर्लभ है—

हजारों मनुष्यों में से कोई एक व्यक्ति अपने पूर्व पुण्यों के फल स्वरूप मेरे दर्शन प्राप्त करना रूप सिद्धि के लिए यत्न करता है अर्थात् इस प्रकार की चेष्टा बहुत कठिन है ।

ऐसे प्रयत्नशील सहस्रों जनों में से कदाचित् कोई मुझे जान पाता है । अर्थात् ऐसा अधिकारी उससे भी अधिक दुर्लभ है । मुझे विषय बनाने वाले ज्ञान में जिन्हें सिद्धि प्राप्त हो गयी है, ऐसे सहस्रों जनों में कोई एक व्यक्ति मेरा सम्पूर्ण यथार्थ स्वरूप जान पाता है अर्थात् ऐसा अन्तिम प्रकार का अधिकारी नितान्त ही दुर्लभ है ॥ ३ ॥

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५ ॥

---

दुर्लभः । सिद्धानां - मद्विषयज्ञानवतामपि । सहस्रेषु मध्ये । कश्चिदेव । तत्त्वतः - यथावत् - मां । वेत्ति । तथा विद्याधिकारी परमदुर्लभ इति भावः ॥ ३ ॥

एवं श्रोतारमभिमुखीकृत्याथ प्रतिज्ञातमर्थं वक्तुमारभते (भूमिरित्यादि) भूमिः – पृथिवी । आपः – जलं । अनलः – अग्निः । वायुः - मारुतः । खं – आकाशः । मनः - मनः प्रभृतीन्द्रियवर्गः । बुद्धिः - महत्तत्त्वञ्च । अहङ्कारः – सात्त्विकराजसतामभेदेन त्रिविधाऽहंकारश्च । इति - अनेन प्रकारेण । अष्टधा - अष्टभिः प्रकारैर्भिन्ना । इयं । प्रकृतिः । मे – मदीया ॥ ४ ॥

इयं – अष्टधा भिन्ना मे प्रकृतिः । अपरा – जडत्वान्निकृष्टा । हे महाबाहो । इतः - अचेतनभूतायाः प्रकृतेः । अन्यां - विलक्षणाम् । जीवभूतां - जीवरूपाम् । मे । प्रकृतिं तु । परां – अजडत्वाद्भोक्तृत्वात्प्रधानत्वाच्चोत्कृष्टाम् । विद्धि – जानीहि । यया – जीवरूपया मत्प्रकृत्या । इदं – स्थावरजंगमात्मकम् । जगत् । धार्यते – शरीरितयाऽन्तः प्रविश्य ध्रियते ॥ ५ ॥

---

अब विज्ञान (प्रकृति ज्ञान) का विषय कहते हैं—

पृथिवी, जल, अग्नि, वायु, आकाश, मन आदिक ग्यारह इन्द्रियाँ बुद्धि, सात्विक, राजसिक, तामसिक भेद से त्रिविध अहङ्कार यह आठ प्रकार से विभक्त मेरी प्रकृति (जड़ प्रकृति) है । यह जड़ प्रकृति २४ तत्वों से विशिष्ट एवं सात्विकादि त्रिविध गुणों से विभक्त होने पर भी सब मिलकर मूलतः उक्त आठ तत्वों के अन्तर्गत ही हैं ॥ ४ ॥

इस प्रकार से विभक्त यह प्रकृति जड़ या निकृष्ट प्रकृति है । हे अर्जुन ! इस जड़ प्रकृति से विलक्षण मेरी एक और जीवरूप प्रकृति है, किन्तु वह चैतन्य विशिष्ट या अजड़ रूप होने से मेरी उत्कृष्ट प्रकृति जानो । जीवरूप यह अजड़ प्रकृति देहीरूप से अन्तःस्थित होकर इस स्थावर जङ्गमात्मक जड़ प्रकृति को धारण किये हैं ॥ ५ ॥





एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६ ॥
मत्तः परतरं नान्यत्किंचिदस्ति धनञ्जय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥

---

तस्याः प्रकृतित्वं दर्शयन् तद्द्वारा स्वस्य जगत्कारणत्वमाह (एतद्योनीनीति) सर्वाणि - ब्रह्मादीनि स्तम्बपर्यन्तानि । भूतानि । एतद्योनीनि - एतत् - परापररूपप्रकृतिद्वयं, योनिः - उपादानकारणम्, येषां तानि तथोक्तानि । इति - अनेन प्रकारेण । उपधारय - जानीहि । अतएव । कृत्स्नस्य - मदीयप्रकृतिद्वयमयस्य समस्तस्य । जगतः - प्रपंचस्य । अहं - तयोरपि योनिभूतोऽहम् । प्रभवत्यस्मादिति प्रभवः - उत्पत्तिकारणम् । तथा । प्रलीयतेऽस्मिन्निति - प्रलयः - लयकारणं च ॥ ६ ॥

हे धनञ्जय ! मत्तः - मदपेक्षया । अन्यत् । परतरं - उत्कृष्टतरम् । किंचिदपि - वस्तु । नास्ति । सर्वम् । इदं - चिदचिद्वस्तुजातम् । सूत्रे - तन्तौ । मणिगणा इव - रत्नसमूहा इव । मयि । प्रोतं - आश्रितम् ॥ ७ ॥

समस्त चिदचिद्वस्तु शरीरिणः स्वस्मादन्यस्याभावात्स्वयमेव सर्वमित्याह पंचभिः श्लोकैः । हे कौन्तेय ! अप्सु - जलेषु । रसः - मधुरादिः । अहमेव । शशिसूर्ययोः - चन्द्रसूर्ययोः । प्रभा कान्तिः । अहं । अस्मि ।

---

मेरी यह परा और अपरा प्रकृति ब्रह्मा से लेकर स्तम्ब पर्यन्त चित् अचित् सम्पूर्ण प्राणियों की उत्पत्ति स्थल या उपादान कारण है, और मैं इस प्रकृति द्वय को उत्पन्न करने वाला उपादान कारण हूँ । इसलिए मुझे ही इस समग्र चेतनाचेतनात्मक जगत् का उत्पत्ति प्रलय का कारण जानो ॥ ६ ॥

इसलिए हे धनञ्जय ! मेरी अपेक्षा अन्य कोई भी श्रेष्ठ वस्तु नहीं है अर्थात् मैं ही सर्वश्रेष्ठ तत्व हूँ । माला में जैसे सम्पूर्ण मनिये एक ही सूत में गुथे होते हैं ठीक उसी प्रकार समस्त जगत् मुझ में ही आश्रित रहता है अर्थात् चेतन अचेतन रूप प्रकृति द्वय जगत् का उपादान है, किन्तु उस जगत् की सृष्टि स्थिति संहार मेरे ही आधीन है ॥ ७ ॥

रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्ययोः ।
प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८ ॥
पुण्यो गन्धः पृथिव्यांच तेजश्चास्मि विभावसौ ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९ ॥
बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ।
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥१०॥
बलं बलवतां चाहं कामरागविवर्जितम् ।
धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥११॥

---

सर्ववेदेषु । प्रणवः । अहमेव । खे - आकाशे । शब्दः । अहमेव । नृषु - मनुष्येषु । पौरुषम् - उद्योगः । अहम् ॥ ८ ॥

पृथिव्यां । पुण्यः - सुरभिः । गन्धश्च । विभावसौ - अग्नौ । तेजश्च । अहं । अस्मि । सर्वभूतेषु - सर्वप्राणिषु । जीवनं - प्राणधारणं । तपस्विषु - वानप्रस्थादिषु । तपः - कायक्लेशादिरूपतपश्च । अहं अस्मि ॥ ९ ॥

हे पार्थ ! सर्वभूतानां । सनातनं - उत्तरोत्तरकार्येष्वनुस्यूततया-नित्यं । बीजं - सजातीयकार्यारम्भसामर्थ्यं । मां । विद्धि । बुद्धिमतां - बुद्धिः - प्रज्ञा च । अहं । अस्मि । तेजस्विनां - पराभिभवनसामर्थ्यवतां-जनानाम् । तेजः - पराभिभवन सामर्थ्यं च । अहं ॥ १० ॥

कामरागविवर्जितं - कामः - अप्राप्तवस्तुष्वभिलाषः, रागः - अभि-

---

'समस्त चित् अचित् वस्तु परमात्म पदवाच्य हैं' यह बताते हैं— हे कौन्तेय ! जल में मधुर आदि बिभिन्न रस मैं ही हूँ चन्द्र और सूर्य की कान्ति और तेज मैं ही हूँ । वेद में प्रणव (ॐ) आकाश का शब्द एवं पुरुषों का पौरुष मैं ही हूँ ॥ ८ ॥

. पृथिवी की सुगन्धी, अग्नि का तेज, सब प्राणियों का जीवन एवं तपस्वियों की तपस्या मैं ही हूँ ॥ ९ ॥

हे पार्थ ! मुझे सम्पूर्ण जीवों का आदि जीव या आदि कारण जानो । बुद्धि-मानों की बुद्धि एवं तेजस्वियों का तेज भी मैं ही हूँ ॥ १० ॥

बलवानों का कामना और अनुराग रहित बल मैं ही हूँ । हे भरतर्षभ !





ये चैव सात्त्विका भावा राजसा स्तामसाश्च ये ।
मत्त एवेति तान् विद्धि न त्वहं तेषु ते मयि ॥१२॥
त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥१३॥

---

लषितार्थलाभेपि पुनरधिकार्थेतृष्णा, ताभ्यां विवर्जितं । बलवतां - जनानां । बलं - सर्व स्वधर्मानुष्ठान सामर्थ्यं च । अहं । हे भरतर्षभ । भूतेषु - देव-मनुष्यादिषु । धर्माविरुद्धः - धर्मस्याप्रतिकूलः । कामश्च । अहं । अस्मि ॥ ११ ॥

सात्त्विकाः - सत्त्वप्रधानाः । ये । भावाः - शमदमादयः पदार्थाः । सन्ति । राजसाः - रजोगुणप्रधानाः । ये च । भावाः । हर्षदर्पादयः । सन्ति । तामसाः - तमोगुणप्रधानाः । ये च । भावाः - शोकमोहादयः । सन्ति । तान् - सर्वानेव भावान् । मत्तएवेति विद्धि - मत्सकाशादेवजातान्विद्धि । अहन्तु । तेषु । न - तदायत्तस्थितिर्न भवामीत्यर्थः । ते - भावाः । मयि । मदायत्तस्थितिका इत्यर्थः ॥ १२ ॥

गुणमयैः - सत्त्वादिगुणप्रचुरैः । त्रिभिः - त्रिविधैः । एभिः - पूर्वोक्तैः । भावैः । इदं - देवमनुष्याद्यात्मकम् । सर्वम् । जगत् । मोहितं सत् । एभ्यः भावेभ्यः । परं - विप्रकृष्टम् । एभिरस्पृष्टमिति यावत् । अव्ययं - सदैक-रूपम् । माम् । नाभिजानाति - ज्ञातुं न शक्नोति ॥ १३ ॥

---

देवमनुष्य आदि जीवों में धर्म से अविरुद्ध कामनारूप से भी मैं ही अवस्थित कहा जाता हूँ ॥ ११ ॥

शम-दमादि समस्त सात्विक सत्वप्रधान भाव, हर्ष-दर्प आदिक राजसिक रजः प्रधान भाव एवं शोक-मोह आदिक तमः प्रधान या तामसिक भाव ये सब भाव मुझ से ही उत्पन्न हैं, किन्तु मैं उनके अधीन नहीं रहता हूँ, अपितु वे मेरे अधीन रहते हैं ॥ १२ ॥

चराचर सम्पूर्ण जगत् सत्वादि इन तीन भावों से मोहित रहता है, इसलिए वह जगत्, इन गुणमय भावोंसे उत्कृष्ट (श्रेष्ठ) एवं अव्यय (सदा एक रूप में स्थित) मुझको नहीं जान पाता है ॥ १३ ॥

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥१४॥
न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
माययापहृतज्ञाना आसुरं भावमाश्रिताः ॥१५॥

---

तर्हि त्वां के वा जानन्तीत्यत्राह (दैवीति) गुणमयी - सत्त्वरजस्तमोमयी। दैवी - देवेन - क्रीडाप्रवृत्तेन, मयैव निर्मिता। एषा। मम। माया- प्रकृतिर्हि। दुरत्यया - दुरतिक्रमा। तर्हि तद्विमोचनोपायः क इत्यत्राह (मामेवेति) ये। मामेव। प्रपद्यन्ते - शरणं व्रजन्ति। ते। एतां - मदीयाम्। मायाम्। तरन्ति - अतिक्रम्य मामेवोपासत इत्यर्थः ॥ १४ ॥

एवंविधां भगवत्प्रपत्तिं सर्वेपि किमिति न कुर्वत इत्यत्राह (नमामिति) दुष्कृतिनः - पापकर्माणः। अतएव, मूढाः - अविदितमत्स्वरूपाः। नराधमाः ततोपि दुष्कृताधिक्येन मत्स्वरूपा परिज्ञानात् प्राकृतेष्वेव भोगेषु सक्ताः पुरुषापशदाः। माययापहृतज्ञानाः - सामान्यतो मत्स्वरूपज्ञाने जातेपि पूर्वेभ्यो दुष्कृतातिशयाद्युक्त्याभासरूपया मायया नष्टमद्विषयज्ञानाः। आसुरं असुरसम्बन्धिनम्। भावं - स्वभावम्। आश्रिताः - पूर्वेभ्योपि दुष्कृतातिशयान्मद्विषयं मदैश्वर्यविषयं च ज्ञानं येषां मयिद्वेषायैव भवति त आसुरस्वभावा इत्यर्थः। एते चत्वारः। माम्। न प्रपद्यन्ते ॥ १५ ॥

---

सर्वश्रेष्ठ ईश्वर के जानने का उपाय क्या है सो बताते हैं—

मेरी यह माया अर्थात् विचित्र कार्यकारिणी शक्ति, इस जगत् की सृष्टि आदि क्रीड़ा में प्रवृत्त मेरे द्वारा ही निर्मित है। यह माया अत्यन्त दुरतिक्रमणीय है अर्थात् किसी जीव की यह सामर्थ्य नहीं कि वह अपनी शक्ति से मेरी इस माया का अतिक्रमण कर सके। किन्तु जो केवल मेरी ही शरणागत हैं वे ही मेरी कृपा से इस माया से छुटकारा पाने में समर्थ हो पाते हैं ॥ १४ ॥

इस भगवत्प्राप्ति या शरणागति को सभी क्यों नहीं करना चाहते, इसे बतलाते हैं—

आत्म विषयक ज्ञान से रहित मूढ़ पुरुष, मेरे स्वरूप को न जानने वाले अज्ञ अतः प्राकृत भोगों में अति आसक्त, पूर्वोक्तों से भी अधिक अधम माया मोहित अतएव दुष्कर्मी तथा आसुरी प्रकृति के लोग अर्थात् भगवद् विषय ज्ञात होने पर भी जो उनसे हिंसा करते हैं, ये चार प्रकार के पापी पुरुष मेरी शरण में नहीं आते हैं ॥१५॥





चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥१६॥
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥१७॥

---

हे भरतर्षभ - भरतश्रेष्ठ ! अर्जुन। सुकृतिनः - पुण्यकर्माणः। चतुर्विधाः - सुकृततारतम्येनोत्तरोत्तरमधिकतया चतुःप्रकाराः। जनाः। मां - मामेव। भजन्ते - शरणवरणपूर्वकमुपासते। तानेव चतुःप्रकारानाह। आर्तः - नष्टैश्वर्यः पुनस्तत्प्राप्तिकामः। अर्थार्थी - अप्राप्तैश्वर्यस्तत्प्राप्तिकामः। जिज्ञासुः प्रकृतिवियुक्तज्ञानैकस्वरूप केवलात्मप्राप्तीच्छुः। ज्ञानी - मच्छेषतैकरसात्मस्वरूपज्ञानवत्तया मत्प्राप्तिकामश्च ॥ १६ ॥

तेषाम्मध्ये ज्ञानी श्रेष्ठ इत्याह (तेषामिति) नित्ययुक्तः - मया नित्ययोगवान्। इतरेषां तु स्वाभीष्टप्राप्तिपर्यन्तमेव मया योग इतिभावः। एकभक्तिः - एकस्मिन् - मय्येव, भक्तिर्यस्य स तथोक्तः। इतरेषां तु स्वाभीष्टवस्तुनि तत्साधनभूते मयि च तद्भक्तिरित्यर्थः। ज्ञानी। तेषां - पूर्वोक्तानां चतुर्णाम्मध्ये। विशिष्यते - अतिशेते। किंच। अहम्। अत्यर्थं - अर्थः - अभिधेयः, तमतिक्रान्तं यथा भवति तथा। प्रियः - प्रीतिविषयः। तस्य मद्विषयप्रीतिः सर्वज्ञेन सर्वशक्तिना मयापि परिच्छिद्याभिधातुं न शक्यत इत्यर्थः। सः ज्ञानीच। मम। अत्यर्थम्। प्रियः ॥ १७ ॥

---

हे भरतवंश में श्रेष्ठ अर्जुन ! चार प्रकार के पुण्यात्मा पुरुष मेरी शरण में आकर मुझे भजते हैं। वे ये हैं—ऐश्वर्य से भ्रष्ट होकर आया आर्त, ऐश्वर्य चाहने वाला अर्थार्थी, आत्मलाभ का इच्छुक जिज्ञासु एवं मद् विषयक ज्ञानवान् ॥१६

उनमें ज्ञानी क्यों श्रेष्ठ हैं, बतलाते हैं—

पूर्वोक्त चार प्रकार के भक्तों में निरन्तर मेरा ही चिन्तन करने वाला नित्ययुक्त, केवल मुझ में ही भक्ति करने वाले एकभक्ति, अतएव ऐसा ज्ञानी पुरुष सर्वश्रेष्ठ है क्योंकि और भक्त तो अपना अभीष्ट प्राप्त होने तक ही मेरा भजन करते हैं। यह ज्ञानी भक्त मुझे सर्वदा भजता है। उन चारों भक्तों में ऐसे ज्ञानी भक्त को मैं अत्यन्त प्रिय हूँ और वे ज्ञानीजन मुझे अत्यन्त प्यारे हैं ॥ १७ ॥

**उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।**
**आस्थित स्स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥१८॥**
**बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।**
**वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥१९॥**

---

एते - पूर्वोक्ताः । सर्वे - आर्तप्रमुखाश्चत्वारः । उदाराः - ममवदान्या एव । ये मत्सकाशाद्यत्किंचिदपि गृह्णन्ति - तेहि मम सर्वस्वदायिन इति भावः । ज्ञानी तु । मे - मम । आत्मैव - धारक एव । तदायत्तधारणोऽहमित्यर्थः । इति । मे । मतं - मतिः । एवम्मन्य इत्यर्थः । हि - यस्मात्कारणात् । सः - ज्ञानी । युक्तात्मा - युक्तः - मदेकायत्तस्थितिः, आत्मा - स्वरूपं, यस्य स तथोक्तः । अतएव । मामेव । अनुत्तमां - नविद्यते उत्तमा गतिर्यस्यास्तां, परमामित्यर्थः । गतिं - प्राप्यं । आस्थितः - आश्रितः । अतस्सोपि ममात्मेतिभावः ॥ १८ ॥

बहूनां - भूयसां । जन्मनां - पुण्यजन्मनां । अन्ते - अवसाने । ज्ञानवान् - अहं वासुदेवशेषतैकरसस्तदायत्तस्वरूपस्थितिप्रवृत्तिकः, सचासंख्येयकल्याणगुणाकरतया सर्वस्मात्परः, इत्येवं रूपज्ञानसम्पन्नो भूत्वा । सर्वं - परमप्राप्यं प्रापकं अन्यदपि यन्मनीषितं तत्सर्वं च । वासुदेवः - वसुदेवकुलेऽवतीर्णः स्सर्वात्मको भगवानेव । इति । मां । प्रपद्यते - उपास्ते । सः । महात्मा - महामनाः । सुदुर्लभः - लोकेऽत्यन्त दुर्लभः ॥ १९ ॥

ज्ञानिनो दुर्लभत्वमेवोपपादयति (कामैरिति) सर्वे लौकिकाः पुरुषाः । स्वया - स्वकीयया । प्रकृत्या - वासनया । नियताः - नित्यमन्विताः । तै

---

**पूर्वोक्त चारों प्रकार के उपासक भक्त उदार, वदान्य एवं दानी अर्थात् मुझ से थोड़ा-सा ग्रहण कर मुझे सर्वस्व दान कर देने वाले भक्तों में ज्ञानी तो मेरी आत्मा ही है अर्थात् वह तो मेरा धारक ही है यह मैं मानता हूँ क्योंकि उस भक्त का मन केवल मुझ में युक्त रहता है, मेरी चिन्ता में डूबा रहने के कारण मुझे हीं परमगति मानकर आश्रय किये रहता है ॥ १८ ॥**

**बहुत से पुण्यजन्मों के उपरान्त पुरुष मद्विषयक ज्ञानवान् होकर, भगवान् वासुदेव ही मेरे सर्वस्व हैं, अर्थात् परमप्राप्य एवं प्रापक हैं एवं मेरी स्थिति और प्रवृत्ति उन्हीं के आधीन है यह जानकर मेरे शरणागत हो मेरी उपासना करता है ऐसा ज्ञानी महात्मा अत्यन्त दुर्लभ है ॥ १९ ॥**





**कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।**
**तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥२०॥**
**यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।**
**तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥२१॥**

---

स्तैः - स्ववासनानुगुणैः । कामैः - काम्यमानै विषयैरेव । हृतं - अपहृतं प्रतिबद्धं, ज्ञानं - मत्स्वरूपविषयं, येषान्ते तथोक्तास्सन्तः । अन्यदेवताः - मद्व्यतिरिक्ताः केवलेन्द्रादि देवताः । तं तं नियमं - तत्तद्देवताविशेषमात्रप्रीणनासाधारणं नियमं । आस्थाय - आश्रित्य । प्रपद्यन्ते - तत्तत्कामसिद्ध्यर्थमाराधयन्ति ॥ २० ॥

यो यः - पुरुषः । सर्वा देवता मदीया स्तनव इत्यजानन्नपीत्यर्थः । यां यां तनुं - इन्द्रादिरूपां मदीयां तनुं । भक्तः - भक्तियुक्तस्सन् । श्रद्धया आस्तिक्यबुद्ध्या । अर्चितुं - आराधयितुं । इच्छति । तस्य तस्य अजानतोपि पुरुषस्य । अहं - मत्तनुविषयाह्येषामियं श्रद्धेति जानन्नहं । तामेव - तत्तनुविषयामेव । श्रद्धां । अचलां - निर्विघ्नां । विदधामि - करोमि ॥ २१ ॥

सः—पुरुषः । तया - निर्विघ्नीकृतया श्रद्धया । युक्तस्सन् । तस्य मत्तनुभूतस्येन्द्रादेः । आराधनं - अर्चनंप्रति । ईहते - चेष्टते । अनुतिष्ठतीत्यर्थः । ततः - मत्तनुभूतेन्द्रादि देवताराधनात् । मयैव - मत्तनुभूतेन्द्रादि

---

**सभी सांसारिक लोग अपनी - अपनी प्रकृति या प्राचीन वासना के द्वारा ही नियन्त्रित या परिचालित रहते हैं । उनके वह काम्य विषय ही उनके यथार्थ ज्ञान को ढंके रहते हैं । वे अपनी कामनाओं की सिद्धि के लिए मुझ से अतिरिक्त उन-उन कामनाओं के अनुसार फल देने में समर्थ अन्य देवताओं का आश्रय ग्रहण कर उनको प्रसन्न करने के लिए उनके अनुरूप नियमों का पालन कर उनकी ही आराधना करते हैं ॥ २० ॥**

**सम्पूर्ण देवता मेरे ही देह हैं, इस बात को न जानकर अपनी कामना के वशीभूत होकर जो अज्ञानी पुरुष इन्द्र आदि को मेरा शरीर या मूर्ति मानकर भक्ति श्रद्धा से आराधना करता है, उनकी उन देवों के प्रति जो श्रद्धा है उसको मैं निश्चल या निर्विघ्न कर देता हूँ ॥ २१ ॥**

स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान् मयैव विहितान् हि तान् ॥२२॥
अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥२३॥

---

देवताराधनमपि वस्तुतो मदाराधनमेवेति मन्वानेन तत्तदन्तर्यामिणा मयैव । विहितान् विताणान् । तान् - स्वाभिलषितान् । कामान् । लभते - प्राप्नोति । हेति प्रसिद्धौ, अयमर्थश्शास्त्रेषु प्रसिद्ध इत्यर्थः ॥ २२ द

किन्तु - तेषां । अल्पमेधसां - अल्पबुद्धीनां; इन्द्रादिमात्रयाजिनामित्यर्थः । तत् - आराधनजनितं फलं । अन्तवत् नाशवत् । भवति । कुतइत्यत्राह ( देवानिति ) देवान् इन्द्रादीन्, यजन्ति - पूजयन्तीति देवयजः - ते । देवान् यान्ति - देवतासायुज्यं प्राप्नुवन्ति । इन्द्रादिभोगाः खलुपरिमितकालवर्तिनः, अतस्तत्सायुज्यं प्राप्ता स्तैस्सह प्रच्यवन्त इतिभावः । मद्भक्ताअपि । मां । यान्ति - प्राप्नुवन्ति । तेषां कर्मणा म्मदाराधनरूपतां ज्ञात्वाऽल्पास्थिरफलसंगत्यागपूर्वकं मत्प्रीणनैकप्रयोजनकतयाऽनुष्ठानादिति भावः ॥ २३ ॥

इतरे सर्वसमाश्रयणीयत्वाय मम मनुष्यादिष्ववतारमप्यकिञ्चित्करं कुर्वन्तीत्याह ( अव्यक्तमिति ) अबुद्धयः - मद्विषयबुद्धिशून्याः । अव्ययं - सततैकरूपं । अनुत्तमं - सर्वस्मादुत्कृष्टं । परम् - अप्राकृतं । मम ।

---

जब अन्य देवोपासक मेरे द्वारा निर्विघ्न कर देने पर श्रद्धायुक्त हो मेरे शरीर रूप अन्य देवों की आराधना करने लगता है तब उस आराधना से उस देवता से अपनी अभिलषित कामना उसके शरीरी या अन्तर्यामी मेरे द्वारा ही पूर्ण की जाती है यह सुनिश्चित है । अर्थात् मैं ही अन्तर्यामी रूप से उसकी कामना के अनुसार फल प्रदान करता हूँ ॥ २२ ॥

किन्तु देवतान्तर की उपासना का फल क्षणभंगुर होता है, इसे बताते हैं ।

अन्य देवों को भजने वाले अल्पबुद्धि लोगों को उनकी उस आराधना से उन उन देवों का सायुज्य प्राप्त होता है जो कि नाशवान् एवं क्षणभंगुर होता है किन्तु मुझको भजने वाला पुरुष तो मुझे ही प्राप्त होता है अर्थात् मेरा सायुज्य रूप अक्षय-फल प्राप्त करता है ॥ २३ ॥





अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥२४॥
नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥२५॥

---

भावम् - स्वभावम् । अजानन्तस्सन्तः । मां । अव्यक्तं - इतः पूर्वमनभिव्यक्तं । व्यक्तिमापन्नं - इदानीं कर्मविशेषाज्जन्मविशेषं प्राप्याभिव्यक्तिमापन्नं मन्यन्ते - अवबुध्यन्ते । अतोमां न कर्मभि राराधयन्तीति भावः ॥ २४ ॥

कुतएवं न प्रकाशस इत्यत आह ( नाहमिति ) योगमायासमावृतः योगः - देवमनुष्यादि समानसंस्थान शरीरस्य योगः, स एवमाया, तया, समावृतः - आच्छादितस्वरूपः । अहं । सर्वस्य - जनस्य । न प्रकाशः - स्फुटो न भवामि । अतः । मूढः - अज्ञः । अयं । लोकः - जनः । अजं - उत्पत्ति रहितं । अव्ययं - नाशरहितं च । मां । नाभिजानाति - नवेत्ति ॥ २५ ॥

हे अर्जुन ! समतीतानि - अतिक्रान्तानि । वर्तमानानि - इदानीं विद्यमानानि । भविष्याणि - अनागतानिच । सर्वाणि । भूतानि । अहं ।

---

श्रीकृष्ण की आराधना का फल अक्षय है फिर भी इस ओर लोग क्यों नहीं लगते इसका कारण बताते हैं—बुद्धिहीन पुरुष मुझ परमात्मा के सतत् एकरूप, अव्यय अत्यन्त उत्कृष्ट एवं अप्राकृत दिव्य स्वभाव को नहीं जान पाते । वे ऐसा मानते हैं कि मैं पहिले अभिव्यक्त या प्रकट नहीं था, अब आज कर्माधीन जन्म लेकर प्रकट हो प्रत्यक्ष हुआ हूँ । अर्थात् जो मेरे अवतार तत्व को नहीं जानते वे मेरा भजन नहीं करते हैं ॥ २४ ॥

उसका भी कारण बताते हैं —

देव मनुष्यादि विविध शरीर संयोग रूप योगमाया द्वारा मेरा स्वरूप आच्छादित रहता है इसलिए सबके समक्ष मेरा यथार्थ रूप परिस्फुट नहीं होता । अतएव अज्ञानी लोग मनुष्य के समान शरीर धारणकर वसुदेवजी के पुत्ररूप में अवत्तीर्ण मुझे उत्पत्ति-विनाश से रहित सर्वदा एकरूप अव्यय पुरुष नहीं जान पाते हैं ॥२५॥

वेदाहं समतीतानि वर्तमानानि चार्जुन ।
भविष्याणि च भूतानि मां तु वेद न कश्चन ॥२६॥
इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत ।
सर्वभूतानि सम्मोहं सर्गे यान्ति परंतप ॥२७॥
येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥२८॥

---

वेद - जानामि । मान्तु । कश्चन - कालत्रयवर्तिषु भूतेषु कश्चिदपि । न वेद - सर्वस्मात्परम्सर्वसमाश्रयणीयत्वायाजहत्स्वभाव एवावतीर्ण इति न जानाति । अतो ज्ञानी दुर्लभ इति भावः ॥ २६ ॥

हे परन्तप ! हे भारत ! सर्वभूतानि । इच्छाद्वेषसमुत्थेन - इच्छाद्वेषौ - पूर्वस्मन् जन्मन्यनुकूलप्रतिकूलरूपद्वन्द्वविषयतया अभ्यस्तौ रागद्वेषौ, ताभ्यां, समुत्थेन - समुत्पन्नेन । द्वन्द्वमोहेन - मुह्यत्यनेनेति मोहः - मोहहेतुः, तेन - शीतोष्णादिद्वन्द्वरूपेण मोहन । सर्गे - जन्मकालएव । सम्मोहं - पूर्वजन्मानुभूत सजातीयद्वन्द्वविषयरागद्वेष स्वभावरूपं । यान्ति - पूर्ववासनावशादिति भावः । ज्ञानी तु मत्संश्लेषविश्लेषरूपसुखदुःखविषयरागद्वेषवानिति तात्पर्यम् ॥ २७ ॥

कथं तर्हि केचन त्वामेव भजन्तो दृश्यन्त इत्यत्राह (येषामिति) पुण्यकर्मणां - अनेकजन्मार्जितोत्कृष्टपुण्यवतां । येषान्तु । जनानां । पापं,

---

( यहां विचित्र कार्य करने की शक्ति ही माया है ) यथार्थ ज्ञानी पुरुष दुर्लभ है—हे अर्जुन ! जो जीव बीते हुए समय में थे, वर्तमान में हैं एवं भविष्य काल में उत्पन्न होंगे, इन ऐसे सब जीवों को मैं जानता हूँ । किन्तु इन सम्पूर्ण जीवों में से कोई भी मेरा यथार्थ रूप नहीं जानता है अर्थात् परमेश्वर में अपना निज स्वभाव न त्यागकर सब लोगों के द्वारा समाश्रयण करने के योग्य, मनुष्य के सजातीय शरीर को धारण कर अवतीर्ण हुआ हूं, इसे नहीं जान पाते ॥ २६ ॥

कोई भी जीव मुझे क्यों नहीं जान पाता, इसे बताते हैं—हे अर्जुन ! समस्त जीव पूर्व जन्मों में अभ्यस्त राग एवं द्वेष से होने वाले मोह के अनुसार इस जन्म में भी जन्म से ही राग द्वेष से युक्त स्वभाव वाले होते हैं । यह स्वभाव ही उनकी उस आत्मवस्तु को जन्म से ही अच्छी तरह से आच्छन्न (मोहित) करके रखता है ॥२७॥





जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥२९॥

---

गुणमयद्वन्द्वेच्छाद्वेषहेतुभूतं मदौन्मुख्यविरोधि चानादिकालप्रवृत्तपातकं । अन्तगतं अन्तं - नाशं, गतम् - प्राप्तम् । ते । जनाः । द्वन्द्वमोहनिर्मुक्ताः - मत्प्रपदनेन गुणमयद्वन्द्वरूपान्मोहाद्विनिर्मुक्ताः । दृढव्रताः - दृढसंकल्पास्सन्तः । मामेव । भजन्ते - सुकृततारतम्यद्यधिकारमुपासत इत्यर्थः ॥ २८ ॥

अथ त्रयाणामपि भगवन्तं भजमानानां ज्ञातव्यविशेषानुपादेयांश्च प्रस्तौति—"जरामरणे" त्यादिश्लवद्वयेन । ये - जनाः । जरा मरणमोक्षाय - जरामरणयोः प्रकृतिसम्बन्धनिमित्तकयोः, मोक्षः - स वासननिवृत्तिः, तस्मै - तत्पूर्वकात्मस्वरूपायेत्यर्थः । मां । आश्रित्य - प्रपद्य । यतन्ति - यत्नं कुर्वन्ति । ते । तद्ब्रह्म । कृत्स्नमध्यात्मं । अखिलं कर्म च । विदुः - जानीयुः । एतत्त्रयमपि केवलात्मानुभवकामस्यावश्यं ज्ञातव्यमिति भावः ॥ २९ ॥

एवमात्मप्राप्तिकामस्य ज्ञातव्यमुक्त्वाऽथैश्वर्यार्थिनो ज्ञातव्यं त्रयाणामप्युपादेयं चाह (साधिभूताधिदैवमिति) येपि - ऐश्वर्यार्थिनः । साधिभूताधिदैवं - अधिभूताधिदैवाभ्यां सहितम् । मां । विदुः, ऐश्वर्यार्थिनामेवम्भूतोऽहं ज्ञातव्य इत्यर्थः । तथा । साधियज्ञं - अधियज्ञ सहितं । मां । विदुः । इदमैश्वर्यार्थिनमुद्दिश्य विधीयमानमप्यर्थस्वाभाव्यात्त्रयाणामपिसाधारणं । त्रयाणामविहितनित्यनैमित्तिकरूपमहायज्ञाद्यनुष्ठानमवर्ज-

---

किन्तु जिन लोगों के अनेक जन्मार्जित पुण्यों के द्वारा सम्पूर्ण पाप नष्ट हो गये हैं वे प्राकृत विषयों में रागद्वेष रूप द्वन्द्वों के प्रति मोह पाश को काटकर दृढ़ संकल्प युक्त होकर मेरा ही भजन करता है ॥ २८ ॥

प्रस्तुत श्लोक में आत्मदर्शनाभिलाषी के लिए अवश्य जानने योग्य तीन बातों की सूचना करते हैं । आगे के अध्याय में वह पूरी होगी ।

जो मेरा आश्रयण लेकर जरा मरण से मुक्त होने के लिए अर्थात् विशुद्ध आत्म स्वरूप दर्शन के लिए प्रयत्न करते हैं वह उस ब्रह्म को अर्थात् प्रकृति के संश्लेष से विमुक्त आत्मस्वरूप को सम्पूर्ण अध्यात्म वस्तु को एव समस्त कर्मों को जान लेता है ॥ २९ ॥

**साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।**
**प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥३०॥**

॥ इति श्रीमद्भगवद्गीतायां सप्तमोऽध्यायः ॥ ७ ॥

---

नीयं । तेच । प्रयाणकाले - चरमप्रयाणसमयेऽपि । युक्तचेतसः - मदासक्तमनसस्सन्तः । मां । विदुः - स्वप्राप्यानुगुणं जानीयुरित्यर्थः । ते चेति चकारात् - जरामरणमोक्षाय यतमाना अपि प्रयाणकाले मां विदुरिति समुच्चीयते । अनेनार्थस्वभावपर्यालोचनया ज्ञानिनोपि साधियज्ञं मां विदुः - प्रयाणकाले मां स्वप्राप्यानुगुणं विदुरित्युक्तं भवति ॥ ३० ॥

इति श्रीगीताभाष्यार्थसंग्रहतात्पर्यदीपे श्रीवरवरमुनिविरचितायां
बालबोधिन्याख्यायां गीतार्थसंग्रह
दीपिकायां

**सप्तमोऽध्यायः ॥ ७ ॥**

[illegible]
[illegible]


---

**इस श्लोक से ऐश्वर्य चाहने वाले को ज्ञातव्य तीन बातें बताते हैं—**

ऐश्वर्य प्राप्त करने के लिए जो व्यक्ति मुझे अधिभूत, अधिदैव एवं अधियज्ञ के सहित जानता है, वह व्यक्ति मरणकाल में भी मुझ में चित्त स्थिर कर मुझे ही जान पाता है अर्थात् वह मरते समय भी अपनी अभीष्ट के अनुरूप गुणविशिष्ट रूप में मुझे ही जानता है ॥ ३० ॥

॥ ज्ञान-विज्ञान-योग नामक सप्तम अध्याय समाप्त ॥



श्रीरस्तु

# अथ अष्टमोऽध्यायः

★

अर्जुन उवाच—

**किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।**
**अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥ १ ॥**

---

अष्टमेऽध्याये पूर्वाध्यायप्रस्तुता स्त्रयाणां ज्ञातव्योपादेयभेदा विविच्यन्ते । हे पुरुषोत्तम ! जरामरणमोक्षाय भवन्तं प्रपद्य यतमानानां ज्ञातव्यतयोक्तं, तद्ब्रह्म । किम् । अध्यात्मं च । किम् । कर्म च । किम् । ऐश्वर्यार्थिनां ज्ञातव्यतयोक्तं, अधिभूतं - किं प्रोक्तम् । अधिदैवं च । किमुच्यते ॥ १ ॥

---

## अष्टमोऽध्याय

अक्षरपरमब्रह्मयोग ( सम्पूर्ण अध्याय का संग्रह )

ऐश्वर्याक्षर याथात्म्य भगवच्छरणार्थिनाम् ।
वेद्योपादेय भावानामष्टमे भेद उच्यते ॥

( गीतार्थ संग्रह—१२ )

प्रकृति के परिणाम रूप सम्पूर्ण अचेतन भोग्य वस्तुयें, विशुद्ध आत्मवस्तु और इन दोनोंके अन्तरात्मा परमात्माका स्वरूप भगवत् शरणार्थी एवं ऐश्वर्यार्थी और कैवल्यार्थी इन तीनों प्रकार के भजनार्थियों को अपना अपना ज्ञातव्य एवं उपादेय विषय एवं इन तीन प्रकार के अधिकारियों का विभिन्न वैशिष्टय ये तीन विषय इस अष्टम अध्याय में उपदिष्ट हुए हैं ।

अर्जुन बोले—

हे पुरुषोत्तम ! जरामरण से निवृत्त होने वाले आत्मदर्शनाभिलाषी तुम्हारे शरणागत भक्तों को जानने योग्य रूप से कहा गया वह ब्रह्म या आत्मा क्या वस्तु है ? अध्यात्म किसे कहते हैं, कर्म भी क्या है ? ऐश्वर्याभिलाषी उपासक को ज्ञातव्य अधिभूत एवं अधिदैव ही किसे कहा जाता है ? ॥ १ ॥

अधियज्ञः कथं कोऽत्र देहेऽस्मिन् मधुसूदन ।
प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥ २ ॥

श्रीभगवानुवाच—
अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥

---

हे मधुसूदन ! अत्र - अस्मिन् शास्त्रे - यो यो यां यां तनुमिति त्वयोक्ते । अस्मिन् - परिदृश्यमाने । देहे - इन्द्रादिरूपे । त्रयाणामपि ज्ञातव्यतयोक्तः - अधियज्ञः । कः - किं रूपः । कथं - किं प्रकारः । प्रयाणकाले - चरमप्रयाणसमये च । नियतात्मभिः - नियतमानसैः । त्रिभिः । कथं - केन प्रकारेण । ज्ञेयोऽसि - ज्ञातव्योऽसि ॥ २ ॥

परमम् - प्रकृतेः परमम् । न क्षरतीत्यक्षरम् - प्रत्यगात्मस्वरूपम् । ब्रह्म - तद्ब्रह्मेतिपूर्वं निर्दिष्टमित्यर्थः । स्वभावः - प्रकृतितद्वासनादिकम् । अध्यात्मं - कर्मवशादात्मनि सम्बध्यमानतयाऽध्यात्मशब्दनिर्दिष्टमित्यर्थः । भूतभावोद्भवकरः - भूतभावः - देवमनुष्यादिभावः, तस्य - उद्भवकरः - उत्पत्तिहेतुः । विसर्गः - 'पंचम्यामाहुतावापः पुरुषवचसो भवन्ती" ति

---

हे मधुसूदन ! इस गीता में इससे पूर्व आपके द्वारा उपदिष्ट यह सम्पूर्ण परिदृश्यमान आपका देहरूप हैं, इस शरीर में अधियज्ञ कौन है ? और किस प्रकार से है ? प्रयाण के समय में पूर्वोक्त संयतचित्त आत्मदर्शनाभिलाषी, आर्त और अर्थार्थी इन तीनों उपासकों के द्वारा आप किस प्रकार जाने जाते हैं। इस विषय को मैं अच्छी प्रकार जानना हूँ ॥ २ ॥

श्रीभगवान् बोले —

प्रकृति से परे अथवा श्रेष्ठवस्तु तथा प्रकृति के संस्पर्श से रहित एवं अक्षर नाश रहित आत्मवस्तु ही 'ब्रह्म' शब्द से कहा जाता है। पहिले प्राचीन कर्मों के अनुसार प्राप्त जीव की अपनी त्रिगुणमयी प्रकृति एवं उस प्रकृति के अनुसार उसकी सूक्ष्मरुचि, वासना स्वभाव जो कि जीवात्मा के साथ संश्लिष्ट रहती है उसी स्वभाव को अध्यात्म कहा जाता है। जीव की देव मनुष्यादि विभिन्न रूप से देह प्राप्ति की हेतुभूत स्त्री पुरुष के सम्बन्ध से होने वाली विविध सृष्टि को कर्म कहा जाता है अतएव मुमुक्षु जीव की उपादेय रूप से ब्रह्म ज्ञातव्य एवं परिहरणीय रूप से अध्यात्म एवं कर्म ज्ञातव्य हैं ॥ ३ ॥





अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।
अधियज्ञोऽहमेवात्र देहे देहभृताम्बर ॥ ४ ॥

---

श्रुत्युक्तरीत्या योषाग्नौ रेतोरूपाया आहुतेस्त्यागः । कर्मसंज्ञितः - "कर्मचाखिल" मिति पूर्वं कर्मशब्दनिर्दिष्ट - इत्यर्थः । एतत् त्रितयमपि मुमुक्षोः - प्राप्यतया परिहरणीयतया च ज्ञातव्यमित्यर्थः ॥ ३ ॥

क्षरः—क्षरणस्वभावः । भावः - विलक्षणमाश्रयशब्दस्पर्शरूप रसगन्धरूपः पदार्थः । अधिभूतं - वियदादिभूतसम्बन्धितयाऽधिभूत शब्दनिर्दिष्टः । ऐश्वर्यार्थिनां प्राप्यतयाऽवश्यं ज्ञातव्य इति भावः । पुरुषः - भोक्तृत्वावस्थापन्नोजीवः । अधिदैवतं - इन्द्रप्रजापतिप्रभृति दैवतोपरिवर्तमानतयाऽधिदैवतशब्दनिर्दिष्टः । इन्द्रादिदैवतो परिवर्तमानत्वं चास्य तद्भोग्यभूतादपि विलक्षणस्य शब्दादे र्भोक्तृत्वादिति बोध्यम् । भोक्तृत्वावस्था चैश्वर्यार्थिनां प्राप्यतयाऽनुसन्धेयेति भावः । देहभृतां - देहधारिणाम्मध्ये । पर - श्रेष्ठ हे अर्जुन ! अत्र - अस्मिन्निन्द्रादिरूपे । देहे - मच्छरीरे । विद्यमानः । अहमेव । अधियज्ञः - यज्ञैराराध्यतयावर्तमानत्वादधियज्ञशब्दनिर्दिष्टः । "यज्ञोवै विष्णुरितिश्रुतेः ।" अत्र अहमेवाधियज्ञ इत्यनेन यज्ञस्वरूप प्रश्नोत्तरमुक्तम् । अत्र देहेऽहमेवेत्यनेन - कथमधियज्ञ इति प्रकारप्रश्नस्याप्युत्तरमुक्तम्भवति । भगवतोहि "स आत्मा । अङ्गान्यन्यादेवताः" "तदेवाग्नि स्तद्वायुः" इत्यादि श्रुत्युक्तरीत्या—"अहं हि सर्वज्ञानां भोक्ता च प्रभुरेव च" इत्यादि वक्ष्यमाणरीत्याचाग्नि तत्तत्कर्मदेवतान्तर्यामितयाऽवस्थाय महायज्ञादि समस्तकर्मणामाराध्यतया तत्फलप्रदतयाचाधि-

---

हे देहधारियों में श्रेष्ठ अर्जुन ! आकाशादि पंचभूतों के नाशशीलभाव और उनके रूप रसादि गुण इन पाञ्चभौतिक गुण समूह को अधिभूत अर्थात् ( भूत सम्बन्धी ) कहा जाता है। ऐश्वर्यार्थी को इन्हें अवश्य जानना चाहिए। साधारण रूप में इन्द्रादि देवगण यज्ञ के भोक्ता कहे जाते हैं, भोक्तृत्व अवस्था सम्पन्न देवता को पुरुष कहा जाता है उसी को अधिदैव (देवता सम्बन्धी) कहा जाता है। ये इन्द्रादि देवगण ऐश्वर्यार्थी और यज्ञकर्ता जीवों को अवश्य ज्ञातव्य हैं। ये सब देव मेरे शरीर अर्थात् अङ्ग हैं। इन देवों में मैं ही अधियज्ञ हूँ। अर्थात् यज्ञ सम्बन्धी श्रेष्ठ पुरुष यज्ञ श्वर मैं ही हूँ। भगवत् प्राप्ति की, आत्म प्राप्ति की एवं ऐश्वर्य प्राप्ति की कामना करने वाले इन तीनों अधिकारियों को नित्यनैमित्तिक कर्म करते समय इस अधियज्ञ पुरुष का अवश्य ही अनुसन्धान करना चाहिये ॥ ४ ॥

अन्तकाले च मामेव स्मरन् मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५ ॥
यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तन्तमेवैति कौन्तेय सदा तद्भावितः ॥ ६ ॥

यज्ञत्व मित्यनुसन्धेयम् । त्रयाणामप्यधिकारिणां महा यज्ञादि नित्यनैमित्ति-कादि कर्मानुष्ठानवेलायामिदमनुसन्धेयमिति भावः ॥ ४ ॥

प्रयाणकाले च कथमित्यस्योत्तरमाह (अन्तकालेचेति) यः - अधि-कारी । अन्तकाले - शरीरावसानसमये । मां - सर्वशरीरितया सर्वात्म-भूतम्माम् । स्मरन्नुसन्धेव । कलेवरं - शरीरम् । मुक्त्वा । प्रयाति - गच्छति । सः । मद्भावं - मत्स्वभावं । याति - प्राप्नोति । अत्र - अस्मि-न्नंशे । संशयः । नास्ति । अन्तकाले यदाकारम्मामनुसन्धत्ते - तदाकारो-भवति, मृगरूपम्मामनुसन्धाय मृगाकारतया सम्भूता आदिभरतादय एवात्र निदर्शनमितिभावः । अतस्त्रयाणामप्यधिकारिणां शरीरावसानसमये स्व स्वप्राप्याकारमदनुसन्धानमवश्यं कर्तव्यमिति भावः ॥ ५ ॥

स्मर्तु स्स्मृतिविषयसजातीयाकारापादनमन्तिमस्मृते स्स्वभाव इत्यमुमर्थं सुस्पष्टमाह (यं यमिति) हे कौन्तेय ! अन्ते - अन्तकाले । यं-यंवापि - देवतिर्यङ्मनुष्यस्थावरेषु मध्ये यंयमपि वा । भावं - स्वभावं । स्मरन् - अनुसन्दधानः । कलेवरं । त्यजति - मुंचति । तन्तमेव भावं । एति - मरणानन्तरमेव प्राप्नोति । अन्तकाले भावविशेषस्मरणे हेतुमाह (सदेति) सदा - निरन्तरं - जीवनकाले निरन्तरं । तस्य - अन्तकाले-स्मरिष्यमाणस्य भावस्य, भावः - भावना - अनुचिन्तनं, तेनभावितः -

जो पुरुष मरते समय सर्वात्मभूत मुझ श्रीकृष्ण का स्मरण करके अपने शरीर का त्याग करता है वह मेरे स्वभाव को प्राप्त होता है, इसमें कोई सन्देह नहीं है । ॥ ५ ॥

हे कुन्ती पुत्र अर्जुन ! जो पुरुष अपने जीवन काल में देव मनुष्य तिर्यक् अथवा स्थावर जिस किसी वस्तु की भावना निरन्तर करने का अभ्यासी हो जाता है एवं उस अभ्यास से मरते समय भी उसी भाव का अनुसन्धान करते करते देह त्याग करता है वह पुरुष मरने के बाद उसी भावापन्न वही हो जाता है (जैसे भरत को हिरण का जन्म लेना पड़ा) ॥ ६ ॥





तस्मात्सर्वेषु कालेषु मामनुस्मर युद्ध्य च ।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ॥ ७ ॥
अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८ ॥

वासितान्तःकरण इत्यर्थः । जीवनकालाभ्यासवासनैवान्तिमस्मृति हेतुः, न तु तदानीं परवशस्य स्मरणोन्मुख्यं सम्भवतीति भावः ॥ ६ ॥

तस्मात् - अन्तिमस्मृतेः पूर्वकालाभ्यस्त सजातीय स्वभावविषयत्व नियमाद्धेतोः । सर्वेषुकालेषु - आप्रयाणमहरहः । मां - परमप्राप्यभूतं । अनुस्मर - अनुचिन्तय । युध्य च - वर्णाश्रमोचितं युद्धादि कर्मच कुरु । तस्य मनोनैर्मल्यापादनद्वाराऽहरहरनुस्मृतिकरत्वादिति भावः ! ततः किमित्य-त्राह (मयीति) एवंसति । मयि - विषये । अर्पितमनोबुद्धिः - अर्पिते - निवेशिते, मनोबुद्धी - मनोध्यवसायौ, येन स तथोक्तः । अन्तकाले मां स्मरन्नित्यर्थः । मामेव । एष्यसि - प्राप्स्यसि । असंशयः - अत्र संशयो-नास्ति ॥ ७ ॥

एवं सामान्यत स्स्वप्राप्यावाप्तिरन्तिमस्मृत्यधीनेत्युक्तं । अथ त्रयाणामधिकारिणा मुपासनप्रकारभेदं वक्तु मारभमाणः प्रथममैश्वर्यार्थिना-मुपासनप्रकारं यथोपासनमन्तिमस्मृतिंचाह (अभ्यासेति) हे पार्थ ! अभ्या-सयोगयुक्तेन - अभ्यासः - प्रत्यहं नित्यनैमित्तिकाविरुद्धेषु कालेषु मनसोपास्य-

आजीवन अभ्यस्त विषय की ही अन्त में स्मृति होती है, इसलिए यावज्जीवन मुझ से सम्बन्धित विषयों का ही बार-बार स्मरण करो और अपने वर्णाश्रमोचित कर्म भी करते रहो । इस प्रकार के अभ्यास से तेरा मन और बुद्धि मुझ में ही सर्वदा लगी रहेगी एवं मरणकाल में मेरे विषय की चिन्ता करते-करते देह त्याग करने पर मुझे ही प्राप्त होंगे । इसमें कोई सन्देह नहीं है ॥ ७ ॥

ऐश्वर्यार्थी की उपासना और तदनुसार अन्तिम स्मृति को बताते हैं । जो पुरुष जीवन पर्यन्त अपने अभीष्ट के अनुसार मेरे विषय की चिन्ता के अभ्यास के सहारे एवं योगानुष्ठान के बल से अन्य सम्पूर्ण विषयों से विमुख होकर अन्तकाल में भी अप्राकृत सर्वश्रेष्ठ ऐश्वर्य प्रदाता के रूप में मुझ परमेश्वर का स्मरण करता-करता देह त्याग करता है, ऐसा अर्थार्थी व्यक्ति अपनी अभिलाषा के अनुरूप मुझ को ही प्राप्त होता है ॥ ८ ॥

**कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः ।**
**सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ॥९॥**
**प्रयाणकाले मनसाऽचलेन भक्त्या युक्तो योगबलेन चैव ।**
**भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम्१०**

---

वस्तुसंशीलनं, योगस्तु - अहरहर्योगकालेऽनुष्ठीयमानं - शुचौदेशे प्रतिष्ठाप्ये त्याद्युक्तलक्षणमुपासनं, ताभ्यां युक्तेन - सहितेन । अतएव - नान्यगामिना- अन्यविषयविमुखेन । चेतसा - मनसा । दिव्यं - अप्राकृतं । परमं - सर्व- स्मात्परं । पुरुषं - मां । अनुचिन्तयन् - अनुस्मरन् । अन्तकाल इतिशेषः । याति स्वाभिलषितैश्वर्यविशिष्टं मामेव प्राप्नोतीत्यर्थः ॥ ८ ॥

ऐश्वर्यार्थिनामुपास्यस्य परस्य ब्रह्मणः स्वरूपं तेषामन्तिमस्मृतिप्रका- रं चाह 'कवि' मित्यादिश्लोकद्वयेन । यः । भक्त्या - निरतिशयप्रेमरूपया । योगबलेन च । युक्तस्सन् । प्रयाणकाले । भ्रुवोः । मध्ये । प्राणम् । सम्यक् । आवेश्य - संस्थाप्य । तत्र - भ्रूमध्ये । कविं - सर्वज्ञम् । पुराणम् पुरातनम् । अनुशासितारं - सर्वस्यनियन्तारम् । अणोः - सूक्ष्माज्जीवात् । अणीयांसं - अतिसूक्ष्मम् । सर्वस्य - जगतः । धातारं - स्रष्टारम् । अचि- न्त्यरूपं - सकलेतरविसजातीय तया चिन्तयितुमशक्यस्वरूपम् । तमसः - प्रकृतेः । परस्तात् - परम्, अप्राकृतम् । आदित्यवर्णं - आदित्यस्यवर्ण इववर्णो यस्य तम्, स्वासाधारणदिव्यविग्रहमित्यर्थः । दिव्यम् । परम् । पुरुषम् । अनुस्मरेत् । सः । तमेव - पुरुषम् । उपैति - तत्समानैश्वर्यो भवतीत्यर्थः ॥ ९ ॥ १० ॥

अथ कैवल्यार्थिनां स्मरणप्रकारमाह (यदक्षरमिति) वेदविदः - वेदा- र्थवेदिनः । यत् । अक्षरम् । वदन्ति - अस्थूलत्वानणुत्वादिगुणकं वदन्ति ।

---

जो पुरुष मेरे प्रति भक्ति एवं योगयुक्त होकर अन्तिम समय में अपनी भ्रू- युगल के बीच में प्राण को अच्छी प्रकार स्थापित कर सर्वज्ञ, पुराण पुरुषोत्तम, सर्व- नियन्ता सूक्ष्मयातिसूक्ष्म, सर्वस्रष्टा, अचिन्त्य स्वरूप, दिव्य ज्योतिर्मय, परमपुरुष मेरा एकाग्रचित्त से बार-बार चिन्तन करता है, वह मरने के बाद परमपुरुष का भाव प्राप्त हो, अर्थात् ब्रह्म के लोक में जाकर ब्रह्म के साथ समान ऐश्वर्य विशिष्ट होकर रहता है ॥९—१० ॥





**यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः ।**
**यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये॥११।**
**सर्वद्वाराणि संयम्य मनो हृदि निरुद्धच च ।**
**मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥१२॥**

---

वीतरागाः - विषयान्तरविरक्ताः । यतयः - यतनशीला मुनयः । यत् - अक्षरम् । विशन्ति - प्राप्नुवन्ति । यत् - अक्षरम् । इच्छन्तः - प्राप्तुमि- च्छन्तः । ब्रह्मचर्यं - ऊर्ध्वरेतस्कत्वरूपम् । चरन्ति - अनुतिष्ठन्ति । पद्यते- गम्यते - ज्ञायत इतिपदं - उपास्यमित्यर्थः । तत् - निखिलवेदान्तप्रसिद्धं । अक्षरं - न क्षरतीत्यक्षरं - निर्विकारं - मत्स्वरूपम् । ते - तुभ्यम् । संग्रहेण- संक्षेपेण । प्रवक्ष्ये - प्रवक्ष्यामि ॥ ११ ॥

सर्वद्वाराणि - सर्वाणि ज्ञानप्रसरद्वारभूतानि श्रोत्रादीन्द्रियाणि । संयम्य - स्वव्यापारेभ्यो निवर्त्य । मनः । हृदि - हृदयकमलनिविष्टे मय्य- क्षरे । निरुध्य - नियम्य । योगधारणां - योगरूपां धारणां, मय्येव निश्च- लां स्थितिम् । आस्थितः - आश्रितः । ब्रह्म - परब्रह्मणो मम वाचकम् । ओमित्येवंरूपम् । एकाक्षरं - मुख्यमक्षरम् । व्याहरन् - उच्चारयन् । मां - उच्चार्यमाणप्रणववाच्यम्माम् । अनुस्मरन् - अनुसन्दधानः । आत्मनः - स्वस्य । प्राणं - प्राणवायुम् । मूर्ध्नि - शिरसि । आधाय - मूर्धन्यसुषुम्ना- नाडीद्वारेणप्रवेश्य । देहं - शरीरम् - त्यजन् - यः । प्रयाति - अर्चिरादि- गत्या गच्छति । सः । परमां - पुनरावृत्तिरहिताम् । गतिं - प्राप्यं, प्रकृति- वियुक्तम्मत्समानाकारमात्मानमित्यर्थः । याति - गच्छति ॥ १२–१३ ॥

---

कैवल्यार्थियों का अन्तिम स्मरण प्रकार बताते हैं—वेदों के अर्थ जानने वाले पुरुष जिस वस्तु को अक्षर अर्थात् क्षरण स्वभाव से रहित अणु इत्यादि रूप से वर्णन करते हैं, विरक्त मुनिगण जिस अक्षर ब्रह्म को प्राप्त करते हैं, जिस वस्तु की प्राप्ति के लिए लोग ब्रह्मचर्य का अनुष्ठान करते हैं, उसे प्राप्त करने योग्य अक्षर परमात्म वस्तु के विषय में तुम्हें संक्षेप में बताऊँगा ॥ ११ ॥

जो साधक भोगों से अपनी इन्द्रियों को निवृत्त कर अपने हृदय कमल में अवस्थित अक्षर परमात्म वस्तु मुझ में मन को योग के द्वारा निश्चल रूप से स्थापित कर मुझे बताने वाले 'ॐ' इस एकाक्षरी प्रणव शब्द का उच्चारण पूर्वक उससे वाच्य मेरा अनुसन्धान करते-करते अपनी प्राण वायु को मस्तक स्थित सुषुम्णा में प्रवेश करके

**ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।**
**यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥१३॥**
**अनन्यचेताः सततं यो मां स्मरति नित्यशः ।**
**तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥१४॥**

---

अथ ज्ञानिनो भगवदुपासनप्रकारं प्राप्तिप्रकारं चाह ( अनन्येति ) नित्यशः - उद्योगकालप्रभृति । सततं - सर्वकालम् । न विद्यतेऽन्यस्मिन्-चेतो यस्य स तथोक्तः - अनन्यचेताः - अत्यर्थमतिप्रियत्वेनमत्स्मृतिसन्तति-विनाऽऽत्मानं धारयितुमशक्नुवन्नित्यर्थः । यः । माम् । स्मरति - निरति-शय स्वप्रियां स्मृतिं करोति । हे पार्थ ! नित्ययुक्तस्य - मया नित्ययोग-माकांक्षतः । तस्य । योगिनः - ज्ञानिनः । अहम् । सुलभः - सुखेन लब्धुं-शक्यः । तस्य हि मत्प्राप्त्यनुगुणोपासन तद्धि वृद्धि तत्परिपाक तद्विरोधि-निरसनादिकं ममैव भर इति भावः ॥ १४ ॥

अतः परमध्यायशेषेण ज्ञानिनः कैवल्यार्थिनश्चापुनरावृत्तिमैश्वर्यार्थिनः पुनरावृत्तिश्चाह । मां । उपेत्य - प्राप्य । पुनः - भूयोपि । दुःखालयं - दुःखानां - आध्यात्मिकादिरूपाणां, आलयं - एकास्पदं । अशाश्वतं-अस्थिरं । जन्म - देवमनुष्यादिः प्राकृतशरीरसंसर्गरूपं । नाप्नुवन्ति - न प्राप्नुवन्ति । नाप्नुवन्तीत्यनन्तरं - यतः - ते - इति द्वयमध्याहार्यं । यतः यस्मात्कारणात् । ते - मां प्राप्तवन्तः । महात्मानः - महान् - अभ्यर्हितः, आत्मा - मनः, येषांते तथोक्ताः; यथावस्थितमत्स्वरूपज्ञानाः - मदेकप्रियत्वेन मया विना क्षणमप्यात्मधारण मलभमाना मय्येवासक्तमनसो मदुपासनविनाशितसकलपूर्वोत्तराघा इत्यर्थः । परमां - निरतिशयाम् । संसिद्धिं-पुरुषार्थरूपंमाम् । गताः - प्राप्ताः । अतस्तेषामपुनरावृत्तिरुचितेतिभावः ।

---

देह त्यागते हैं वे अर्चिरादिमार्ग से प्रकृति विनिर्मुक्त विशुद्ध परमगति परमात्मतत्व को प्राप्त करते हैं ॥ १२-१३ ॥

हे अर्जुन ! ऐश्वर्य एवं देह लाभ की कामना परित्याग कर केवल मुझ परमात्मा में ही चित्त लगाकर जो भक्त प्रतिदिन लगातार मेरा ही स्मरण करता है एवं मेरा नित्य संयोग एवं मुझ में स्थिति के बिना जीवन धारण करने में असमर्थ है ऐसे ज्ञानी को मैं सहज ही प्राप्त हो जाता हूँ ॥ १४ ॥

मुझे प्राप्त होकर फिर दुबारा दुःखों का आलय, अनित्य जन्म प्राप्त नहीं





**मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।**
**नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥१५॥**
**आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।**
**मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते १६॥**
**सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ।**
**रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥१७॥**

---

अत्र - मामुपेत्य पुनर्जन्म नाप्नुवन्तीत्युक्त्याऽर्थादैश्वर्यार्थिनां पुनरावृत्ति रुक्ता भवतीति भावः ॥ १५ ॥

ऐश्वर्यंगतिं प्राप्तानां पुनरावृत्तौ भगवन्तं प्राप्तानामनावृत्तौ च हेतुमाह ( आब्रह्मेति ) हे अर्जुन ! आब्रह्मभुवनात् - चतुर्मुखलोकपर्यन्ताः । लोकाः - ब्रह्माण्डोदरवर्तिनः कर्माद्युपायैः प्राप्या भोगैश्वर्यालयास्सर्वे लोकाः । पुनरावर्तिनः - विनाशिनः । अतएवैश्वर्यंगतिं प्राप्तानां प्राप्यस्थानविनाशाद्विनाशित्वमवर्जनीयमितिभावः । हे कौन्तेय ! मां तु सर्वज्ञं सत्यसंकल्पं परमकारुणिकमाश्रितवात्सल्यैकजलधिं मां पुनः । उपेत्य - प्राप्य । पुनर्जन्म पुनरावृत्तिः । न विद्यते - नास्ति ॥ १६ ॥

ब्रह्मलोकपर्यन्तानां लोकानां तदन्तवर्तिनाञ्च भगवत्संकल्पकृतामुत्पत्तिविनाशकालव्यवस्था माह ( सहस्रेति ) अहोरात्रविदः - ब्रह्मादीनाम्मत्संकल्पकृताहोरात्ररूपकालव्यवस्थावेदिनः । ते - तथाप्रसिद्धाः । जनाः । ब्रह्मणः - चतुर्मुखस्य । अहः - दिनं । यत् । अस्ति । तत् सहस्रयुगपर्यन्तं-सहस्रयुगावसानं । विदुः - जानन्ति । ब्रह्मणः - रात्रिं । युगसहस्रान्तां - युगसहस्रपर्यन्ताम् । विदुः ॥ १७ ॥

---

होता है क्योंकि मेरे स्वरूप को जानने वाला ज्ञानी व्यक्ति परमपुरुषार्थ स्वरूप मुझको प्राप्त चुका होता है । १५ ॥

हे अर्जुन ! ब्रह्मलोक भी वहाँ के समस्त निवासियों के साथ ब्रह्मा की आयुकाल के अन्त में लय को प्राप्त हो जाता है किन्तु जो मुझे प्राप्त हो जाता है उसे फिर बार-बार जन्म ग्रहण नहीं करना पड़ता है । अर्थात् वे मुक्त जीव होकर मेरे साथ नित्यधाम वैकुण्ठ में वास करते हैं । ( कैवल्यार्थी जीवगण भी अप्राकृत केवल आत्म स्वरूप को प्राप्तकर ब्रह्मलोक से अतीत अप्राकृत लोक में वास करते हैं, इसलिए उनको भी पुनरावृत्ति नहीं होती है ॥ १६ ॥

अव्यक्ताद्व्यक्तय: सर्वा: प्रभवन्त्यहरागमे ।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥१८॥
भूतग्राम: स एवायं भूत्वा भूत्वा प्रलीयते ।
रात्र्यागमेऽवश: पार्थ प्रभवत्यहरागमे ॥१९॥

---

अहरागमे - ब्रह्मणो दिनागमे सति । सर्वा: - समस्ता: । व्यक्तय: - व्यज्यन्ते - अभिव्यज्यन्त इति त्रैलोक्यवर्तिनो देहेन्द्रियभोग्यभोगस्थानरूपा: कार्यपदार्था: । अव्यक्तात् - चतुर्मुखदेहात्मनापरिणताया: प्रकृते: । प्रभवन्ति - उत्पद्यन्ते । ब्रह्मण: । रात्र्यागमे सति । तत्रैव - उत्पत्तिस्थानभूत एव । अव्यक्तसंज्ञके - चतुर्मुखदेहावस्थिताव्यक्तनाम्नि । प्रलीयन्ते - प्रलीना भवन्ति ॥ १८ ॥

हे पार्थ ! स एव - प्राग्विद्यमान एव । अयम् । अवश: - कर्मपरवश: । भूतग्राम: - देवमनुष्यादिभूतसमूह: । अहरागमे । भूत्वा भूत्वा - पुन: पुनरुत्पद्य । रात्र्यागमे । प्रलीयते - पुन: पुनर्लयं प्राप्नोति । अहरागमे । पुन: । प्रभवति - जायते । अतऐश्वर्यं गतिं प्राप्तानां पुनरावृत्तिरपरिहार्या, मामुपेतानां तु न पुनरावृत्ति प्रसंग इति भाव: ॥ १९ ॥

---

ब्रह्माण्ड के अन्तर्गत समस्त जगत् की उत्पत्ति एवं प्रलय की बात अब तीन श्लोकों में कहते हैं—

जो पुरुष ब्रह्मा के एक दिन एवं रात रूप काल के स्वरूप के जानकार काल तत्वज्ञ गण हैं, वे लोग ब्रह्मा के एक दिन रात को सहस्रयुग काल पर्यन्त स्थायी कह कर जानते हैं ॥ १७ ॥

ब्रह्मा जी के दिन के उदय होने पर उनके देह में स्थित अव्यक्त प्रकृति से जड़ चेतनात्मक समग्र ब्रह्माण्ड के अन्तर्गत यह जगत् नाम और रूप से विशिष्ट होकर व्यक्त एवं प्रत्यक्ष होता है और जब ब्रह्मा की रात का उदय होता है तब यह व्यक्त और प्रकट जगत् नाम रूप से हीन होकर सूक्ष्म अवस्था में अव्यक्त और अप्रकट होकर अपने उत्पत्ति स्थल ब्रह्मा के शरीर में ही लीन हो जाता है। (ब्रह्मा की रात ही जगत् का प्रलय) काल है, किन्तु यह खण्ड प्रलय है महाप्रलय नहीं ॥ १८ ॥

हे पार्थ ! सूक्ष्म अवस्था में अव्यक्त रूप से स्थित वही सम्पूर्ण जगत् (परिदृश्यमान चेतनाचेतनात्मक जीव समूह) कर्मों के वशीभूत बाध्य होकर ब्रह्मा के प्रत्येक दिन के उदय होने पर बार-बार उत्पन्न होते हैं। ब्रह्मा की रात आने





परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात्सनातन: ।
य: स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥
अव्यक्तोऽक्षर इत्युक्त स्तमाहु: परमां गतिम् ।
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ २१ ॥

---

अथकैवल्यं प्राप्तानामप्यपुनरावृत्तिमाह (परइति तस्मात् । अव्यक्तात् - अचेतनरूपात् । पर: - पुरुषार्थतयोत्कृष्ट: । अन्य: - ज्ञानैकाकारतया तस्माद्विजातीय: । अव्यक्त: । अव्यक्त: - केनापि प्रमाणेनानभि व्यज्यमान: स्वयंप्रकाश इत्यर्थ: । सनातन: - उत्पत्तिविनाशानर्हतया नित्य: । य: । भाव: - पदार्थ: । अस्ति । स: । सर्वेषु । भूतेषु - वियदादिषु । नश्यत्सु सत्सु । न विनश्यति - तत्र स्थिता विनाशंन प्राप्नोति ॥ २० ॥

अतएव अव्यक्त: - अक्षर: - इत्युक्त:, येत्वक्षरमनिर्देश्यमव्यक्तं पर्युपासत इत्यादाविति भाव: । तं - अक्षरशब्दनिर्दिष्टप्रकृतिविविक्तमात्मस्वरूपं । परमां गतिं - परमप्राप्यं । आहु: । वेदविद इति शेष: । यं - आत्मस्वरूपं । प्राप्य । न निवर्तते - पुनरावृत्तिं न भजन्ते । तत् - आत्मस्वरूपं । मम - सर्वनियन्तु: । परमं - अचेतनप्रकृतिरूपात्तत्संसृष्टजीवरूपाच्च विलक्षणं नियमनस्थानम् ॥ २१ ॥

ज्ञानिन: प्राप्यन्तु तस्मादत्यन्तविलक्षणमित्याह (पुरुषइति) भूतानि- देवमनुष्यादीनि सर्वाणिकार्याणि । यस्य - कारणभूतस्य परमपुरुषस्य । अन्तस्स्थानि । तत्र हेतुमाह (येनेति) येनच - परेण पुरुषेण । सर्वं - कारणा-

---

पर जगत् लय को प्राप्त हो जाता है और दिन आने पर फिर से उत्पन्न हो जाता है ॥ १९ ॥

उस अव्यक्त सूक्ष्म अचेतन पदार्थ से भी श्रेष्ठ एक और अव्यक्त नित्य वस्तु (आत्मवस्तु) है, समस्त पाञ्चभौतिक जड़ वस्तुओं के विनाश होने पर भी उसका नाश नहीं होता है ॥ २० ॥

अतएव अव्यक्त एवं अक्षर इस प्रकार से वर्णित उस विशुद्ध आत्मवस्तु को ही वेदज्ञ पण्डितजन परमागति कहते हैं । उसे प्राप्त करने के बाद पुन: जन्म-मरण रूप पुनरावृत्ति नहीं करनी पड़ती है । वही मेरा परमधाम है अर्थात् प्रकृति संश्लिष्ट बद्धात्मा एवं प्रकृति विनिर्मुक्त विशुद्ध आत्मा दोनों ही आत्म वस्तुओं का मैं परम नियामक हूँ, आत्मा नियाम्य है ॥ २१ ॥

**पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।**
**यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥२२॥**
**यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।**
**प्रयाता यांति तं कालं वक्ष्यामि भरतर्षभ ॥२३॥**

वस्थं कार्यावस्थं च समस्तं। इदं - चेतनाचेतनजातं। ततं - व्याप्तं। हे पार्थ ! सः - परः पुरुषस्तु। अनन्यया अव्यभिचारिण्या। भक्त्या। लभ्यः - प्राप्यः ॥ २२ ॥

अथ प्रकृतिवियुक्तात्मयाथात्म्यनिष्ठस्य परमपुरुषनिष्ठस्यचापुनरावृत्तिहेतुमार्गं ऐश्वर्यार्थिनः प्रसंगात्कर्मिणां सर्वेषां च पुनरावृत्तिहेतुमार्गंच वक्तुं प्रतिजानीते (यत्रेति) योगिनः - योगः - उपायः, उपासनपुण्यकर्मरूपः, 'योगस्सन्नहनोपायध्यानसंगतियुक्ति' ष्वित्यभिधानात्, स एषामस्तीति-योगिनः जिज्ञासवो ज्ञानिनः पुण्यकर्माश्च। अत्र कालशब्देन कालाभिमानि देवताप्रापणीयो मार्ग उच्यते। यत्रकाले - यस्मिन्मार्गे। प्रयाताः। अनावृत्तिं - अपुनरावृत्तिं च। आवृत्तिं चैव - पुनरावृत्तिं च। जिज्ञासवो ज्ञानिनश्चापुनरावृत्तिं पुण्यकर्माण आवृत्तिं चेत्यर्थः। यान्ति - प्राप्नुवन्ति। हे भरतर्षभ ! तं। कालं - मार्गं। वक्ष्यामि ॥ २३ ॥

तत्र जिज्ञासूनां ज्ञानिनां च साधारणीमर्चिरादिकां गतिमाह (अग्निरिति) अग्निः - अग्निरूपं। ज्योतिः - तेजः। अहः - दिनं। शुक्लः - शुक्लपक्षः। उत्तरायणं षण्मासाः - उत्तरायणतया प्रसिद्धाष्षण्मासाः। इदं प्रजापत्यंतानामप्युपलक्षणं। एतत्प्रभृतिर्यो मार्गविशेषोऽस्ति। तत्र - तस्मि-

हे पार्थ ! चेतनाचेतनात्मक समस्त प्राणी वर्ग जिस परमात्मा की देह के अन्दर स्थित है और जो इस जड़ चेतन सबमें व्याप्त है वही सर्वश्रेष्ठ पुरुष सर्वेश्वर है। उसे केवल अनन्य भक्ति के द्वारा ही प्राप्त किया जा सकता है ॥ २२ ॥

हे भरतवंश में श्रेष्ठ अर्जुन ! अब मैं जिस मार्ग का अनुसरण करने से योगीजन अर्थात् ऐश्वर्यार्थी आत्मार्थी ध्यान परायण एवं भगवत् प्राप्ति की कामना करने वाले उपासक गण फिर से लौटकर नहीं आते उस अर्चिरादि मार्ग के विषय में एवं जिस मार्ग में चलने से ऐश्वर्यार्थी पुण्यफल भोगने के अन्त में मेरे इस संसार में फिर से लौटकर आ जाता है उस धूम मार्ग के विषय में बताता हूँ ॥ २३ ॥





**अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।**
**तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥२४॥**
**धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।**
**तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥२५॥**

न्मार्गे। प्रयाताः। ब्रह्मविदः - ब्रह्मोपासकाः जनाः। ब्रह्म। गच्छन्ति - प्राप्नुवन्ति। तत्र ज्ञानिनः परंब्रह्म गच्छन्ति - जिज्ञासवस्तु प्रकृतिविविक्तात्मस्वरूपं ब्रह्म गच्छन्तीति विवेकः ॥ २४ ॥

अथ पुण्यकर्मणां पुनरावृत्तिहेतुं मार्गमाह (धूमइति) धूमः - धूमाभिमानिनी देवता। रात्रिः - रात्र्यभिमानिनी देवता। तथा, कृष्णः - कृष्णपक्षाभिमानिनी देवता। दक्षिणायनं षण्मासाः - दक्षिणायनतया प्रसिद्धाष्षण्मासाः। इदं पितृलोकादीनामप्युपलक्षणं। एवं रूपो यो मार्गः। तत्र, प्रयातः। योगी - इष्टापूर्तादिपुण्यकर्मा। चान्द्रमसं चन्द्रमस्सम्बन्धि। ज्योतिः - तेजः, तदुपलक्षितं स्वर्गलोकं। प्राप्य। निवर्तते - तत्रेष्टापूर्तादिकर्मफलमनुभूय पुनरावर्तत इत्यर्थः ॥ २५ ॥

अनयोर्मार्गयोरावृत्त्यमावृत्तिहेतुं विविच्याह (शुक्लेति) एते - पूर्वोक्ते। शुक्लकृष्णे - शुक्लपक्षकृष्णपक्षान्विते - स्वच्छास्वच्छे वा। गती - अर्चिरादिधूमादिमार्गौ। जगतः - उपासकस्य पुण्यकर्मणश्चेतनस्य। शाश्वते - प्रवाहरूपेणनित्ये। मते हि - सम्मते हि। हि शब्देनानयोर्गत्योः पंचाग्नि-

जिस मार्ग या लोक में अग्नि रूप तेज, दिन, शुक्लपक्ष उत्तरायण (माघ मास से लेकर छः मास) इन सबके अभिमानी देवता निवास करते हैं, उस देवयान मार्ग या ब्रह्म मार्ग पर चलता हुआ ब्रह्मोपासक ब्रह्मज्ञ पुरुष अपनी अभिलाषा के अनुसार ब्रह्मवस्तु को प्राप्त होता है अर्थात् परमेश्वर का उपासक परब्रह्म को और आत्मार्थी रूप में ब्रह्म का उपासक प्रकृति रहित आत्म स्वरूप को प्राप्त करता है ॥ २४ ॥

जिस लोक में धूम, रात्रि, कृष्णपक्ष, दक्षिणायन के छः मास इनके अभिमानी देवता निवास करते हैं, उस मार्ग पर चलने से दान और कूपखनन आदि के द्वारा पुण्यकर्म करने वाला योगी चन्द्र सम्बन्धी लोक ज्योतिर्लोक (स्वर्गलोक) प्राप्त करते हैं एवं पुण्य क्षय होने पर फिर से मृत्युलोक में लौट आते हैं ॥ २५ ॥

शुक्लकृष्णे गती ह्येते जगतःशाश्वते मते ।
एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः ॥२६॥
नैते सृती पार्थ जानन्योगी मुह्यति कश्चन ।
तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥२७॥

---

विद्यादिश्रुतिप्रसिद्धि द्योतयति । तयोर्मध्ये। एकया - अर्चिरादिगत्या। गतः उपासकः। अनावृत्तिं, याति। अन्यया धूमादिगत्या। गतः पुण्य-कर्मा। पुनरावर्तते। कर्मभूमिं प्रतीति शेषः ॥ २६ ॥

उक्तमार्गद्वयमजानानस्य फलंदर्शयन्नर्जुनस्योपादेयमार्गचिन्तनं विधत्ते (नैतइति) हे पार्थ ! एते। सृतो मार्गौ। जानन् - हेयतयोपादे-यतया च सन्ततमनुसन्दधानः। कश्चन - कश्चिदपि। योगो - उपासकः। न मुह्यति प्रयाणकाले न मोहमाप्नोति। स्वगंतव्यमार्गेऽर्चिरादिरूपेव्याकुल-चित्तो न भवतीत्यर्थः। तस्मात् - कारणात्। हे अर्जुन ! सर्वेषु कालेषु-प्रत्यहम्। योगयुक्तः - अर्चिरादिगतिचिन्तनरूपयोगसहितः भव ॥२७॥

पूर्वाध्यायद्वयोदित भगवन्माहात्म्यरूपशास्त्रार्थवेदनस्य फलमाह (वेदेष्विति) वेदेषु - ऋग्यजुस्सामाथर्वरूपवेदाभ्यासेषु। यज्ञेषु - इष्टिपशुसोमादिरूपवैदिककर्मसु। तपस्सु - चान्द्रायणानशनादिरूपकाय-शोषणेषु। दानेषु - न्यायार्जितधनस्य पात्रेप्रतिपादनादिरूपेषु। पुण्यफलं - पुण्यकर्मफलं। यत्। प्रदिष्टं - शास्त्रैरुपदिष्टं। इदं - अध्यायद्वयोदित भगवन्माहात्म्यं। विदित्वा। तत्सर्वं - पुण्फलं। अत्येति - अतिक्रामति।

---

शुक्लमार्ग (अर्चिरादि मार्ग) कृष्ण मार्ग (धूम मार्ग) ये दोनों मार्ग जगत् के प्राचीन मत हैं जो निश्चय ही श्रुति प्रसिद्ध हैं। उनमें से एक अर्चिरादि मार्ग द्वारा गमन करने से फिर लौटना नहीं होता। एवं दूसरे धूममार्ग से गमन करने पर फिर से लौटकर इस संसार में आना पड़ता है ॥ २६ ॥

हे अर्जुन ! अर्चिरादि मार्ग का अपुरावृत्ति (लौटकर संसार में न आना) रूप गुण एवं धूम मार्ग का पुनरावृत्ति रूप दोष विचार करने पर प्रथम मार्ग उपादेय और दूसरा त्याज्य है यह ज्ञान उत्पन्न होने पर मरणकाल में कोई भी उपासक मोह में नहीं पड़ता है इसलिए तुम हमेशा अर्चिरादि मार्ग का चिन्तन रूप योग से युक्त होओ ॥ २७ ॥





वेदेषु यज्ञेषु तपस्सु चैव दानेषु यत्पुण्यफलं प्रदिष्टम् ।
अत्येति तत्सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यम् ॥२८॥

इति अष्टमोऽध्यायः ॥ ८ ॥

---

एतद्वेदनसुखातिरेकेण तत्सर्वं तृणाय मन्यते। योगी ज्ञानी च भूत्वा। परम् - ज्ञानिप्राप्यं। आद्यं - जगत्कारणभूतं। स्थानं - पदम्। उपैति - प्राप्नोति ॥ २८ ॥

इति श्रीमद्गीताभाष्यार्थसंग्रहतात्पर्यदीपे श्रीवरवरमुनि
विरचितायां बालबोधिन्याख्यायां
गीतार्थसंग्रहदीपिकायां

॥ अष्टमोऽध्यायः ॥ ८ ॥

आमरीतिर्निदातेजा: परंकृष्ण सनातन: ।
जयताज्जगतीनाथो वेदवेद्यो महामति: ॥



---

वेदाभ्यास विविध शास्त्रीय यज्ञादि का अनुष्ठान, व्रत चन्द्रायणादि काय-क्लेश रूप तप, आदि के पुण्यफल की बात शास्त्र में कही गयी है, इस अध्याय और इसके पूर्व के अध्याय में कथित अक्षरतत्व, परब्रह्म तत्व और भगवान् की महिमा विदित होने पर ज्ञाता पुरुष उक्त पुण्य कर्म से अर्जित पुण्यफल अतिक्रम करता है। एवं ऐसा ज्ञानी भक्त योगी विष्णु भगवान् का परमपद को प्राप्त करता है ॥ २८ ॥

॥ अक्षरपरमब्रह्मयोग नामक अष्टम अध्याय समाप्त ॥

श्रीरस्तु

# अथ नवमोऽध्यायः

★

श्रीभगवानुवाच—

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १ ॥

अथ नवमाध्याये उपास्यस्य परमपुरुषस्य माहात्म्यं ज्ञानिनां विशेषं च शोधयन् भक्तिरूपोपासनस्य स्वरूपमाह (इदमिति) हे अर्जुन ! विज्ञान-सहितं - विज्ञानेन - उपासनगतविशेषज्ञानेन, सहितं । गुह्यतमं - अति-रहस्यं । इदन्तु - पूर्वाध्यायोक्तज्ञानाद्विलक्षणं । ज्ञानं - भक्तिरूपोपासनाख्यं ज्ञानं । अनसूयवे - असूया रहिताय । ते - तुभ्यं । प्रवक्ष्यामि । यत् - ज्ञानं । ज्ञात्वा - ज्ञानपूर्वकमनुष्ठाय । अशुभात् - मत्प्राप्तिविरोधिनस्सर्व-स्मादमङ्गलात् । मोक्ष्यसे - मुक्तो भविष्यसि ॥ १ ॥

## नवम अध्याय

### राजविद्या राजगुह्य योग

स्वमाहात्म्यं मनुष्यत्वे परत्वञ्च महात्मनाम् ।
विशेषो नवमे योगो भक्तिरूपः प्रकीर्तितः ॥

—गीतार्थसंग्रह १३

परमपुरुष परमात्मा के गुणों का माहात्म्य, मनुष्य शरीर धारण करके अवतरण काल में भी ईश्वर की परम पुरुषरूप में स्वरूप सत्ता, महात्माओं का वैशिष्ट्य, भक्तियोग का विवरण ये चार विषय नवम अध्याय में कथित हैं ।

भगवान् बोले — हे अर्जुन ! तुम शास्त्र में दोष न देखने वाले अर्थात् शास्त्र विश्वासी हो अतएव मैं तुझे यह भगवद् भक्ति रूप उपासना नामक 'गुह्यतम' ज्ञान, इस उपासना के अन्तर्गत विशेष ज्ञान के सहित उपदेश देता हूँ । इस ज्ञान को प्राप्तकर और तदनुसार आचरण करने से तुम समस्त संसार रूपी अमङ्गल से मुक्त हो जाओगे ॥ १ ॥





राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥
अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप ।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥ ३ ॥

तदेवज्ञानं प्रशंसति ( राजविद्येति ) इदं - उपदेक्ष्यमाणं भक्ति रूपापन्नं । राजविद्या - विद्यानां ज्ञानानां राजा, श्रेष्ठमित्यर्थः । राजगुह्यं - गुह्यानां रहस्यानां राजा-श्रेष्ठं । उत्तमं पवित्रं - परमपवित्रं । मत्प्राप्ति-विरोधिसकलकल्मषापहमित्यर्थः । प्रत्यक्षावगमं - अवगम्यते - ज्ञायते इत्यवगमो विषयः, प्रत्यक्षः - अवगमः, यस्य तत्तथोक्तं, भक्ति रूपेणोपासनेन मामुपासीनस्य तदानीमेवाहं प्रत्यक्षो भवामीत्युपासनं प्रत्यक्षावगमं भवतीत्यर्थः । धर्म्यं - धर्मादनपेतं । निरतिशयप्रीतिरूपतया स्वयमेव निश्श्रेयसरूपमपि मत्प्राप्तिरूप निश्श्रेयससाधनं चेत्यर्थः । अतएव, कर्तुं - अनुष्ठातुं । सुसुखं - अत्यर्थप्रियं । अव्ययं - अक्षयं । मत्प्राप्ति साधयित्वापि स्वयं न क्षीयते - प्राप्याभिन्नतया मुक्तिदशायामप्यनुवर्तमानमित्यर्थः ॥ २ ॥

हे परन्तप ! अस्य - निरतिशयप्रियमद्विषयतया स्वयं निरतिशयप्रीतिरूपस्य । धर्मस्य - निरतिशयमत्प्राप्तिसाधनस्योपासनस्य । सम्बन्ध सामान्येषष्ठी, इमं धर्ममित्यर्थः । अश्रद्दधानाः - अविश्वसन्तः - विश्वास-पूर्वकत्वरारहिता इत्यर्थः । पुरुषाः, अतएव, मां, अप्राप्य । मृत्युसंसारवर्त्मनि - मृत्यौ स्वरूपनाशकतया मृत्युरूपे, संसारवर्त्मनि - संसारमार्गे । निवर्तन्ते - नितरां वर्तन्ते । महदिदमाश्चर्यमिति भावः ॥ ३ ॥

पूर्वश्लोक में कथित भक्तिरूप उपासनात्मक यह ज्ञान सम्पूर्ण विद्याओं एवं रहस्य ज्ञानों में सर्वश्रेष्ठ तथा परमपवित्र है, यज्ञ, ज्ञान एवं तदनुसार उपासना, अनुष्ठान, उपास्य वस्तु को उपासक को प्रत्यक्ष करा देने वाला है । इसलिए इस श्रेयःसाधन के उपायरूप धर्म का अनुष्ठान अतिप्रेम के साथ करना योग्य है । इस ज्ञान का कभी नाश नहीं होता, अर्थात् जीव के मुक्त होने पर भी यह ज्ञान उस जीव के साथ जाता है ॥ २ ॥

हे परन्तप अर्जुन ! इस भक्तिरूप उपासना नामक धर्म के प्रति जिनकी श्रद्धा या विश्वास नहीं है, वे मुझे प्राप्त नहीं कर पाते हैं एवं वे स्वरूप नाशक मृत्यु इस संसार चक्र में निरन्तर भ्रमण करते रहते हैं ॥ ३ ॥

**मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।**
**मत्स्थानि सर्वभूतानि नचाहं तेष्ववस्थितः ॥ ४ ॥**
**न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।**
**भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ५ ॥**

भक्तिरूपोपासनाख्य परमधर्मे श्रद्धाजनकं प्राप्यस्य स्वस्यासाधारणं महिमानमाह (मयेति) इदं - चेतनाचेतनात्मकम् । सर्वं, जगत् । अव्यक्त-मूर्तिना - अप्रकाशितस्वरूपेण । मया ततं - धारणार्थं नियमानार्थं च शेषि-तया व्याप्तं । अतः, सर्वभूतानि । मत्स्थानि - अन्तर्यामिणि मयि स्थितानि, मदेकायत्तस्थितिनियमनानीत्यर्थः । अहं च - अहन्तु । तेषु - भूतेषु नाव-स्थितः - न तदधीनस्थितिरित्यर्थः ॥ ४ ॥

वटादिर्जलादेरिव नाहं जगतो धारकः, अपितु संकल्पेनेत्याह (नचेति) भूतानि, मत्स्थानि च । न - जलादीनि घटादाविव मयिस्थितानिनभवन्ती-त्यर्थः । तर्हि पूर्वोक्तव्यापकत्वधारकत्वे विरुध्येयातामित्यत्राह (पश्येति) मे-

**( भगवान् ने अर्जुन से कहा—'सर्वभूतानि मत्स्थानि' सर्वभूत मुझ में स्थित हैं और बाद में कहा कि—भूतानि मत्स्थानि च न' प्राणि वर्ग मुझ में स्थित नहीं । इस प्रकार परस्पर विरुद्ध दो बातें कैसे ? समाधान—भगवान् ने कहा कि हे अर्जुन मैं सर्वान्तिर्यामी, सब वस्तुओं में मैं ही व्याप्त हूँ तथा वे मेरे आधीन हैं । मैं ही सब वस्तुओं का धारक हूँ इसलिए जगत् मुझ में ही अवस्थित है किन्तु मेरे भीतर उसकी यह स्थिति जैसे एक स्थूल वस्तु जल दूसरे स्थूल वस्तु घड़े में भरा रहता है, इसलिए घड़ा जल का धारक होता है इस प्रकार की बात यहाँ नहीं समझनी चाहिए बल्कि मैं तो इस जगत् में अपने सङ्कल्प से सूक्ष्म रूप में स्थित या व्याप्त होकर ही इस जगत् का धारक रूप से अवस्थित हूँ यह जानना चाहिए ) ।**

**इस जगत् के चेतन एवं अचेतन सम्पूर्ण पदार्थों में अप्रकाशित स्वरूप से मैं अन्तर्यामी, नियमन कर्ता, धारक एवं शेषी रूप से व्याप्त हूँ, इसलिए विश्व में चरा-चर सर्व भूत मुझ में ही अवस्थित है अर्थात् सर्वान्तिर्यामी होने से सब मेरे ही अधीन है । किन्तु मेरी स्थिति उनके आधीन नहीं ॥ ४ ॥**

**जैसे जल घड़े में स्थित रहता है इसलिए घड़ा जल का धारक कहा जाता इस प्रकार यह भूत प्राणी मुझ में ठीक उसी प्रकार स्थित नहीं हैं एवं मैं भूतवर्ग का उस प्रकार से धारक नहीं हूँ किन्तु मैं अपने संकल्प और अपनी इच्छा से सूक्ष्म रूप**





**यथाऽऽकाशस्थितोनित्यं वायुस्सर्वत्रगो महान् ।**
**तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६ ॥**

मम । ऐश्वरं - ईश्वरस्य सम्बन्धिनं, तदसा धारणमित्यर्थः । शिवस्य भागवत इतिवदयं निर्देशः । योगं - आश्चर्ययुक्तिं । 'योगस्सन्नहनोपाय ध्यानसंगति युक्तिष्वि' त्यभिधानकोशात् । युक्तिः - अघटितघटनाचातुर्यम् । पश्य - अवलोकय । तमेव योगमाह (भूतभृदिति) अहं । भूतानि विभर्तीति-तिभूतभृत् । नचभूतस्थः - भूतेषुस्थितस्तुन । ममस्थितौतु भूतैर्न कश्चिद-प्युपकार इत्यर्थः । त्वय्यनवस्थितानां भूतानां त्वया धारणं तु कथं घटत इत्यत्राह (ममेति) मम । आत्मा - संकल्पएव । भूतभावनः - भावयतीति-भावनः - भूतानां भावनः - भूतानां धारकत्वादिसत्तानुवृत्तिहेतुरित्यर्थः ॥ ५ ॥

सर्वस्यास्य स्वसंकल्पायत्तस्थितिप्रवृत्तित्वं स्थालीपुलाकन्यायेन क्वचिन्निदर्शयति (यथेति) नित्यम् । आकाशस्थितः - अमूर्तेऽनालम्ब आका-शेविद्यमानः । सर्वत्रगच्छतीति सर्वत्रगः - सर्वत्रप्रवर्तमानः । महान् । वायुः । यथा - मत्स्थः तथैव, सर्वाणि, भूतानि, मत्स्थानि, मदेकायत्तस्थिति प्रवृति-कानि, इति इममर्थं । उपधारय - अवधारय । वायोर्हि नतावदमूर्तो निरा-लम्ब आकाशोधारकः प्रवर्तको वा । नच महानयं वायुरनालम्बे गगने विहंगशरीरवत्केनचिच्चेतनान्तरेण धारयितुं च शक्यः । अतो निरालम्बे विहायसि चेतनो विहंगशरीरादेरिव महावायोर्महीयानहमेव धारकः प्रवर्त-कश्चेत्यभ्युपगमनीयं । तथासर्वभूतेष्वपीति भावः ॥ ६ ॥

**में इस भूतवर्ग का धारक होकर स्थित हूँ इसे बताते हैं—मेरा यह ऐश्वर्य सम्पन्न योग अघटित घटना पटीयसी आश्चर्य शक्ति को लक्ष्य करता है । मैं प्राणीमात्र का भरण कर्ता हूँ किन्तु उनमें स्थित नहीं अर्थात् मैं इन प्राणियों के साथ संग रहित हूँ मुझे इनसे किसी उपकार का प्रयोजन नहीं बल्कि मैं अपने संकल्प से इन प्राणियों का धारक और नियन्ता हूँ ॥ ५ ॥**

**जैसे मेरे ही संकल्प से वायु (एक अचेतन वस्तु) निराधार हो आकाश में अवस्थित एवं सर्वत्र विचरण करता है अर्थात् वायु की यह स्थिति और प्रवृत्ति मेरे ही संकल्प के आधीन है, वैसे ही चेतन और अचेतनात्मक सब प्राणियों की स्थिति एवं प्रवृत्ति मेरे ही संकल्पाधीन है—इस प्रकार समझो ॥ ६ ॥**

**सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।**
**कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ ७ ॥**
**प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।**
**भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ८ ॥**

---

सर्वभूतानां स्वरूपस्थितिप्रवृत्तिवदुत्पत्तिप्रलयावपि मत्संकल्पायत्तावित्याह (सर्वेति) हे कौन्तेय ! सर्वभूतानि सर्वाणि चराचराणि । कल्पस्य द्विपरार्धकालरूपचतुर्मुखायुषः । क्षये - अवसानसमये । मामिकां-मच्छरीरभूतां । प्रकृतिं - तमश्शब्दवाच्याम् । यान्ति - मत्संकल्पात्प्रविशन्ति । तान्येव - भूतानि । कल्पादौ - कल्पारम्भे, पुनः, अहं, विसृजामि - प्रकृते स्सकाशाद्विभज्य सृजामीत्यर्थः ॥ ७ ॥

स्वां - स्वकीयां । प्रकृतिं - विचित्रपरिणामिनीं तमोरूपां । अवष्टभ्य - भूमिरापोऽनलोवायुरित्युक्तरीत्याऽष्टधापरिणमय्येत्यर्थः । प्रकृतेः - महामोहिन्याः । वशात् - अधीनत्वाद्धेतोः । अवशं - अस्वतन्त्रं । इमं - देवतिर्यङ्मनुष्यस्थावरात्मना चतुर्विधं भूतग्रामं - भूतसमूहं । पुनः पुनः, तत्तद्योग्यकाले । विसृजामि - विविधं विचित्रं च सृजामि ॥ ८ ॥

नन्वेवं देवमनुष्याद्यात्मनोत्कृष्टापकृष्टवस्तुसृष्टिं कुर्वतस्तव वैषम्यनैर्घृण्ये कथं न स्यातामित्याशंक्याह ( नच मामिति ) हे धनञ्जय ! तानि - विषमसृष्ट्यादीनि । कर्माणि - व्यापाराः । मां न निबध्नन्ति - वैषम्यनैर्घृण्यदोषेण न बन्धयन्ति । अत्रहेतुं विशेषमुखेनाह (उदासीनवदिति) तेषु -

---

हे कौन्तेय ! चराचर भूतवर्ग मेरे ही संकल्प से मेरी ही शरीर रूपी सूक्ष्म प्रकृति में लय को प्राप्त करते हैं और फिर से सृष्टि के आरम्भ में सूक्ष्म प्रकृति में लीन अवस्था से भिन्न-भिन्न प्रकार से विभाग कर मैं ही इन भूतों को उत्पन्न या सृजन करता हूँ ॥ ७ ॥

मेरी करणावस्थापन्नतामनामक सूक्ष्मप्रकृति से पृथ्वी, जल, तेज, वायु आकाश आदिक कार्यावस्थप्रकृति उत्पन्न करके जीवों के पूर्व कल्पानुरूप कर्म-जनित अपनी प्रकृति अथवा स्वभाव के अनुसार उस प्रकृति के परवश हो मैं प्रतिकल्प में योग्य समय पर देव, मनुष्य, तिर्यक् एवं स्थावर आदि विविध भूतवर्ग को बार-बार विचित्र रूप से पैदा करता रहता हूँ ॥ ८ ॥





**न च मां तानि कर्माणि निबध्नन्ति धनञ्जय ।**
**उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ ९ ॥**
**मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।**
**हेतुनानेन कौन्तेय जगद्विपरिवर्तते ॥१०॥**

---

विषमसृष्ट्यादिषु । कर्मसु - तेषां कर्माणां वैषम्य इत्यर्थः । असक्तं - प्रयोजकत्वसम्बन्धरहितं । तत्र उदासीनवत् - अकिंचित्करवत् । आसीनं - वर्तमानं । मां, न निबध्नन्ति - न सम्बध्नन्ति । सृज्यवस्तुगतप्राचीनपुण्यपापकर्माण्येव मत्कृतसृष्टिवैषम्ये प्रयोजकानि - नत्वहमिति भावः ॥ ९ ॥

हे कौन्तेय ! अध्यक्षयतीत्यध्यक्षः, 'तदैक्षतबहुस्या' मित्युक्तरीत्या प्रत्यक्षमीक्षमाणः, तेन - मया । मदीया प्रकृतिः । स चराचरं - चराचराभ्यां सहितं । जगत् । सूयते - उत्पादयति । हि - यस्मात् अनेक - क्षेत्र कर्मानुगुणमदीक्षणरूपेण, हेतुना - कारणेन, सचराचरं, जगत् । परिवर्तते - कुलालचक्रवत्पुनः पुनरावर्तत इत्यर्थः ॥ १० ॥

मूढाः - स्वकृतकर्मणा संकुचितज्ञाना जनाः । भूतमहेश्वरं - भूतानां महांतमीश्वरं । मानुषीं - मनुष्यसजातीयाम् । तनुं - विग्रहं । आश्रितं - परमकारुणिकतया सर्वसमाश्रयणीयत्वाय मनुष्यसजातीयतयावतीर्णमित्यर्थः ।

---

इस विषम सृष्टि का कारण बताते हुए कहते हैं—हे धनञ्जय ! इस विषम सृष्टि करने से मुझ में वैषम्य नैर्घृण्य रूप दोष भी नहीं लग पाता, क्योंकि मैं इस सृष्टि को अनासक्त एवं उदासीन भाव से सम्पादित करता हूँ अर्थात् इस सब कार्य को करने में मेरा इष्ट या अनिष्ट कुछ भी तो प्रयोजन नहीं है । बल्कि यह जीव अपने पुण्य पाप रूप कर्मों के फलानुसार ही देव, मनुष्य आदि विभिन्न योनियाँ प्राप्त करता रहता है ॥ ९ ॥

हे कुन्तीनन्दन ! "मैं अकेला हूं, बहुत हो जाऊँ" यह संकल्प करके मैं अपनी सूक्ष्म प्रकृति के प्रति दृष्टिपात करता हूँ तब मेरी वह कारणावस्थापन्न सूक्ष्म प्रकृति इस ईक्षण द्वारा आलोकित होकर कार्यावस्थापन्न स्थूल प्रकृति रूप से परिणत हो जीवों के कर्मानुसार यह चराचर जगत् उत्पन्न होता है । अर्थात् मेरे इस ईक्षण (दृष्टिपात) से ही यह चराचर जगत् बार-बार परिणत हो सृष्टि प्रवाह रूप में चलता है ॥ १० ॥

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥११॥
मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥१२॥

माम् । मम । परं - कर्मकृतेतरमनुष्यभावविलक्षणम् । भावं - परमकारुणिकत्वादिकृतं मनुष्यभावम् । अजानन्तः - अप्राकृतमनुष्यभावमजानन्तस्सन्तः । अवजानन्ति - प्राकृतमनुष्यम्मन्वाना नाद्रियन्त इत्यर्थः ॥ ११ ॥

पूर्वोक्तस्वावज्ञाया हेतुफले दर्शयति (मोघाशा इति) मूढाइति पूर्वश्लोकादनुषञ्जनीयं । मदवज्ञापरामूढाः । रक्षसामिमां राक्षसीं - रजः प्रचुरां । असुराणामिमामासुरीं - तमः प्रचुराञ्चैव । अतएव । मोहिनीं- मनुष्यत्वे परत्वतिरोधानकरीं । प्रकृतिं - स्वभावं । श्रिताः - आश्रिताः अतएव - मोघाशाः - विफलाभिलाषाः । मोघकर्माणः - व्यर्थारम्भाः । मोघज्ञानाः - विफलज्ञानाः । विचेतसः - सर्वेषु विषयेषु विगतयथार्थज्ञानाश्च । भविष्यन्तीति शेषः ॥ १२ ॥

हे पार्थ ! दैवीं - देवसम्बन्धिनीं सत्त्वप्रचुरां । प्रकृतिं - स्वभावं । आश्रिताः - प्राप्ताः । महात्मानः - महानुभावास्तु । भूतादिं - भूतानां - देवमनुष्यादि समस्तकार्याणां, आदिं, कारणभूतं । अव्ययं - अवतारस्य

अपने दुष्कर्मों के कारण जिनका ज्ञान संकुचित हो गया है, ऐसे अज्ञानी पुरुष में जो जीवों का महेश्वर हूँ अपनी इच्छा से जीवों का कल्याण करने के लिए मनुष्य जातीय विग्रह धारण कर श्रीकृष्ण रूप से अवत्तीर्ण हुआ हूँ, मनुष्यों से विलक्षण मेरी इस उत्कृष्टता को वे नहीं जान पाते। वे अपने अज्ञान के कारण यही सोचते और मानते हैं कि मैं अन्यान्य प्राकृत मनुष्यों के समान ही कर्मों के वश जन्म लेता हूँ और इसीलिए वे मेरी अवज्ञा भी करते हैं ॥ ११ ॥

मेरी अवज्ञा करने वाले मूढ़ पुरुष, राक्षसों के समान तमः प्रधान और बुद्धि भ्रंश करने वाले स्वभाव के दास हो जाते हैं। ऐसे स्वभाव के कारण उनके मनमें यथार्थ ज्ञान का उदय नहीं हो पाता और इसीलिए उनका समस्त ज्ञान निष्फल हो जाता है, अतएव उनकी सम्पूर्ण मनोवाञ्छा और आशापूर्ति के कर्म निष्फल हो जाते हैं ॥ १२ ॥





महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजंत्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥१३॥
सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।
नमस्यंतश्च मां भक्त्या नित्ययुक्ता उपासते ॥१४॥

दयामूलत्वेन कर्ममूलत्वाभावात्तत्कृतज्ञानसंकोचादि रहितं, परमकारुणिकं । मां, ज्ञात्वा । अनन्यमनसः - मदेकचित्तास्सन्तः । भजन्ते - भक्तिरूपोपासनं कुर्वते ॥ १३ ॥

तेषां भजनप्रकारमाह "सतत" मित्यादि श्लोकद्वयेन । भक्त्या - मयि निरतिशयप्रीत्या । सततं - अनवरतं । मां, कीर्तयन्तः - कल्याणगुणविशेषप्रदर्शकैर्नारायणकृष्णवासुदेवादिनामभिः कीर्तनं कुर्वन्तः । दृढव्रताः - दृढसंकल्पास्सन्तः । सततं - यतन्तः - मदर्चनादिषु तदुपयोगिनं दनवनकरणादिषु च मत्कर्मसु यतमानाः । नमस्यन्तः साष्टांगमचिन्तित पांसुपंकशर्करादिके धरातले दण्डवत्प्रणिपतन्तः । सततं नित्ययुक्ताः - मयानित्ययोगमाशासानाश्च सन्तः । सततं - उपासते ॥ १४ ॥

अन्येपि - केचिन्महात्मानः । ज्ञानयज्ञेन - ज्ञानं - मत्स्वरूप गुणैश्वर्यविषयं - वासुदेवस्सर्वमित्येवं रूपं वा, तदेवयज्ञः - तेनच,चकारात्पूर्वोक्तैः कीर्तनादिभिश्च । मां, यजन्तः - प्रीणयन्तस्सन्तः । विश्वतोमुखं - विश्वतः विश्वानि, कार्यकारणोभयावस्थसमस्तस्थूलसूक्ष्मचिदचिद्वस्तूनि, मुखं - शरीरतया प्रकारः - यस्य तं तथोक्तम्मां । बहुधा पृथक्त्वेन - बहुधा - अव्यक्तमहदहंकारादि समष्टिरूपै र्देवमनुष्यादिव्यष्टिरूपैश्च बहुप्रकारैः - पृथक्त्वं - नामरूपविभागात्मकं कार्यत्वं तेन प्रकारेण । एकत्वेन - एकत्वं -

किन्तु हे पार्थ ! सात्विक दैवी स्वभाव वाले जो महात्मा पुरुष असंकुचित ज्ञान के कारण देव, मनुष्य प्रभृति सब जीवों के आदिकारण, अव्यय (अविनाशी) रूप से मुझे अर्थात् मेरे स्वरूप, रूप, गुण, लीला आदि को यथार्थ रूप से जानकर वे एकमात्र मुझ में ही अपना चित्त लगाकर मेरा भजन करते हैं ॥ १३ ॥

ऐसे सात्विक महात्मा सर्वदा अत्यन्त प्रेम पूर्वक मेरे नाम, रूप, गुण आदि का सङ्कीर्तन करते हुए दृढ़ संकल्प हो मेरी अर्चना, प्रदक्षिणा मन्दिर-लेपन, उद्यान-निर्माण आदिक विविध सेवाओं से, मेरी साष्टांग करके मेरे साथ नित्य संयोग की अभिलाषा से अनन्य मन होकर मेरी उपासना करते हैं ॥ १४ ॥

ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥१५॥
अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् ।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥१६॥

अविभक्तनामरूपत्वरूपं कारणत्वं - तेन प्रकारेण, कार्यरूपजगदाकारेण कारणरूपजगदाकारेण चेत्यर्थः उपासते ॥ १५ ॥

विश्वशरीरत्वमेव दर्शयति (अहमिति) अहमेव । क्रतुः - ज्योतिष्टोमाद्यध्वरः । अहमेव च । यज्ञः - ब्रह्मयज्ञादिः पंचविधो महायज्ञः । अहमेव । स्वधा - पितृगणप्रीणनंहविः । अहमेव । औषधं - व्रीहियवाद्योषधिविकारभूतं चरुपुरोडाशादिरूपं हविः । अहमेव । मन्त्रः - याज्यापुरोनुवाक्यादिरूपः । अहमेव । आज्यं - आज्यरूपं हविः । सोमादेरप्युपलक्षणमेतत् । मन्त्रशब्दसाहचर्यादाज्यनामकस्तोत्रविशेषो वा । अहमेव । अग्निः - आहवनीयादिरूपः । अहमेव । हुतं होमः ॥ १६ ॥

अस्य - ब्रह्मादिस्तम्बपर्यन्तस्य । जगतः । पिता - तत्र तत्र पितृत्वेन वर्तमानश्चेतनः । माता-जननीत्वेन वर्तमानः । धाता - मातापितृव्यतिरिक्त स्रष्ट्रचेतनतयाऽवस्थितः । पितामहः - जनकजनकत्वेनावस्थितः । पवित्रं - पावनं । वेद्यं - ज्ञेयम् । ओंकारः - पवित्रवेद्या वेदक समस्तवेदमूलभूतः प्रणवः । ऋक् - पादव्यवस्थावान्मन्त्रविशेषः । सामरथन्तरादि-

**कोई-कोई महात्मा नाम सङ्कीर्तन प्रणमादि के साथ-साथ मेरे स्वरूप, रूप और गुण आदि के ज्ञान रूप यज्ञ से प्रीतिपूर्वक विश्वशरीरी मुझे अर्थात् देव, मनुष्य, तिर्यक्, स्थावर विविध स्थूल जड़ चेतनात्मक वस्तुओं के शरीरी रूप में विभक्त एवं अविभक्त एक रूप में अर्थात् नामरूप में अविभक्त, सूक्ष्म चिदचित् समष्टि के शरीरी रूप में इन दोनों रूपों में चिन्तन करते हुए उपासना करते हैं ॥ १५ ॥**

**मैं जगत् के चेतन अचेतन सभी वस्तुओं का शरीरी हूँ, इसलिए मैं ही जगत् पद से वाच्य हूँ । अतएव मैं ही ज्योतिष्टोमादि यज्ञ हूँ । मैं ही अश्वमेधादि महायज्ञ, मैं ही स्वधा पितरों के उद्देश्य से अर्पित अन्न, मैं ही औषधि धान्य जौ आदि यज्ञीय वस्तु, मैं ही आज्य (हवि), मैं ही आहवनीय अग्नि और मैं ही होम हूँ ॥ १६ ॥**





पिताऽहमस्य जगतो माता धाता पितामहः ।
वेद्यं पवित्रमोंकार ऋक् साम यजुरेव च ॥१७॥
गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥१८॥
तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥१९॥

गानविशेषसंस्कार्यमन्त्रविशेषः । यजुश्च - पादव्यवस्थारहितोऽखण्डमन्त्रविशेषश्च । चकारेणविध्यर्थवादरूप ब्राह्मणभागस्समुच्चीयते । अहमेव ॥ १७ ॥

गम्यतइतिगतिः - स्वर्गपृथिव्यादिरूपं तत्तत्प्राप्यस्थानं । भर्ता-धारयिता । प्रभुः - शासिता । साक्षी - अध्यक्षः - साक्षाद्द्रष्टा । निवासः - वेश्मादिवासस्थानम् । शरणं - इष्टप्राप्त्यनिष्टनिवृत्त्युपायत्वेन समाश्रयणीयताय तत्रतत्रावस्थितश्चेतनः । सुहृत् - हितैषी चेतनः । प्रभवप्रलयस्थानं प्रभवप्रलययोः स्थानम् । निधानं - निधीयत इति निधानं । उत्पाद्यमुपसंहार्यं च कार्यजातम् । बीजं-यस्य कस्यापि कार्यस्य सहकार्यादिकारणतयाऽवस्थितं च वस्तु । अहमेव ॥ १८ ॥

अहमेव । तपामि - अग्न्यादित्यादिरूपेण स्थित्वा ग्रीष्मसमये जगतस्तापं करोमीत्यर्थः । अहमेव । वर्षं - जलं । निगृह्णामि - पर्जन्यादिरूपेण स्वीकरोमि । अहमेव । उत्सृजामिव - प्रावृषि मुंचामि च । अमृतं

**ब्रह्मा से लेकर स्तम्ब पर्यन्त इस सम्पूर्ण जगत् का मैं ही पिता, माता, धाता, पितामह एवं मैं ही पवित्र वेदों से वेद्य वस्तु, मैं ही ओंकार तथा ऋक्, यजुष्, सामवेद हूँ ॥ १७ ॥**

**मैं ही प्राणीमात्र की गति, धारक, प्रभु, साक्षी, स्मरण करने योग्य, गृहादि वासस्थान एवं जीवों का हितैषी पुरुष, उत्पत्ति एवं प्रलय स्थल हूँ । मैं ही सम्पूर्ण चेतनाचेतनात्मक जगत् का आधार एवं मैं ही संसार का अविनाशी मूलकारण हूँ ॥ १८ ॥**

**मैं ही सूर्य के रूप में ताप देता हूं, मैं ही उस ताप से जल का शोषण कर फिर से बृष्टि रूप से जल का सेचन कर शस्य आदि पैदा करता हूँ । मैं ही जीवन**

**त्रैविद्यामां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।**
**ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान् ॥२०**

च - जीवनसाधनभूतं च । मृत्युश्च - मरणसाधनं वस्तु । अहमेव । किम्बहुना । सत् - वर्तमानं । असच्च - अतीतमनागतं च - चिदचिद्वस्तु जातं । अहमेव ॥ १९ ॥

एवम्महात्मनां ज्ञानिनां भगवदनुभवैकभोगत्वरूपं वृत्तमुक्त्वा तेषामेव विशेषं दर्शयितुं भगवद्व्यतिरिक्तकामोपहतानामज्ञानां वृत्तमाह (त्रैविद्या इति) तिस्रोविद्यास्समाहृतास्त्रिविद्यं - त्रिविद्यमधीयते विदुरिति वा - त्रैविद्याः, ऋग्यजुस्सामरूपवेदत्रयप्रतिपाद्यकेवलकर्मनिष्ठाः । यज्ञैः - केवलेन्द्राद्याराधनतयाऽनुसंहितैर्यागैः । मां - इन्द्राद्यन्तर्यामिणम् । इष्ट्वा-आराध्य । सोमपाः - सोमं - यज्ञशिष्टं सोमरसं - पिवन्तीति तथोक्ताः । अतएव, पूतपापाः - पूतानि - शोषितानि - पापानि - स्वर्गादिप्राप्तिविरोधिदुरितानि, येषान्ते - तथोक्ताः । स्वर्गतिं । पार्थयन्ते इन्द्रादीन्याचन्त इत्यर्थः । ते - जनाः । पुण्यम् - दुःखासम्भिन्नसुखरूपं । सुरेन्द्रलोकं । आसाद्य - प्राप्य । दिवि - स्वर्गे । दिव्यान् - अमानुषान् । देवभोगान् - देवानां - इन्द्रादीनां-भोगान् - भोग्यान् शब्दादीन्विषयान् । अश्नन्ति - भुंजते ॥ २० ॥

ते - स्वर्गभोक्तारः - त्रैविद्याः । विशालं - विस्तीर्णं । तं - प्रार्थितं । स्वर्गलोकं - स्वर्गसुखम् । भुक्त्वा - अनुभूय । पुण्ये - तदनुभवहेतुभूते सुकृते । क्षीणे - नष्टे सति । मर्त्यलोकं - भुवम् । विशन्ति - प्राप्नुवन्ति । एवम् - अनेन प्रकारेण । कामकामाः - कामान् - स्वर्गादिकाम्यान् - कामयन्त इति कामकामाः । त्रयीधर्मं - त्रयीप्रतिपाद्य केवलं कर्म । अनुप्रपन्नाः

या मरण का साधन वस्तु हूँ। मैं ही इस सम्पूर्ण जड़ चेतनात्मक वस्तुओं की वर्तमान व्यक्त अवस्था एवं अतीत और अनागत अव्यक्त अवस्था हूँ ॥ १९ ॥

जो वेदत्रयी प्रतिपाद्य केवल काम्य कर्मों के प्रति आग्रहवान् हैं, वे इन्द्रादि देवगण की आराधना यज्ञ के द्वारा उन उन देवों के अन्तर्यामी रूप से मेरी ही आराधना करते हैं। यज्ञ से अवशिष्ट सोमरस पान करके जिनके पापक्षीण हो गये हैं वे इस यज्ञ द्वारा स्वर्ग प्राप्ति की प्रार्थना करते हैं। वे अपनी प्रार्थना के अनुसार स्वर्गलोक प्राप्त करके वहाँ इन्द्रादिसे भोग्य वस्तुओं का भोग करते हैं ॥ २० ॥



**ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।**
**एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते ॥२१॥**
**अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥२२ ।**

अनुसृतवन्तः । गतागतं - घटीयन्त्रवद्यातायातम् । लभन्ते । इतोगत्वा-स्वर्गाद्यल्पास्थिरफलान्यनुभूय पुनरत्रैवागच्छन्तीत्यर्थः ॥ २१ ॥

ज्ञानिनामपुनरावृत्तिरूपविशेषं दर्शयति ( अनन्या इति ) न विद्यतेऽन्यत्प्रयोजनं येषांतेऽनन्याः - प्रयोजनान्तरविमुखा मच्चिन्तनैकप्रयोजना इत्यर्थः । मां - चिन्तयन्तः - सततं परिशीलयन्तः । ये - जनाः - धन्यजन्मानः । मां । पर्युपासते - परितः - स्वरूपरूपगुणविभूतिभिस्सर्वैः प्रकारैः, उपासते । नित्याभियुक्तानां - मयि नित्याभियोगमाकांक्षताम् । तेषां - जनानां । अहं - आश्रितवात्सल्यैकजलधिः । योगश्च क्षेमश्च योगक्षेमं - योगः - अप्राप्तमत्प्राप्ति लक्षणोलाभः, क्षेमः - तत्परिपालनं अपुनरावृत्ति रितियावत् - तौ । वहामि - प्रापयामि ॥ २२ ॥

नन्विन्द्राद्याराधनमपि तच्छरीरिणो ममैवाराधनमिति जानन्नपि भवान् केवलकर्मिणामपि मोक्षरूपं योगक्षेमं किमिति न प्रयच्छतीत्यत आह "येत्वि" त्यादिश्लोकद्वयेन । तु शब्दश्शंकानिरासार्थः । ये जनाः । अन्यदेवताभक्ताः - अन्यदेवता स्विन्द्रादिषु भक्ताः - प्रीतिमन्तः । श्रद्धया -

इस प्रकार के यज्ञ-फलभोक्ता उस विशाल स्वर्गलोक का उपभोग करते हैं। पुण्यों के क्षय हो जाने पर फिर से इस मृत्युलोक में लौटकर प्रवेश करते हैं। भागों की कामना करने वाले इस प्रकार वेदोक्त कर्मकाण्ड के यज्ञादि अनुष्ठान करके बार-बार आवागमन करते रहते हैं ॥ २१ ॥

उपासकों की विशेषता बताते हुए कहते हैं कि—

मुझ परमात्मासे अन्य जिनका कोई प्रयोजन ही नहीं है ऐसे अनन्यभक्त सर्वदा मेरा ही चिन्तन करते हुए मेरी उपासना में ही संलग्न रहते हैं। मेरे साथ नित्ययोग की अभिलाषा ही उस भक्त के लिए मेरी प्राप्तिरूप 'योग' एवं वह प्राप्ति जिससे कभी बिलगाव न हो इस प्रकार का 'क्षेम' अर्थात् मंगल में ही प्राप्त करता हूं अर्थात् अपुनरावृत्ति रूप नित्य मेरा सान्निध्य में ही प्रदान करता हूँ ॥ २२ ॥

**ये प्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।**
**तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥२३॥**
**अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।**
**न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥२४॥**

विश्वासेन - आस्तिक्यबुद्धया । अन्वितास्सन्तः, यजन्ते - इन्द्रादीन् केवलकर्मभिराराधयन्ते । हे कौन्तेय ! तेऽपि । मामेव - सर्वशरीरकतया सर्वस्य मदात्मकत्वेन सर्वशब्दवाच्यम्मामेव । यजन्ते - वस्तुत आराधयन्ते । किन्तु, अविधिपूर्वकं - विधिः - विध्यर्थयाथात्म्यज्ञानं, पूर्वं - न विद्यते यस्मिन् कर्मणि - तद्यथा - तथा अविधिपूर्वकं । यजन्ति, 'चतुर्होतारो यत्र सम्पदं गच्छन्ति देवै' रित्यादि वेदान्तवाक्यानि कर्मस्विन्द्रादिदेवानामाराध्यतयाऽन्वयं यथाविधत्ति तथा तद्विधिज्ञानपूर्वकं न यजन्तीत्यर्थः । चतुर्होतार इत्यस्य ? चतुर्होतारः - अग्निहोत्र दर्शपूर्णमासादीनिकर्माणि, यत्र- परमात्मनि, आत्मतया सत्येव, देवैस्तच्छरीरभूतैरिन्द्रादिभिः, सम्पदं - इन्द्रादिदेवताराधनत्वरूपमतिशयं । गच्छन्ति - प्राप्नुवन्तीत्यर्थः ॥ २३ ॥

त्रैविद्यानाम विविपूर्वक यजनस्य फलमाह (अहमिति) अहं सर्वशरीरतया-इन्द्रादिरूपोऽहमेव । सर्वयज्ञानां सर्वेषान्त्रयीधर्माणां । भोक्ता - आराध्यश्च । प्रभुः - तत्र तत्र फलप्रदाता च । हि शब्देनास्यार्थस्य वेदान्तप्रसिद्धिद्योतयति । किन्तु - ते - त्रैविद्याः । मां, तत्त्वेन - सर्वेषां

हे कुन्ती पुत्र अर्जुन ! जो भक्त इन्द्रादि देवगण की श्रद्धापूर्वक उपासना करते हैं, वे यद्यपि मेरी ही उपासना करते हैं क्योंकि सब शरीरों में मैं ही सब शब्द से वाच्य हूँ, फिर भी वे विधि पूर्वक उपासना नहीं करते हैं। किन्तु वे उक्त यथार्थ ज्ञान से रहित होकर अविधिपूर्वक परोक्षभाव से मेरी आराधना करते हैं। २३ ॥

इन्द्रादि देवताओं के अन्तर्यामी रूप से मैं ही सम्पूर्ण वैदिक यज्ञादि कर्मों का प्रकृत आराध्य देवता (भोक्ता) एवं उनका फलदाता (प्रभु) रूप से वेद वेदान्त में प्रसिद्ध हूँ। किन्तु इन सम्पूर्ण यज्ञादिकों के अनुष्ठान करने वाले वे लोग मेरे उस यज्ञ भोक्ता और फलदाता रूप यथार्थ तत्व को नहीं जानते हैं अतएव वे मोक्षरूप योग एवं क्षेम से भ्रष्ट हो जाते हैं, अर्थात् वे लोग अपनी-अपनी प्रवृत्ति (स्वभाव) के अनुरूप सीमित फल प्राप्त करते हैं और उस फल को भोग लेने पर फिर से संसार चक्र में लौट आते हैं ॥ २४ ॥





**यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः ।**
**भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥२५॥**

कर्मणामिन्द्रादिशरीरकः परमात्मैवाराध्यः फलप्रदश्चेत्येवं रूपेण याथार्थ्येन । नाभिजानन्ति - न बुध्यन्ते । अतः - तत्त्वतोऽज्ञानाद्धेतोः । च्यवन्ति - भ्रश्यन्ति । सर्वथी तत्प्रवृत्तिवैफल्यमिति भावः ॥ २४ ॥

नन्वेकस्यैव कर्मणः कथं भोगमोक्षरूपविरुद्धफलसाधनत्वमित्याशंक्य संकल्पाख्य सहकारिवैचित्र्यात्तदुपपन्नमित्याह ( यान्तीति ) देवव्रता - अत्र व्रतशब्द स्संकल्पवाची । देवेषु - इन्द्रादिषु केवलेषु - व्रतं - दर्शपूर्णमासादीन्यक्ष्यामह इति यजनसंकल्पः - येषान्ते तथोक्ताः । देवान् - इन्द्रादीन् । यान्ति । पितृव्रताः - पितृषु - केवलेषु, व्रतं - पितृयज्ञादिभिः पितॄन्यक्ष्यामह इति यजनसंकल्पो येषान्ते तथोक्ताः । पितॄन् यान्ति । भूतेषु - केवलेषु यक्षरक्षः प्रभृतिषु, इज्या - अनेन कर्मणा यक्षादीन्यक्ष्यामह इति संकल्पपूर्वकं यजनं, येषान्ते तथोक्ताः । भूतानि यान्ति । मद्याजिनोऽपि - अनेन कर्मणा- सर्वज्ञं सत्यसंकल्पं परमकारुणिकं परमात्मानं यक्ष्यामह इति संकल्पपूर्वकं मामाराधयन्तस्तु पुरुषाः । मां यान्ति - अनादिनिधनं अनवधिकातिशया संख्येयकल्याणगुणगणं अनवधिकातिशयानन्दं मां प्राप्य पुनर्न - निवर्तन्ते ॥ २५ ॥

यः - अत्यर्थमतिप्रियः पुरुषः । भक्त्या - अत्यर्थप्रीतिरूपतामापन्नेन ज्ञानेन । मे - मह्यम् । पत्रम्, पुष्पम्, फलम्, तेषामभावे सर्वसुलभं तोयं वा । प्रयच्छति - तदेकप्रयोजनस्समर्पयति । प्रयतात्मनः - तत्प्रदानैक प्रयोजनत्वरूपशुद्धियुक्तमनसस्तस्य । भक्त्युपहृतम् - भक्त्या समर्पितम् । तत् - पत्रादिकमेव । अहम् - सर्वेश्वरोऽवाप्तसमस्तकामोऽपि । अश्नामि

वैदिक कर्मों के करने वाले अपने संकल्पानुसार फल प्राप्त करते हैं—जो लोग इन्द्रादि देवों और इन्द्र जैसे ऐश्वर्य प्राप्ति का संकल्प कर यज्ञादि कर्म करते हैं वे उन-उन देवताओं को ही प्राप्त होते हैं। एवं जो पितृलोक या यक्ष राक्षस आदि भूतगणों की प्राप्ति के लिए यज्ञादि करते हैं वे उन्हीं को प्राप्त करते हैं, किन्तु सब देवों के शरीरी, सर्वान्तर्यामी, परमेश्वर मुझ को प्राप्त करने के उद्देश्य से इस यज्ञ, आराधना को करते हैं, वे मुझको ही प्राप्त होते हैं और उनको संसार में पुनरागमन नहीं करना पड़ता है ॥ २५ ॥

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥२६॥
यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥२७॥

---

मनोरथपथदूरवर्तिप्रियं प्राप्येवाश्नामि । अत्र च "अन्यत्पूर्णादपांकुम्भा दन्यत्पादावनेजनात् । अन्यत्कुशल संप्रश्नान्न चेच्छति जनार्दनः ॥ याः क्रियास्संप्रयुक्ता स्स्युरेकान्तगत बुद्धिभिः । तास्सर्वाशिशरसादेवः प्रति गृह्णाति वैस्वयम् ॥ इत्यादिक मनुसन्धेयम् ॥ २६ ॥

यस्माज्ज्ञानिनामयमवाङ्मनसगोचरो विशेषः - तस्मात्त्वमपि ज्ञानी भूत्वा क्रियमाणं कर्मेत्थं कुर्वित्याह (यदिति) यत् - देहयात्राशेषभूतं लौकिकं कर्म । यदश्नासि - देहधारणाय यददनं करोषि । यज्जुहोषि - होमरूपं यद्वैदिकं कर्मकरोषि । यद्ददासि - दानरूपं यत्कर्मकरोषि । यत्तपस्यसि - तपोरूपं यत्कर्म करोषि । हे कौन्तेय ! तत्सर्वम् । मदर्पणं - अर्प्यत इत्यर्पणं - मय्यर्पितम् , कुरुष्व । अनुष्ठीयमानस्य सर्वस्य लौकिकस्य वैदिकस्य च कर्मणः कर्तृत्वं भोक्तृत्वमाराध्यत्वं चात्यन्तभक्तियुक्तो मय्यनुसन्धत्स्वेत्यर्थः ॥ २७ ॥

एवं - उक्तरीत्या । संन्यासयोगयुक्तात्मा - सन्न्यासः सर्वकर्मणाम्म-

---

कोई शुद्ध अन्तःकरण वाला व्यक्ति यदि भक्तिभाव से मुझे पत्र-पुष्प, फल या जल आदि कोई भी वस्तु मेरे उद्देश्य से अर्पण करता है, उस समय अवाप्त समस्त काम सर्वेश्वर में भक्ति से अर्पित उस पत्र पुष्पादि किंचित् उपहार को भी प्रेम पूर्वक ग्रहण करता हूँ । तुच्छ होने पर भी मुझ में अत्यन्त प्रीति ही उसके स्वीकार में कारण है । इस श्लोक में भगवत् प्राप्ति में सुलभता दिखाई गयी है ॥ २६ ॥

पूर्वोक्त उपदेश के अनुसार तुम भी सब कार्यों को इसी प्रकार करते जाओ—

हे अर्जुन ! तुम जो भी कर्म करो चाहे वह भोजन, दान, यज्ञ या तपस्या आदिक जो भी वैदिक कर्म करो उन सबको मेरे अर्पण कर दो अर्थात् तुम से किये गये या आचरित जितने लौकिक एवं वैदिक कर्म हैं सबका कर्ता, भोक्ता एवं आराध्य में ही हूँ । इस प्रकार का अनुसन्धान करते हुए सम्पूर्ण कर्मों को करो ॥ २७ ॥





शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपेष्यसि ॥२८॥
समोहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥२९॥

---

य्यर्पणं - स एवयोगः - अनुसंधानं, तेन युक्तः - आत्मा - मनः - यस्य स तथोक्तः । त्वं । शुभाशुभफलैः - शुभानि अनुकूलानि, अशुभानि - प्रतिकूलानि च - फलानि - येषां तैस्तथोक्तैः । कर्मबन्धनैः - कर्माणिप्राचीनान्येव - बन्धनानि मत्प्राप्तिप्रतिबन्धकानि - तैः । विमोक्ष्यसे मुक्तो भविष्यसि । विमुक्तस्सन् । मामेव, उपैष्यसि ॥ २८ ॥

अथजात्याकारादिकृततारतम्यानादरेण भवतेषु स्वस्यैकरस्यमाह (समइति ) अहम् । सर्वभूतेषु - जात्याकारादिभिरुत्कृष्टापकृष्टतया वर्तमानेषु देवतिर्यङ्मनुष्यादिसमस्तभूतेषु । समः - समाश्रयणीयत्वे तुल्यः । तदेव स्फुटीकरोति । मे - मम । द्वेष्यः - जात्याकारादिभि निकृष्टतया समाश्रयणे परिहरणीयः । न विद्यते । प्रियः - जात्यादिभिरुत्कृष्टतया समाश्रयणे संग्राह्योपि । न विद्यते । एवं तर्हि - स च मम प्रिय इत्युक्त्या प्रियत्वं विरुध्यत इत्यत्राह ( यइति ) तु शब्दश्शंका निरासार्थः । ये - जात्यादिभिरुत्कृष्टा वा अपकृष्टा वा । भक्त्या । मां । भजन्ति-उपासते ।

---

उपर्युक्त प्रकार से लौकिक एवं वैदिक सम्पूर्ण कर्मों को मुझे अर्पणरूप संन्यास योगयुक्त होकर अर्थात् समस्त कर्मों को मेरी आराधनारूप भावना करके अनुष्ठान करने से, तुम पाप एवं पुण्यरूप कर्मबन्धन से विमुक्त होकर मुझे ही प्राप्त होंगे ॥ २८ ॥

मेरे समाश्रयण में देव मनुष्य आदि और ब्राह्मण शूद्रादि कोई भी तारतम्य नहीं है । बिना किसी सोच विचार के सबके लिए में शरण्यरूप से समान हूँ । मेरे निकट आश्रय ग्रहण करते समय जाति और आकार प्रभृति की निकृष्टता कारण है, मेरा कोई द्वेष्य या त्यागने योग्य भी नहीं है । जो मेरा आश्रय ग्रहण करना चाहता है उनके लिए जाति आदिक का विचार बिना किये निरपेक्ष भाव से सभी को मैं आश्रय देता हूँ । किन्तु जो लोग भक्ति पूर्वक मेरी सन्निधि में मेरा भजन करते हैं वे जात्यादि के विचार बिना ही मेरे पास विहार करते हैं । मैं भी उनके निकट समान भाव से विहार करता हूँ ॥ २९ ॥

**अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।**
**साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥३०॥**
**क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।**
**कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥३१॥**

---

ते । मयि । वर्तन्ते - मत्समाना इव यथासुखं मयि व्यवहरन्ति । तेषु च - अहमपि । वर्ते उत्कृष्टेष्विवव्यवहरामि "निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शिनम् । अनुव्रज्याम्यहं नित्यं पूययेत्यंघ्रिरेणुभिः" इत्यादिकत्रानुसन्धेयम् ॥ २९ ॥

समाश्रयणे जात्याद्यपकर्षो प्रयोजक इत्युक्तं ॥ तथा वृत्तापकर्षश्चा प्रयोजक इत्याह (अपीति) सुदुराचारः - सुष्ठुदुराचारः - तत्तज्जात्याद्युचिताचार विपरीताचार विहिताकरणात्रिहितकरणरूपदुष्टाचारो यस्य सतथोक्तोऽपि । अनन्यभाक् - भजनैकप्रयोजनस्सन् । मां । भजते चेत् उक्तप्रकारेणोपास्ते यदि, सः, साधुरेव वैष्णवाग्रेसर एव । मन्तव्यः - बहुमन्तव्यः । कुत एतदित्यतआह (सम्यगिति) हि - यस्मात्कारणात् । सः - सम्यक् । समीचीनं यथा तथा । व्यवसितः - व्यवसायं कृतवान् । भगवान्नारायण एव चराचरपतिरस्मत्स्वामीपरमभोग्य इत्येवं रूपदृढ़ाध्यवसाय इति भावः ॥ ३० ॥

अस्त्वयमन्येषां बहुमन्तव्यः, तस्य तु न कार्यसिद्धिः - "नाविरतो

---

**अत्यन्त दुराचारी होकर भी यदि कोई भजन करना ही एकमात्र प्रयोजन मानकर एवं अन्य देवता का भजन या अन्य किसी भी फल की आकांक्षा न कर मेरी ही उपासना करता है, तब मैं उसे साधु पुरुष मानकर ही वर्ताव करता हूँ । क्योंकि वह परमेश्वर भगवान का भजन रूप समीचीन विषय में दृढ़ भाव से अध्यवसाय करता है ॥ ३० ॥**

**मेरा अनन्य भाव से भजनशील भक्त यदि दुराचारी भी हो तब भी उसका वह दुराचार मेरी भजनशीलता द्वारा शीघ्र ही नष्ट हो जाता है, एवं शीघ्र ही उसका भजन प्रवाह बढ़ जाता है और वह अपुनरावृति रूप नित्य शांन्ति लाभ कर लेता है । हे कौन्तेय ! तुम भी यह रहस्य जानो कि मेरा भक्त दुराचारी होने पर भी कभी नष्ट नहीं होता है अर्थात् मेरा भजनशील व्यक्ति जन्म मृत्यु को अतिक्रमण कर नित्य शान्ति लाभ करता है ॥ ३१ ॥**





**मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।**
**स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यांति परां गतिम् ॥३२॥**

---

दुश्चरिता" दिति श्रुते राचारव्यतिक्रमस्योत्तरोत्तर भजनोत्पत्ति प्रवाह निरोधित्वादित्यत्राह (क्षिप्रमिति) दुराचारोऽपि । क्षिप्रमेव - शीघ्रमेव । धर्मात्मा - धर्मे - सपरिकरेऽनन्यमद्भजनरूपधर्म एव, आत्मा - मनः यस्य- स तथोक्तः । भवति - उपासनप्रतिबन्धकरजस्तमोमूलभूत पापनिवृत्त्यर्थो हि सदाचारः, तादृशे पापेऽनन्य प्रयोजनमद्भजनोपक्रमेण निवृत्ते सति प्रतिबन्धकाभावादविलम्बेनैव मद्भजनप्रवाहैकमना भवतीत्यर्थः ॥ शश्वत् - शाश्वतीं - अपुनरावर्तिनीम् । शान्तिं - मत्प्राप्तिविरोध्याचारनिर्वृत्तिं च । नियुच्छति । हे कौन्तेय ! प्रतिजानीहि - त्वमेवास्मिन्नर्थे प्रतिज्ञांकुरु । प्रतिज्ञातव्यमर्थमाह ( नेति ) मे - मम । भक्तः - भक्तावुपक्रान्तः । न प्रणश्यति - विरोध्याचार मिश्रापि न नश्यति । अपि तु - भक्त्युपक्रममाहात्म्येन सर्वं विरोधिजातं विधूय विरुद्धाचारशांति मप्यधिगम्य शीघ्रमेव परिपूर्णभक्ति र्भवतीत्यर्थः ॥ ३१ ॥

जात्युत्कर्षे भक्तिपौष्कल्यञ्च कैमुत्यन्यायेन परमगतिप्राप्तिं वदन् जात्यादिभिरुत्कृष्टस्त्वमपि फले निस्सन्देह उपायमनुतिष्ठेत्याह "मांही"- त्यादि श्लोकद्वयेन । हे पार्थ ! पापयोनयः - पापजन्मानोऽपि । ये । स्त्रियः । वैश्याः । शूद्राश्च । स्युः - सन्ति । तेपि । माम् । व्यपाश्रित्य । पराम् । गतिं । यांति हि ॥ ३२ ॥

पुण्याः - पुण्ययोनयः । भक्ताः - मयि भक्तिमन्तः । ब्राह्मणाः - द्विजाः । तथा । राजर्षयः - ऋषितुल्याः - राजानः - क्षत्रिया श्च । किं पुनः - परां गतिं यान्तीति किं वक्तव्यम् । अनित्यं - अस्थिरम् । असुखं -

---

**भक्ति मार्ग में सबका समान अधिकार है, सभी परागति प्राप्त कर सकते हैं—हे पार्थ ! स्त्री, वैश्य शूद्र आदिक निकृष्ट योनि में जन्म ग्रहण करने पर भी वे यदि मुझे सम्यक् रूप से आश्रयण करते हैं तो वे उत्कृष्ट गति ही प्राप्त करते हैं ॥ ३२ ॥**

**पुण्ययोनि में पैदा होने वाले एवं भक्तिमान्, ब्राह्मण एवं ऋषितुल्य राजा आदिकों की बात ही क्या कही जाय ? अर्थात् वे निश्चय ही उस परागति को प्राप्त**

किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥३३॥
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैव मात्मानं मत्परायणः ॥३४॥

॥ इति श्रीमद्भगवद्गीतायां नवमोऽध्यायः ॥ ९ ॥

---

तापत्रयाभिभूततया दुःखरूपम् । इमं - अतिक्षुद्रम् । लोकम् । प्राप्य । वर्तमानो राजर्षि स्त्वम् । माम् भजस्व - मद्भक्तिमनुतिष्ठ ॥ ३३ ॥

भक्तिस्वरूपमाह (मन्मना इति) मद्भक्तः - मय्यत्यर्थप्रीतियुक्तस्सन् । मन्मनाः - मय्येव, मनः - तैलधारावदविच्छिन्नस्मृतिसन्तानरूपा मनोवृत्तिः, यस्य स तथोक्तः । भव । तथा । मद्याजी - परिपूर्णशेषवृत्तिरूपमद्यजनशीलः । भव । किञ्च । माम् नमस्कुरु - मयि मनसोऽतिमात्रप्रह्वीभावव्यवसायरूपं नमस्कारं कुरु णमु प्रह्वत्व इति धातुः । एवं - उक्तरूपं मन्नमस्कार मद्यजनमद्भक्तियुक्त मदेकविषयवृत्तिविशेषवन्त मित्यर्थः । आत्मानं - मनः । युक्त्वा - लब्ध्वा । मत्परायणः - अहमेव परमयनं यस्य स तथोक्तः, मया विनात्मधारणाशक्त्या मदेकाश्रय इत्यर्थः । मामेव । एष्यसि - प्राप्स्यसि ॥ ३४ ॥

इति श्रीमद्भगवद्गीताभाष्यार्थसंग्रहतात्पर्यदीपे श्रीवरवरमुनिविरचितायां बालबोधिन्यपराभिधानायां गीतार्थ-
संग्रहदीपिकायां
नवमोऽध्यायः ॥ ९ ॥

---

होंगे, इसमें सन्देह नहीं । इसलिए तुम अनित्य, दुःखमय, मर्त्यलोक को प्राप्त हो उससे मुक्त होने के लिए मेरा भजन करो ॥ ३३ ॥

अब भक्ति का स्वरूप बताते हैं—

तुम मुझ में अत्यन्त प्रीति युक्त होकर निरन्तर व्यवधान रहित होकर मुझ में ही मन को लगाओ । मेरे भजनशील बनो, एवं अत्यन्त प्रेम युक्त होकर मुझे नमस्कार करो । इस प्रकार अत्यन्त प्रीति युक्त एवं सर्वतोभावेन मुझ में चित्त लगाकर मेरे परायण होने से तुम मुझको ही प्राप्त होंगे ॥ ३४ ॥

॥ श्रीमद् भगवद्गीता के हिन्दी अनुवाद का राजविद्या—राजगुह्य योग नामक नवम अध्याय समाप्त हुआ ॥



श्रीरस्तु ।

# अथ दशमोऽध्यायः

श्रीभगवानुवाच—

भूय एव महाबाहो शृणु मे परमं वचः ।
यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ १ ॥

---

एवं सपरिकरो भक्तियोग उक्तः । इदानीं भक्त्युत्पत्तये तद्विवृद्धये च भगवतो निरंकुशैश्वर्यादिकल्याणगुणानन्त्यं प्रपंच्यते । हे महाबाहो ! मे - मम । परमं - उत्कृष्टतमं । वचः । भूय एव - पुनरपि । शृणु सावधानमाकर्णय । किन्तद्वच इत्यत्राह । प्रीयमाणाय - मदीयमाहात्म्यश्रवणेऽतिमात्रप्रीतिमते । ते - तुभ्यम् । हितकाम्यया - भक्त्युत्पत्तिविवृद्धिरूपहितकामनया । अहं । यत् - वचः । वक्ष्यामि - कथयिष्यामि ॥ १ ॥

---

## दशम अध्याय

### ( विभूतियोग अध्याय का संग्रहार्थ )

स्वकल्याणगुणानन्त्याकृत्स्नस्वाधीनतामतिः ।
भक्त्युत्पत्तिविवृद्धार्था विस्तीर्णा दशमोदिता ॥
(गीतार्थसंग्रह १४)

भक्ति का उदय एवं भक्तिविषयक वृद्धि के लिए श्रीभगवान की अनन्तगुण राशि एवं इस लोक परलोक के सम्पूर्ण पदार्थ उन प्रभु के एकमात्र अधीन हैं और विभूति स्वरूप ये दो विषय इस अध्याय में विशद रूप से कहे गये हैं ।

श्रीभगवान बोले हे अर्जुन ! मैं तुम से अब सर्वोत्तम बात कहता हूं । तुम फिर से सावधान मन से उसे श्रवण करो । तुम मेरे अतिशय प्रेमपात्र तुम हो । तुम्हारी हित कामना के लिए मैं तुम से कहता हूं ॥ १ ॥

**न मे विदुः सुरगणाः प्रभवं न महर्षयः ।**
**अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ २ ॥**
**योमामजमनादिं च वेत्ति लोकमहेश्वरम् ।**
**असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ ३ ॥**

---

वक्ष्यमाणज्ञानस्यादरणीयत्वसिद्धये दुर्लभत्वमाह (नमइति) मे - मम। प्रभवं - प्रभवं - माहात्म्यम्। सुरंगणाः - अधिकतरज्ञाना ब्रह्मादिदेवगणा अपि। न विदुः - न जानन्ति। महर्षयः - अतीन्द्रियार्थ द्रष्टारोब्रह्मर्षयोपि। न विदुः। तत्रहेतुमाह॥ हि - यस्मात्कारणात्। देवानाम्। महर्षीणां च। सम्बन्धिनः। सर्वशः - सर्वस्य च स्वरूपज्ञानशक्त्यादेः। अहमेव। आदिः कारणम्। तेषांदेवत्वमर्हषित्वावाप्तिहेतुपुण्यानुगुण्येन मयादत्तं ज्ञानशक्त्यादिकं परिमितम्, अतो मां यथावन्नज्ञातुं शक्नुवन्तीति भावः। अत्र - "यन्नदेवा न मुनयो न चाहं न च शंकरः। जानन्ति परमेशस्य तद्विष्णो परमंपद"मित्यादिकमनुसन्धेयम् ॥ २ ॥

देवाद्यचिन्त्य स्वमाहात्म्यज्ञानस्य भक्त्युत्पत्तिविरोधि पापविमोचनोपायतामाह (य इति) मर्त्येषु - मनुष्यषु मध्ये। असम्मूढः - इतर सजातीयतयैकीकृत्यमोहः - सम्मोहः, तद्रहितः। यः - मनुष्यः। नजायत इत्यजं- कर्मकृताचित्संसर्गरूपजन्मरहितं। अनेनविकारिद्रव्यादचेतनात्तत्संसृष्टबद्धचेतनाञ्च वैलक्षण्यमुक्तम्, सहिकर्मकृताचित्संसर्गरूपजन्मवान्। कदाचिदजत्वम्मुक्तस्याप्यस्तीति तद्वैलक्षण्यार्थं माह (अनादिमिति) अजत्वेनानादिं चेत्यर्थः। मुक्तस्यह्यजत्वंकादाचित्कं, नत्वनादि, ततोऽस्यवैलक्षण्यम्। एतादृशम्। माम्। लोक महेश्वरं - लोकानां - सर्वावस्थावस्थित समस्तचिदचिद्वस्तूनां, महान्तं, ईश्वरं, तन्नियमनैकस्वभावतया तद्विलक्षणमित्यर्थः।

---

**मेरा माहात्म्य ब्रह्मादि देवगण एवं महर्षिजन भी नहीं जानते हैं, क्योंकि सम्पूर्ण देवता और महर्षियों के ज्ञान शक्ति आदि सम्पूर्ण विषयों का मैं ही आदि कारण हूँ ॥ २ ॥**

**इस लोक में जो मनुष्य मुझे जन्म रहित, अनादि एवं सब लोकों का महानियन्ता जानता है, वह मेरी प्राप्ति में विरोधी समस्त पापों से मुक्त हो जाता है ॥ ३ ॥**





**बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।**
**सुखं दुःखं भवो भावो भयं चाभयमेव च ॥ ४ ॥**
**अहिंसा समता तुष्टि स्तपो दानं यशोऽयशः ।**
**भवन्ति भवा भूतानां मत्त एव पृथग्विधाः ॥ ५ ॥**

---

अनेन नित्यसिद्धेभ्योपि तस्यवैलक्षण्यमुक्तम्। वेत्ति - जानाति। सः। सर्वपापैः - मद्भक्त्युत्पत्तिविरोधि समस्तकिल्विषैः। प्रमुच्यते - विमुच्यते ॥ ३ ॥

एवं स्वस्वभावानुसन्धानाद्भक्त्युत्पत्तिविरोधिपापनिरसनमुखेन भक्त्युत्पत्तिं प्रतिपाद्य स्वकीयैश्वर्यकल्याणगुणप्रपंचानुसन्धानेन भक्तिविवृद्धिप्रकार माह (बुद्धि रित्यादि) बुद्धिः - मनसो निरूपण सामर्थ्यम्। ज्ञानं - चिदचिद्वस्तुविषयो निश्चयः। असम्मोहः - सम्मोहस्य निवृत्तिः, सम्मोहो नामपूर्वदृष्टरजतादे विजातीये शुक्ति कादौ तत्सजातीयता बुद्धिः। क्षमा - कोपादिमनोविकारहेतौ सत्यप्यविकृतचित्तत्वम्। सत्यं - यथादृष्टविषयभूतहितरूपवचनानुगुणा मनोवृत्तिः। दमः - बाह्येन्द्रियाणा मसद्विषयेभ्यो नियमनम्। शमः - अन्त रिन्द्रियस्य तथा नियमनम्। सुखं - अनुकूलानुभवः। दुःखं - प्रतिकूलानुभवः। भवः - अनुकूलानुभवजनितं मनस्स्वास्थ्यम्। अभावः - प्रतिकूलानुभवजनितो मनसोऽवसादः। भयं - आगामिदुःखस्य हेतु दर्शनजनितं दुःखं च। अभयं - तन्निवृत्तिरेव च ॥ ४ ॥

अहिंसा - परदुःखाहेतुत्वम्। समता - विद्याविनयसम्पन्न इत्याद्युक्तसमदर्शित्वम्, तुष्टिः सर्वेष्वात्मसु हृष्टेषु सन्तोषस्वभावत्वम्। तपः-शास्त्रीयो भोगसंकोचरूपः कायक्लेशः। दानं - स्वकीयभोग्यानां परस्मै प्रतिपादनम्।

---

**पूर्व श्लोकों में भक्ति की उत्पत्ति में विरोधी पाप के विनाशोपाय कहे अब दो श्लोकों में उस भक्ति के सम्वर्धन के लिए भगवान के विभिन्न ऐश्वर्यों के चिन्तन की बात कहते हैं —**

**किसी भी विषय में निश्चयात्मिका बुद्धि, ज्ञान, मोह रहित भाव, क्षमा, सत्य कही जाने वाली मनोवृत्ति, चक्षुकर्ण आदि बाह्य इन्द्रियों का नियमन, सुख-दुःख, मन की प्रफुल्लता और अवसाद, भय, अभय, अहिंसा, सन्तोष, कायक्लेश रूप तपस्या की इच्छा, सत्पात्र में दान, यश, अयश प्रभृति, देवमनुष्यादि जीवों की विभिन्न प्रकार की मनोवृत्ति सब मेरे ही संकल्प के आधीन जानो ॥ ४-५ ॥**

**महर्षयस्सप्त पूर्वे चत्वारो मनवस्तथा ।**
**मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥ ६ ॥**
**एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।**
**सोऽविकम्प्येन योगेन युज्यते नात्र संशयः ॥ ७ ॥**

---

यशः - गुणवत्ताप्रसिद्धिः । अयशः - गुणहीनत्वप्रथा । अत्र तपोदानादिचतुष्टयं तदनुगुणमनो वृत्तिविषयम्मन्तव्यम् । एवमादयः । पृथग्विधाः - नाना - प्रकाराः । भूतानां - देवमनुष्यादीनाम् । भावाः - प्रवृत्तिहेतवो मनोवृत्तयः । मत्त एव - मत्सङ्कल्पादेव । भवन्ति ॥ ५ ॥

सर्वस्य भूतजातस्य सृष्टिस्थितिप्रवर्तकतया प्रसिद्धा अपि मत्संकल्पायत्त-प्रवृत्तिका इत्याह ( महर्षय इति ) पूर्वे - अतीतमन्वन्तरस्थाः । मानसाः - नित्यसृष्टिप्रवर्तनाय ब्रह्मणो मनस्सम्भूताः । सप्त महर्षयः - भृग्वादयः । तथा । चत्वारः । मनवः - सावर्णिका नाम स्थितिहेतव श्चत्वारो मनव श्च । मद्भावाः - मम भावोऽभिप्राय एव भावो येषां ते तथोक्ताः - मत्सङ्कल्पानु - वर्तिन इत्यर्थः । तानेव विशेषयति ( जाता इति ) येषाँ - महर्षीणाम् । लोके - पुत्रपौत्रादि सन्तानमये ऽस्मिन् लोके । इमाः । परिदृश्यमानाः । प्रजाः । जाताः । ते मद्भावा इति पूर्वेणान्वयः ॥ ६ ॥

एतां - सर्वस्योत्पत्ति प्रवृत्ति नियमनरूपाम् । मम । विभूतिं - ऐश्वर्यम् । एतम् । मम । योगं च - अखिलहेय प्रत्यनीकानवधिकातिशया संख्येयकल्याण गुणगणयोगश्च । तत्त्वतः - तत्त्वेन - अबाधिताकारेण । यः ।

---

**सृष्टि-स्थिति करने वाले भृगु आदिक ऋषियों एवं मन्वादिकों की यह सब प्रवृत्ति मेरे ही सङ्कल्प के आधीन है—**

**पूर्व पूर्व मन्वन्तरों में ब्रह्मा के मानसपुत्र भृगु आदिक सप्तर्षिगण जो सृष्टि के प्रवर्त्तक हैं, जिससे इस जगत की प्रजा की उत्पत्ति स्थिति होती है, इन सबकी सम्पूर्ण प्रवृत्तियाँ मेरे ही सङ्कल्प के आधीन है ॥ ६ ॥**

**सब जीवों की उत्पत्ति, स्थिति, प्रवृत्ति एवं नियमन मेरे आधीन है ।**

**सृष्ट समस्त जीवरूप मेरी यह विभूति एवं अखिलहेय रहित, असंख्य कल्याण-गुणों का योग अर्थात् सृष्टत्व आदिक को जो व्यक्ति यथार्थ रूप से जान पाता है वह अचल भक्तियोग युक्त हो जाता है, इसमें कोई सन्देह नहीं है ॥ ७ ॥**





**अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते ।**
**इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ८ ॥**
**मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।**
**कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ ९ ॥**

---

वेत्ति - जानाति । सः । अविकम्प्येन - बाधकशतेनाप्यविचाल्येन, अशक्य - कम्पनेनेतियावत् । योगेन - पूर्वोक्तलक्षण भक्तिरूपोपायेन । युज्यते - सम्ब - ध्यते । अत्र - अस्मिन्नर्थे । संशयः । नास्ति, नकर्तव्यइत्यर्थः । मद्विभूतिगुण - विषयं ज्ञानं भक्तियोगविवर्धकमित्यमुमर्थं स्वयमेव द्रक्ष्यसीतिभावः ॥ ७ ॥

स्वविभूतिगुणज्ञानविपाकरूपां भक्ते र्विवृद्धिं दर्शयति ( अहमिति ) अहम् । सर्वस्य - विचित्र चिदचित्प्रपञ्चस्य । प्रभवः - उत्पत्तिकारणम् । मत्त-एव सर्वं - जगत् । प्रवर्तते । इति - एवं रूपं मम स्वाभाविकं निरंकुशैश्चर्यं । जगत्कारणत्वोक्त्या तदुपयोगि कल्याणगुणयोगञ्चेत्यर्थसिद्धम् । मत्वा - ज्ञात्वा । बुधाः - ज्ञानिनः । भावसमन्विताः - मयि स्पृहावन्त स्सन्तः । मां - समस्तकल्याणगुणाकरम् । भजन्ते । भक्त्योपासते ॥ ८ ॥

तेषां स्पृहारूपभावसमन्वितत्वमेव प्रपञ्चयति ( मच्चित्ता इति ) मच्चित्ताः - मय्येव निवसितमनसः । मद्गतप्राणाः - मद्गतजीवाः, मया विना क्षणमपि धारणमलभमाना इत्यर्थः । परस्परं - अन्योन्यम् । बोधयन्तः- स्वस्व विदितान् मत्कल्याणगुणविशेषानज्ञातान् ज्ञापयन्तः । मां - दिव्याद्भु-तातिरमणीयजन्मकर्माणम् । नित्यं - नित्यैर्नैमित्तिकानुष्ठानानवरुद्धकालादि ष्वनवरतम् । कथयन्तः - मत्कथाश्रवणकण्डूलकर्णकुहरेभ्यो वदन्तश्च सन्तः ।

---

**अब दो श्लोकों में भक्ति किस प्रकार बढ़ती है, बताते हैं—**

**सब जीवों की उत्पत्ति और स्थिति का मैं ही कारण हूँ एवं समस्त प्राणियों समस्त प्राणियों की प्रवृत्तियों का भी मैं ही कारण हूँ । इस प्रकार मुझमें जगत्-कारणत्व एवं कल्याणगुणाकरत्व जान लेने पर ऐसा ज्ञानीजन मेरे प्रति अतिशय प्रीतियुक्त होकर मेरा भजन करता है ॥ ८ ॥**

**जो मुझमें चित्त लगाये हैं एवं मुझमें ही जिनके प्राण अटके हुये हैं वे लोग अपने अनुभूत मेरे रूप, गुण, लीला और विभूति की बात एक दूसरे को समझाकर एवं परस्पर इस विषय की आलोचना करके सर्वदा सन्तोष और सुख का लाभ करते रहते हैं ॥ ९ ॥**

**तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।**
**ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥१०॥**
**तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।**
**नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥११॥**

---

तुष्यन्ति च - कथका स्तत्कथनेनानन्यप्रयोजनेन सन्तुष्यन्ति च। रमन्ति च - श्रोतार स्तत्कथाश्रवणेनात्यर्थप्रियेण क्रीडन्ति च ॥ ९ ॥

भगवद्गुणविभूतिज्ञानस्य भक्त्युत्पत्तिविवृद्धिहेतुत्वमुक्तम्। अथ तथा-विधविवृद्धभक्ते भंगवत्प्राप्तिपूर्वभाविविशदतमसाक्षात्काररूपावस्था विशेष-हेतुत्वं भगवत्प्रसादद्वारक माह (तेषामिति) सततयुक्तानां - मयि सतत-योगाशंसावतां, नित्यं - मत्संश्लेषाभिलाषिणामित्यर्थः । तदर्थम्। भजतां - भक्ति कुर्वताम्। तेषां - बुधानाम्। अहम्। तम्। बुद्धियोगं - भावनाप्रकर्षेण प्रत्यक्षवद्विशदतमबुद्धिरूपमुपायम्। प्रीतिपूर्वकं - तद्भक्तिजनितः कोपि निर-तिशयो यो मनः प्रसादः - तत्पूर्वकं यथा तथा। ददामि। येन - बुद्धियोगेन। ते - बुधाः। माम्। उपयान्ति - प्राप्नुवन्ति ॥ १० ॥

उक्तबुद्धियोगोत्पत्तिविरोधिनिवृत्तिमाह (तेषा मेवेति) अनुकम्पा-र्थमेव - अनुग्रहायैव अहं - कल्याणगुणविग्रहविशिष्टोऽहम - तेषां आत्मभावस्थः आत्मभावे मनोवृत्तौ तिष्ठतीति तथोक्तः, मनोवृत्तिविषयो भूत्वा मत्कल्याण-गुणान् प्रकाशयन्नित्यर्थः। भास्वता - परितः प्रकाशमानेन, मदीय सर्वप्रकार-प्रकाशकेन । ज्ञानदीपेन - मद्विषयविशदतमानुभवरूपेण दीपेन । अज्ञानजं अज्ञानविरोधि प्राचीनकर्मजनितम्। तमः मत्साक्षात्कारप्रतिबन्धक मद्व्यति-

---

उक्त भगवद् भक्ति की परिपक्व अवस्था की प्राप्ति में कारण या उपाय जो भगवद्कृपा है, उसके बारे में बताते हैं—

जो निरन्तर मेरे संश्लेष की अभिलाषा करके मेरा भजन करते हैं, उन्हें मैं उसके लिये उपयुक्त ज्ञान और बुद्धि प्रदान करता रहता हूं। उस ज्ञान या बुद्धि के द्वारा वे मुझे प्राप्त होते हैं ॥ १० ॥

इस बुद्धि के उदय का प्रतिबन्धक कैसे हटाया जा सकता है—

जो लगातार मेरे संश्लेष के लिये लालायित रहते हैं, ऐसे उन भक्तों अर्थात् सब ओर प्रकाश करने वाले मद्विषयक ज्ञानरूप दीपक के द्वारा उनके विषयों के प्रति प्रावण्य से होने वाले अन्धकार या अज्ञान को नष्ट कर देता हूँ ॥ ११ ॥





**परं ब्रह्म परं धाम पवित्रं परमं भवान् ।**
**पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥१२॥**
**आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।**
**आसितो देवलो व्यासस्स्वयं चैव ब्रवीषि मे ॥१३॥**

---

रिक्तविषय प्रावण्यरूपमन्धकारम्। नाशयामि निवर्तयामि। मदनुग्रहायत्तनि-रतिशयभोग्यकल्याणगुणविशिष्टमद्विषयविशदानुभवलाभे सति सवासन प्राचीन कर्मरूपाज्ञाननिवृत्तेः पूर्वाभ्यस्तविषयान्तरप्रावण्यं स्वयमेवनिवर्तते, नहि महा-र्हमिन्द्रनीलमर्णि लब्धवतः काचकरीषाद्यभिलाषा भवन्ति ॥ ११ ॥

एवं शृण्वतां निरतिशयानन्दजनकं भगवतोक्तं भगवदसाधारणं कल्याणगुणविभूतियोगं श्रुत्वा विस्तरेण श्रोतुमर्जुनः पृच्छति "पर" मित्या-दिना। परं - यतोवा इमानि भूतानि जायन्त इत्याद्युक्तरीत्या कृत्स्नजगत्का-रणभूतम् ब्रह्म। परं - तमेवभान्तमनुभाति सर्वं तस्य भासासर्वमिदं विभाती-त्याद्युक्तरीत्या स्वेतरसमस्तज्योतिषां प्रकाशकम्। धाम - ज्योतिः। परमं - उत्कृष्टतमम्। पवित्रं - " तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेत ॥ तद्यथा पुष्कर-पलाश आपो नश्लिष्यन्ते " इत्याद्युक्तरीत्यास्वाश्रितानां पूर्वोत्तराघविनाशा श्लेषरूपशुद्धिकरं च वस्तु। भवान् - त्वमेव। किं तत्र प्रमाणमित्यत्राह - 'पुरुषमि'त्यादिसार्धश्लोकेन। सर्वे ऋषयः - परापरवस्तुतत्त्वयाथात्म्यवेदिनः। त्वां - देवकीवसुदेवतनयतया ऽवतीर्णं त्वामेव। शाश्वतं - सनातनम्। दिव्यं। दिवि - तमसः परस्ताद्वर्तमानं। पुरुषं - अमृतत्रिपाद्विभूतिविशिष्टतया पुरुष-सूक्तप्रतिपाद्यं महापुरुषम्। आदिदेवं - आदिश्चासौ देवश्चादिदेवः - आदिः - जगत्कारणभूतः. दीव्यति क्रीडतीतिदेवः - " क्रीडा हरेरिदं सर्वम् " "बालः - क्रीडनकैरिव " इत्याद्युक्तरीत्या क्रीडारूपजगद्व्यापार इत्यर्थः, तम्। अजं - कर्मकृतजन्मादिरहितम्। विभुं - सर्वव्यापकम्, सर्वनियन्तारं वा। आहुः - ऐककण्ठ्येन वदन्ति। तथा। देवश्चासावृषिश्च देवर्षिः। नारदः। असितः -

---

भगवद् विभूतियों की कथा भगवान से सुनने को अग्रिम आठ श्लोक हैं— अर्जुन ने कहा—आप परब्रह्म, परज्योति एवं परमपवित्र शुद्ध करने वाले हैं। तत्व-द्रष्टा ऋषियों ने आपको सनातन, दिव्यपुरुष, आदिदेव, जन्मरहित एवं सर्वव्यापक विभु कहकर गान किया है। देवर्षि नारद, असित, देवल एवं पराशरपुत्र व्यासजी ने भी इसी प्रकार से कहा है। स्वयं आपने इस विषय में मुझसे इसी प्रकार कहा है ॥ १२ - १३ ॥

**सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।**
**न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः ॥१४॥**
**स्वयमेवात्मनाऽऽत्मानं वेत्थ त्वं पुरुषोत्तम ।**
**भूतभावन भूतेश देवदेव जगत्पते ॥१५॥**

---

असितनामकः । देवलः - देवलाख्यः । व्यासः - पाराशर्यश्च । आहुः । तच्च - वचनं तत्तत्प्रणीतस्मृतीतिहासपुराणान्येवेतिभावः । "येच वेदविदोविप्रा येचा - ध्यात्मविदोजनाः । तेवदन्तिमहात्मनं कृष्णं धर्मं सनातनम् । पवित्राणां हि - गोविन्दः पवित्रं परमुच्यते । पुण्यानामपि पुण्योऽसौ मङ्गलानां च मङ्गलम् । एषनारायणः श्रीमान् क्षीरार्णवनिकेतनः । नागपर्यङ्कमुत्सृज्य ह्यागतो मथुरां - पुरीं । पुण्याद्वारवती तत्र यत्रास्तेमधुसूदनः, साक्षाद्देवः पुराणोऽसौवासुदेवस्स- नातनः" इत्यादिकमिहानुसन्धेयम् । किं च । स्वयमेव - ब्रह्मादीनामपिगुरु - स्त्वमेव । मे - मह्यम् । त्वाम् । उक्तरूपम् । ब्रवीषि - वदसि । "भूमिरापो - ऽनलो वायुः । यो मामजमनादिं च वेत्ति लोकमहेश्वर" मिति त्वयेव ह्युक्त मितिभावः ॥ १३ ॥

हे केशव - ब्रह्मरुदयोरपिकारणभूत । मां - शिष्यं शरणागतं च मां प्रति । यत् - त्वदसाधारणं निरंकुशैश्वर्यं कल्याणगुणानन्त्यं च । वदसि । एतत् । सर्वम् । ऋतं - सत्यम् । मन्ये । न प्रशंसापरं - श्रुतिसिद्धत्वादृषि - वचनादाप्ततमेन त्वया चोक्तत्वादिति भावः । हे भगवन् - निरतिशय ज्ञान - बलैश्वर्य वीर्यशक्तितेजोनिधे । ते - तव । व्यक्तिं - व्यञ्जनप्रकारं, प्रहृष्टूणां त्वद्वैभवप्रतिपादनप्रकारमित्यर्थः । देवाः - सात्विकप्रकृतयोब्रह्मादयोऽपि । नविदुः - न जानन्ति । दानवाः - तामसप्रकृतयोऽसुराश्च । न विदुः । दानव - ग्रहणं दृष्टान्तार्थं । हि शब्देन तेषां तदज्ञानहेतोः परिमितज्ञानरूपस्य प्रसिद्धि - स्सूच्यते ॥ १४ ॥

एवं देवादीनां भगवद्वैभववक्तृत्वयोग्यतां निराकृत्याथ भगवत एव स्ववैभववक्तृत्वयोग्यतामाह ( स्वयमिति ) हे भूतभावन - भूतानामुत्पादक ।

---

**हे केशव ! आपके इन असाधारण ऐश्वर्य एवं कल्याण गुणों की जो-जो बात मुझसे आपने कही, उसे सम्पूर्ण रूप से मैं सत्य मानता हूँ । हे षडैश्वर्यशाली भगवान् समस्त विश्व रूप से आपकी अभिव्यक्ति का प्रकार देवतागण एवं दानव कोई नहीं जानता यह निश्चित है ॥ १४ ॥**

**हे सब प्राणियों के उत्पन्न करने वाले, सर्वभूतनियामक, ब्रह्मादि देवताओं के**





**वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।**
**याभिर्विभूतिभि र्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥१६॥**
**कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ।**
**केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥१७॥**

---

भूतेश - सर्वभूतनियामक । देवदेव - देवानामपि - ब्रह्मरुद्रेन्द्रादीनामपि, यथा देवास्तिर्यङ्मनुष्यस्थावरा नात्मगुणैर्विग्रहगुणैश्चातीत्यवर्तन्ते - तथास्वगुणैर्देवा नप्यतीत्यवर्तमानेत्यर्थः । जगत्पते - जगत्स्वामिन् । हे पुरुषोत्तम - पुरुषधौरेय । त्वम् । स्वयमेव - अनन्यानुगृहीत इत्यर्थः । आत्मना - स्वभावभूतेनज्ञानेन । आत्मानं - त्वदुक्त निरंकुशैश्वर्यकल्याण गुणगणानन्त्यविशिष्टं त्वाम् । वेत्थ - जानासि । स्वतस्सर्वज्ञत्वात्त्वद्वैभवं वक्तुं त्वमेव समर्थ इति भावः ॥ १५ ॥

एवं वक्तारं भगवन्तमभिमुखीकृत्याथ पृच्छति ( वक्तुमिति ) अत्र - त्वं - आत्मानं - इति पदे पूर्वश्लोकादनुपञ्जनीये । त्वमेव । अशेषेण कृत्स्नेन निरंकुशैश्वर्यादिना - विशिष्टम् । त्वाम् । वक्तुं - व्यञ्जयितुम् । अर्हसि - योग्योऽसि । वक्तव्यत्वे हेतुमाह । हि - यस्मात्कारणात् । आत्मविभूतयः - आत्मनः - तव, विभूतयः - ऐश्वर्याणि । दिव्याः - अद्भुतानि । सकृच्छ्रवणेन तृप्तिर्न जायत इति भावः । याभिः । विभूतिभिः-नियमनैश्वर्यैः, उपलक्षितस्त्वं । इमान् । लोकान् - स्थावर जङ्गमात्मकानि जगन्ति । व्याप्य - नियन्तृत्वेनान्तः प्रविश्य । तिष्ठसि - वर्तसे ॥ १६ ॥

"कथं"मित्यादिश्लोकद्वयेन प्रश्नस्य प्रयोजनं प्रश्नकारणं प्रष्टव्यार्थांश्च वदन्नुत्तरं प्रार्थयते । हे भगवन् । अहम् । योगी - भक्तियोग निष्ठस्सन् । त्वां - परिपूर्णैश्वर्यकल्याणगुणविशिष्टं भवन्तम् । परिचिन्तयन् - परिचिन्तयितुम् ।

---

**भी देवता, पुरुषोत्तम श्रीकृष्ण ! केवल आप ही अपनी सर्वज्ञता के कारण अपने विषय में सम्यक् रूप से जानते हो ॥ १५ ॥**

**आप जिस सम्पूर्ण ऐश्वर्य के द्वारा इस समग्र चराचरात्मक विश्व में व्याप्त हो, आपके इस अद्भुत सम्पूर्ण ऐश्वर्य के समग्र रूप से एवं विस्तार से वर्णन करने में आप ही समर्थ हैं ॥ १६ ॥**

**हे कल्याणगुण युक्त भगवन् ! आपको मैं लगातार विशेष रूप से चिन्तन करता हुआ किस प्रकार से जानूँ ? एवं आप किस किस भाव से चिन्तन करने योग्य हो ? ॥ १७ ॥**

**विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।**
**भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥१८॥**

श्रीभगवानुवाच—

**हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।**
**प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥१९॥**

कथं - केनप्रकारेण । विद्यां - जानीयाम् । किं च - मया त्वम् । केषुकेषु भावेषु बुद्धिज्ञानासम्मोहादि व्यतिरिक्तेषु केषु केषु भावेषु। चिन्त्यः - नियन्तृतयाचिन्तनीयः । असि ॥ १७ ॥

हे जनार्दन - आश्रितजनाभीष्टप्रापक । आत्मनः - स्वस्य । योगं - अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते ॥ इत्यादिना संक्षेपेण पूर्वमुक्तं स्रष्टृत्वादिगुण - योगम् । विभूतिं - नियमनं च । भूयः - पुनः । विस्तरेण - शब्दप्रपञ्चेन । कथय । हि - यस्मात्कारणात् । अमृतं - शब्दतोऽर्थतश्चामृतवदत्यन्त भोग्यभूतं त्वदीयं त्वन्माहात्म्यप्रतिपादनम् । शृण्वतः । मे - मम । तृप्तिः - पर्याप्तिः । नास्ति ॥ १८ ॥

एवमतृप्त्या पृच्छन्तमर्जुनं प्रत्यतिप्रसन्नो भगवांस्तस्याभिजात्यवर्णन - मुखेनोपदेशयोग्यतां दर्शयन्नुत्तरं प्रतिजानीते ( हन्तेति ) संक्षेपेण मद्विभूति - श्रवणादतृप्तः पुनरस्मिँल्लोकेऽतिदुर्लभोऽयममलब्ध इति भगवान् स्वस्यहर्षाति- शयं सूचयति ( हन्तेति ) हे कुरुश्रेष्ठ - कुरुवंशप्रदीपं । ते - अनसूयाय प्रीय - माणाय तृप्ताय तुभ्यम् । प्राधान्यतः - प्राधान्येन-उत्कृष्टत्वेनोपलक्षिताः । शुभाः कल्याणीः । आत्मनः - मम । विभूतीः - नियमनविषयान् । पदार्थान् । कथ - यिष्यामि । ननु विस्तरेण कथयेति पृच्छन्तं प्रति प्राधान्यतः कथयिष्यामीति कथमुच्यत इत्यत्राह (नास्तीति) मे - मम । विस्तरस्य । गुणविभूति गोचर - शब्दप्रपञ्चस्य । अन्तः-अवसानम् । नास्ति । प्रतिपाद्य गुणविभूतीना मानन्त्या द्विस्तरेणवक्तुं श्रोतुञ्चाशक्यमित्यर्थः ॥ १९ ॥

**हे जनार्दन ! इससे पूर्व आपने कहा कि—'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।' 'मैं जगत् का कारण हूं, समस्त कल्याण गुणों से युक्त हूँ ।' इस योग एवं आपके ऐश्वर्य के विषय का विस्तारपूर्वक वर्णन करिये, क्योंकि आपके माहात्म्य की कथा जो अमृत के तुल्य है, उसको श्रवण करके मुझे तृप्ति नहीं हो रही है ॥ १८ ॥**

**श्रीभगवान् बोले—तुम्हारे इस प्रश्न से मैं बहुत सन्तुष्ट हूँ । हे कुलश्रेष्ठ अर्जुन ! तुमने उत्तम प्रश्न किया है । लेकिन मेरे कल्याण गुणों एवं विभूतियों का अन्त नहीं है । इसलिए मैं तुम्हें अपनी प्रधान विभूतियों के विषय में ही बतलाता हूं ॥ १९ ॥**





**अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।**
**अहमादिश्च मध्यं च भूतानामन्त एव च ॥२०॥**
**आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।**
**मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥२१॥**

आत्मनो योगं विभूतिं चेति पृष्टमर्थद्वयं विस्तरेण वक्तुमसम्भवात्संग्रहेण तस्योत्तरमाह ( अहमिति ) हेगुडाकेश । अहम् । आत्मा सन् । सर्वभूताशय - स्थितः - सर्वेषां भूतानां प्राणिनां मम शरीरभूतानां, आशयेहृदये, स्थितः । भवन्ति भावाभूतानामित्याद्युक्त सर्वभूतप्रवर्तनरूपं विभूतिशब्दनिर्दिष्टं मम नियमनंराज्ञां भृत्यादिनियमनमिव न पृथगवस्थाय - किन्तु मम शरीरभूतेषु प्राणिष्वात्मतया ऽवस्थायेतिभावः । एवं विभूतिप्रश्नस्य संग्रहेणोत्तरमुक्त्वा योगप्रश्नस्यापि संग्रहेणोत्तर माह ( अहमिति ) अहं - समस्तकल्याणगुणाकरो- ऽहमेव । भूतानां - मम शरीरभूतानां प्राणिनाम् । आदिश्च - उत्पत्तिहेतुश्च । मध्यं च - उत्पत्तिप्रलय मध्यस्थितिहेतुश्च । अन्त एव च - प्रलयहेतुश्च । अनेन संग्रहेण योगप्रश्नस्याप्युत्तरमुक्तम्भवति ॥ २० ॥

एवं भगवतस्स्वशरीरभूतेषु सर्वेष्वात्मतयावस्थानं तत्तच्छब्दसामाना- धिकरण्य निर्देशहेतुं प्रतिपाद्य प्रधानभूतान् विभूतिविशेषान् सामानाधिकरण्येन निर्दिशन्विस्तरेणोत्तरमाह ( आदित्यानामिति ) आदित्यानां - द्वादशसंख्यानां सूर्याणाम्मध्ये । विष्णुः - विष्णुनामक उत्कृष्ट आदित्यः । अहम् । ज्योतिषां- जगतिप्रकाशकपदार्थानाम्मध्ये । अंशुमान् - प्रशस्तकिरणः । रविः - आदित्यः । अहम् । मरुतां - दितिपुत्राणामेकोनपंचाशद्वायूनाम्मध्ये । मरीचिः - उत्कृष्टो मरीचिनामावायुः । अहम् । अस्मि । नक्षत्राणां - अश्विन्यादीनां । पतिः । शशी - चन्द्रः । अहम् ॥ २१ ॥

**हे गुड़ाकेश अर्जुन ! मैं ही आत्मा रूप से सर्वजीवों के हृदय में अवस्थित हूँ । अर्थात् सब जीवों का परमात्मा रूप से मैं ही नियामक, देही एवं जीवात्मा मेरे नियाम्य एवं देह या शरीर रूप से मेरी ही विभूति हैं । सब जीवों की उत्पत्ति, स्थिति, प्रलय का कारण मैं ही हूँ ॥ २० ॥**

**( पूर्व श्लोक 'अहमात्मा गुड़ाकेश'—यह वाक्य भगवान् के शरीररूपी समस्त जीवात्माओं में अन्तर्यामी रूप से अवस्थिति ही सामाधिकरण्य का कारण है । "भिन्नप्रवृत्तिनिमित्तानां शब्दानां एकस्मिन् अर्थे समवायः" वृद्धाह्निक में कहा है**

**वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।**
**इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥२२॥**
**रुद्राणां शंकरश्चास्मि वित्तेशो यक्षरक्षसाम् ।**
**वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥२३॥**

वेदानां - ऋग्यजुस्सामाथर्वणाम्मध्ये । सामवेदः - गानप्रधानतया सहस्रशाखात्मकतया चोत्कृष्टस्सामवेदः । अहम् । अस्मि । देवानां - स्वर्गिणाम्मध्ये । वासवः - त्रैलोक्याधिपत्यरूप परमैश्वर्य सम्पन्नतयोत्कृष्ट इन्द्रः । अहम् । अस्मि । इन्द्रियाणां - एकादशानाम्मध्ये । मनश्च - विषयस्पृहानैस्पृह्यदशाभेदेन बन्धमोक्षोभयकारण तयोत्कृष्टं मनश्च । अहम् । अस्मि । भूतानां - चेतनावतां प्राणिनाम् । चेतना - बुद्धिः । अहम् । अस्मि ॥ २२ ॥

रुद्राणां - एकादशानां रुद्राणाम्मध्ये । शंकरश्च - समस्तजनसुख-

---

**कि भिन्न-भिन्न प्रवृत्ति और निमित्त बोधक शब्दों का एक ही अर्थ में व्यवहार होता है । जैसे विभिन्न विशेषण एकमात्र विशेष्य के आश्रयण को प्राप्त करके एकमात्र अधिकरण-विशेष्य में रहकर एक ही वस्तु को प्रतिपादन करते हैं, इसलिए समस्त विशेषण वाचक या शरीर वाचक शब्द विशेष्य वाचक या शरीरीवाचक अर्थमें व्यवहृत होते हैं, यही समानाधिकरण्य है, अर्थात् जीवात्मा और परमात्मा एकही अधिकरणमें या देहके भीतर अवस्थित रहते हैं इसलिये जगत् शब्द का अर्थ अन्तमें श्रीभगवान् ही होता है । इस सिद्धान्त के अनुसार इस प्रकरण में पूर्व श्लोक में उसी प्रकार निर्देश किया गया है । अब प्रधान प्रधान विभूतियों को भी इसी 'समानाधिरण्य-वृत्ति' से विस्तार पूर्वक कहते हैं ) ।**

**आदित्यगणों के मध्य में विष्णु नामक सर्वोत्कृष्ट आदित्य हूँ । ज्योति वाले पदार्थों में मैं ही उज्ज्वल किरण विशिष्ट रवि हूँ । उनचास वायुगणों में मरीचि नामक उत्कृष्ट वायु मैं ही हूँ एवं नक्षत्र गणों में मैं ही नक्षत्रपति चन्द्र हूँ ॥ २१ ॥**

**चारों वेदों में सामवेद मैं ही हूं । देवों में मैं ही देवराज इन्द्र हूँ । ग्यारह इन्द्रियों में मैं मन हूँ । जीवों में मैं ही चेतनात्मक बुद्धि हूँ ॥ २२ ॥**

**ग्यारह रुद्रों में मैं ही शंकर हूँ । यक्ष और राक्षसों में मैं ही यक्षपति कुबेर हूँ । आठ वसुओं में मैं ही अग्नि हूँ, सम्पूर्ण पर्वतों में मैं सुमेरू नामक पर्वतराज हूँ ॥ २३ ॥**





**पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।**
**सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥२४॥**

करत्वेन प्रशस्तश्शंकरनामारुद्रश्च । अहं । अस्मि । यक्षरक्षसां - यक्षाणां राक्षसानांच । पतिः । वित्तेशः - नवनिधिस्वामित्वेनोत्कृष्टः कुबेरः । अहम् । वसूनां - अष्टसंख्याकानां वसूनाम्मध्ये । पावकः - उत्कृष्टः पावकनामावसुश्च । अहम् । शिखरिणां - रत्नकांचनमयप्रशस्तशिखराणां पर्वतानाम्मध्ये । मेरुः - सुरालयतया, प्रशस्तो मेरुपर्वतः । अहम् ॥ २३ ॥

हे पार्थ ! पुरोधसां - पुरोहितानाम्मध्ये । मुख्यं - वाचस्पतित्वेन प्रधानम् । बृहस्पतिं च । मां । विद्धि - जानीहि । सेनानीनां - चमूपतीनाम्मध्ये । स्कन्दः - देवसेनापतित्वेनोत्कृष्टः कुमारस्वामी । अहं । सरसां - स्थास्नुसलिलाशयानाम्मध्ये । सागरः - अगाधत्वविपुलत्वादिना प्रशस्तस्समुद्रः । अहं । अस्मि ॥ २४ ॥

महर्षीणां - मरीचिप्रमुखानां सध्ये । भृगुः - भृगुनामामहर्षिः । अहम् । गिरां । अर्थवच्छब्दानाम्मध्ये । एकमक्षरं - ओमित्येकाक्षरं ब्रह्मेतिश्रुतिप्रसिद्धः परब्रह्मरूपोत्कृष्टार्थाभिधायित्वेन प्रशस्तः प्रणवः । अहम् । यज्ञानाम् । मध्ये । जपयज्ञः - जपरूपोयज्ञः । अहम् । अस्मि । जपयज्ञोहि सर्वेष्वपि यज्ञेषु प्रशस्ततमः । विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैरितिवचनात् । सर्वाश्रमसाधारण्यात् । "जप्येनापितु संसिध्येद् ब्राह्मणो नात्रसंशयः । कुर्यादन्यन्नवा कुर्यान्मैत्रो ब्राह्मण उच्यत" इति विधुरादेरपि सिद्धिहेतुत्वेनावगतत्वाच्च । अत्र वेदान्ताचार्यैः स्तात्पर्यचन्द्रिकायां जपयज्ञस्यैव प्राशस्त्यं समर्थितं - तथाहि जपयज्ञस्य प्राशस्त्य मन्यत्रप्रसिद्धम् । विधियज्ञाज्जपयज्ञोविशिष्टो दशभिर्गुणैरिति । किंच । कुर्याद्घृतपशुं संख्ये कुर्यात्पिष्टपशुं तथा । नत्वेयन्तं वृथा हन्तुं पशुमिच्छेत्कथंचनेति । पशुयज्ञैः कथं हिंस्रैर्माहशो यष्टुमर्हति । हिंसात्मकैस्तु किं तस्य यज्ञैः कार्यम्महात्मनः । प्रस्वापे च प्रबोधे च पूजितो येन केशवइत्यादि वचनबाहुल्या दहिंसात्मकयज्ञानर्हाणां हिंसात्मकयज्ञानुज्ञानं । तत्रापि विधितः प्रवृत्तेरपकाराद्यनभिसन्धानादुपकारश्रुते र्देवताप्रीणनत्वाच्च न प्रत्यवायः । फलार्थिनान्तु तत्फलमल्पमस्थिरं दुःखमिश्रञ्च । अहिंसात्मकास्तु यज्ञा विशिष्टाधिकारिसाध्याः भगवतोऽतिप्रीणनत्वा

---

**हे पार्थ ! पुरोहितों में मैं ही प्रधान पुरोहित बृहस्पति हूँ, सेनापतियों मे कार्तिकेय, जलाशयों में समुद्र मैं ही हूँ ॥ २४ ॥**

**महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।**
**यज्ञानां जपयज्ञोस्मि स्थावराणां हिमालयः ॥२५॥**
**अश्वत्थः सर्ववृक्षाणां देवर्षीणांच नारदः ।**
**गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥२६॥**
**उच्चैः श्रवसमश्वानां विद्धि मा ममृतोद्भवम् ।**
**ऐरावतं गजेन्द्राणां नराणांच नराधिपम् ॥२७॥**

---

दपवर्गप्रत्यासन्नाः। अतएव ह्यु परिचरवस्वादयः पिष्टपशुभिरिष्टवन्तः। एवमितरेषु यज्ञेषु हिंसादिप्रसङ्गादधिकारिविशेषादिना विषयव्यवस्थापन मित्यादिर्महान्क्लेशः। जपयज्ञे तु तत्प्रसंगाभावात् - अव्यापकार्थं प्रतीत्या स बीजयोगद्वारा समाधाननिवेशनाच्च यज्ञान्तरेभ्यो जपयज्ञः प्रशस्ततमः। सर्वाश्रम साधारण्यात् "जप्येनापि तु संसिध्येद् ब्राह्मणो नात्रसंशयः। कुर्यादन्य न्नवाकुर्यान्मैत्रोब्राह्मणउच्यत" इति विधुरादेरपि सिद्धिहेतुत्वाच्चेति। स्थावराणां पर्वतमात्राणाम्मध्ये। हिमालयः - पर्वतराजत्वेन प्रसिद्धः प्रशस्तो हिमवान्। अहम् ॥ २५ ॥

सर्ववृक्षाणां - मध्ये। अश्वत्थः - प्रदक्षिणादिना पूज्यतया प्रसिद्धः प्रशस्तः पिप्पलवृक्षः। अहं। देवर्षीणां - मध्ये। नारदश्च - ब्रह्मपुत्रत्वेन प्रशस्तो नारदनामा देवर्षिश्च। अहं। गन्धर्वाणां - मध्ये। चित्ररथः। अहं। सिद्धानां - सिद्धिमतां ज्ञानिनाम्मध्ये। कपिलः - "ऋषिं प्रसूतं कपिलम्महान्त" मितिश्रुतिसिद्धोत्कर्षः कपिलनामा। मुनिः। अहम् ॥ २६ ॥

अश्वानां - मध्ये। अमृतोद्भवं। अमृतात् - मन्दरमथ्यमानात्समुद्र जलात्, उद्भवः - जन्म, यस्य तं तथोक्तं। जन्मत उत्कृष्टम्। उच्चैश्श्रवसं- उच्चैश्श्रवोनामकमिन्द्राश्वं। मां - विद्धि। गजेन्द्राणां - गजश्रेष्ठानां दिग्ग-

---

**मरीचि आदिक महर्षियों में भृगु महर्षि, सम्पूर्ण शब्दों में एकाक्षरी शब्द 'ओम्' प्रणव, सम्पूर्ण यज्ञों में जप रूप यज्ञ एवं पर्वतों में हिमालय मैं ही हूँ ॥२५॥**

**सब वृक्षों में अश्वत्थवृक्ष, देवर्षियों में नारद, गन्धर्वों में चित्ररथ, एवं सिद्ध ज्ञानियों में कपिलमुनि मैं ही हूँ ॥ २६ ॥**

**अश्वों में उच्चैःश्रवा नामक अश्व, गजेन्द्रों में ऐरावत नामक हाथी मैं ही हूँ। मनुष्यों में मुझे राजा जानो ॥ २७ ॥**





**आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।**
**प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥२८॥**
**अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।**
**पितॄणामर्यमा चास्मि यमस्संयमतामहम् ॥२९॥**

---

जानामध्ये। अमृतोद्भवमैरावतं - इन्द्रवाहनभूतं गजेन्द्रं। मां। विद्धि। नराणां - मनुष्याणाम्मध्ये। नराधिपं - सर्वनिर्वाहकत्वेन प्रसिद्धं प्रशस्तं राजानं च। मां। विद्धि ॥ २७ ॥

आयुधानां - सुदर्शननन्दकादि व्यतिरिक्तार्वाचीनायुधानाम्मध्ये। वज्रं पर्वतभेत्तृतया प्रशस्तं वज्रायुधं। अहं। धेनूनां - दोग्ध्रीणाम्मध्ये। कामधुक् - कामान् दोग्धीति कामधुक् - सकलकामितार्थ दोग्धृतया प्रशस्तास्वधेनुः। अहं। अस्मि। प्रजनयतीति प्रजनः - प्रजाजननहेतुतया प्रशस्तः। कन्दर्पश्च - मन्मथश्च। अहं। अस्मि, तस्य प्रजाजननहेतुत्वरूपातिशयो मदधीन इत्यर्थः। सर्पाणां - एक शिरसां पन्नगानां मध्ये। वासुकिः समुद्रमथनरज्जुतयाऽवस्थितो वासुकिनामासर्पः। अहं। अस्मि ॥ २८ ॥

नागानां - बहुशिरसां पन्नगानाम्मध्ये। अनन्तः - भगवत्तल्पतया फणासहस्रधृतधरणीमण्डलतया च प्रशस्तश्शेषनामको नागश्च। अहम्। अस्मि। यादसां - जलजन्तूनां, पतित्वेन प्रशस्तः। वरुणश्च। अहम्। पितॄणां - अग्निष्वात्तादीनाम्मध्ये। पितृराजत्वेन प्रसिद्धः प्रशस्तः, अर्यमाच। अहम्। अस्मि। संयमताम् - संयच्छतां, दण्डयताम्मध्ये। यमः - वैवस्वतः। अहम् ॥ २९ ॥

दैत्यानां - दितिसुतानाम्मध्ये। साधूपमानत्वेन प्रसिद्धः, प्रह्लादश्च। अहम्। अस्मि। कलयतां - परानर्थसमयप्रतीक्षाणाम्मध्ये। कालः - मृत्युः। अहम्। मृगाणां - हरिणादीनाम्मध्ये। मृगेन्द्रः - सिंहश्च। अहम्। अस्मि।

---

**प्राकृत अस्त्रों शस्त्रों में मैं ही इन्द्र का वज्र हूँ। गायों में सुरभि कामधेनु गाय, पैदा करने में कारण, जीवों में रहने वाला काम, सर्पों में वासुकि मैं ही हूँ ॥ २८ ॥**

**बहुत से मस्तक वाले सर्पों में सहस्रफणधारी अनन्त नामक सर्प, जलचरों में वरुण, पितरों में पितृराज अर्यमा, दण्ड विधान कर्ताओं में यमराज मैं ही हूँ ॥२९॥**

**प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।**
**मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥३०॥**
**पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।**
**झषाणां मकरश्चास्मि स्रोतसामस्मि जान्हवी ॥३१॥**
**सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।**
**अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥३२॥**

पक्षिणाम्मध्ये । वैनतेयः - वेगातिशय वेदमयत्वादिनोत्कृष्टः, गरुडश्च । अहम् । अस्मि ॥ ३० ॥

पवतां - सततगमनशीलानाम्मध्ये । पवनः - तारकाद्यजस्रपरिभ्रमणहेतुत्वेन प्रशस्तो वायुः । अहम् । अस्मि । शस्त्रभृतां - शस्त्रधारिणाम्मध्ये । रामः - परशुरामस्यापि जेता रावणान्तको रामः । अहम् । अस्मि । अत्र रामगतशस्त्रभृत्त्वमात्रं विभूतिः, रामशब्दवाच्यस्य भगवद्विभूतितायोग्यस्य चेतनस्याचेतनस्य वा वस्त्वन्तरस्यासम्भवादिति बोध्यम् । झषाणां - मत्स्यानाम्मध्ये । मत्स्य राजतयाप्रसिद्धः, मकरश्च । अस्मि । स्रोतसां - प्रवाहाणाम्मध्ये । जाह्नवी - विष्णुपादोद्भवत्व सर्वज्ञशिरोधृतत्व त्रैलोक्यप्रवृत्तत्वादिभिरतिशयिता गंगा । अहम् । अस्मि ॥ ३१ ॥

हे अर्जुन ! सृज्यन्त इति सर्गाः - सर्वदेशकालवर्तिनः सृज्यपदार्थाः,

**दितिवंश में पैदा होने वाले दैत्यों में भक्तप्रवर प्रह्लाद, जो जीवों का अनर्थ करने वाले वर्ष, दिन, दण्ड, प्रहर और मुहूर्तों में परिगणित हैं ऐसे कालों में मैं मृत्यु नामक काल, हरिण आदिक पशुओं में सिंह, पक्षियों में बिनतानन्दन गरुड़ मैं ही हूँ ॥ ३० ॥**

**लगातार चलने वालों में वायु, अस्त्र धारियों में राम, अर्थात् शस्त्र धारकत्व रूप शक्ति या विभूति रूप राम में ही हूँ। मत्स्यों में मकर एवं नदियों में जह्नुकन्या गङ्गाजी मैं ही हूँ ॥ ३१ ॥**

**हे अर्जुन ! सृष्टि के लिए उपयुक्त जितने पदार्थ हैं उनका आदि अर्थात् स्रष्टा या सर्जक, उनका मध्य अर्थात् पालयिता एवं अन्त अर्थात् संहर्ता मैं ही हूँ। सम्पूर्ण विद्याओं में आत्मन्परमात्म ज्ञानदायिनी अध्यात्मविद्या मैं ही हूँ। तार्किकों के बाद वितण्डाओं में वाद अर्थात् तत्वनिर्णय में प्रवृत्त सर्वोत्कृष्ट वाद मैं ही हूँ। ॥ ३२ ॥**





**अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।**
**अहमेवाक्षयः कालो धाताहं विश्वतोमुखः ॥३३॥**
**मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।**
**कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिःक्षमा ॥३४॥**

तेषाम् । आदिः - तत्र स्रष्टृवर्गः । अन्तः - तत्र संहर्तृ वर्गश्च । मध्यं - तत्र पालयितृवर्गश्च । अहमेव । विद्यानां मध्ये । अध्यात्मविद्या - जीवपरमात्म याथात्म्यविद्या । अहम् । प्रवदतां - जल्पवितण्डादिकथां कुर्वताम् । वादः तत्त्वनिर्णयाय प्रवृत्ताकथा । अहम् ॥ ३२ ॥

अक्षराणां - वर्णानाम्मध्ये । अकारः-अकारो वै सर्वा वागिति सर्ववर्णोत्पादकत्वेन श्रुतिसिद्धोवर्णः । अहं । अस्मि । सामासिकस्य - समानानामव्ययीभावादीनां समूहस्सामासिकः, तस्य - सामासिकस्य मध्ये । द्वन्द्वः - द्वन्द्वाख्यस्समासश्च । अहम् । सहि सर्वपदार्थप्रधानत्वेन पूर्वोत्तरान्यपदार्थ प्रधानेभ्यस्समासान्तरेभ्य उत्कृष्टः । अक्षयः - आद्यन्तरहितः । कालश्च । अहमेव । विश्वतोमुखः - चतुर्मुखः । धाता - सर्वस्रष्टा हिरण्यगर्भश्च अहमेव ॥ ३३ ॥

सर्वहरः - सवषां प्राणिनां हरः । मृत्युः - यमकिंकरश्च । अहं - भविष्यतां - उत्पत्स्यमानानां । उद्भवश्च - उद्भवाख्यं कर्म च । अहं । नारीणाम्मध्ये । श्रीः - लोकमातृत्वेन नारीणामुत्तमा लक्ष्मीः । अहं । कीर्तिः - कीर्तिनाम्नी । अहं । वाक् - वाङ्नाम्नीच । अहं । एतास्तिस्रो भगवदसाधारणशक्तयः । स्मृतिः - अनुभूतार्थगोचरायाधियोऽधिदेवतापि । अहं । मेधा - धारणावत्या धियोऽधिदेवतापि । अहं । धृतिः - सन्तोषः, धैर्यंवा, तदभिमानिदेवताप्यहं । क्षमा - तितिक्षा - तदभिमानिदेवतापि । अहम् ॥ ३४ ॥

**वर्णों में स्वरवर्ण का आदि वर्ण 'अ' कार मैं ही हूँ। विभिन्न समासों में श्रेष्ठ द्वन्द्व समास मैं ही हूँ। अक्षय समय मैं ही हूँ। जगत् सृष्टि कर्ता चतुर्मुख ब्रह्मा मैं ही हूँ ॥ ३३ ॥**

**सब जीवों का विनाश करने वाली मृत्यु मैं ही हूं। भविष्य में उत्पन्न होने वाले जीवों का उत्पत्ति कर्म मैं ही हूं। स्त्रियों में सर्वोत्तम नारी 'लक्ष्मी' मैं ही हूँ और कीर्ति, वाक्, स्मृति, बुद्धि, धैर्य एवं क्षमा और उनका अधिष्ठात्री देवता मैं ही हूं ॥ ३४ ॥**

**बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।**
**मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥३५॥**
**द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।**
**जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥३६॥**

---

साम्नां - ऋगक्षरसंस्काररूपाणां गानानाम्मध्ये । बृहत्साम - "बृहच्चवा इदमग्रेरथन्तरंचास्तां वाक्चचैतन्मनश्चास्तां वाग्वैरथन्तरम्मनोबृहदि" त्यादि श्रुतिसिद्धोत्कर्षं बृहन्नामकं गानञ्च । अहं । छन्दसां - छन्दोविशिष्ट-मन्त्राणाम्मध्ये । गायत्री - वेदमातृत्वेन श्रुतिषु छन्दोविचित्यांच प्रपंचितोत्कर्षा गायत्र्याख्यछन्दोविशिष्टा चतुर्विंशत्यक्षरा त्रिपदा ऋक् । अहं । मासानां-द्वादशानाम्मध्ये । मार्गशीर्षः - वर्षगर्भाधानकालत्वात्, केशवादिषु द्वादशसु प्रथमस्य केशवस्य मासत्वात्,व्रतारम्भकालत्वाच्चोत्कृष्टो मार्गशीर्षाख्यो मासः । अहं । ऋतूनां - षण्णाम्मध्ये । कुसुमाकरः - अनतिशीतोष्णतया कोकिलालापमलयमारुतं विविधकुसुमवासनाभिश्च सर्वप्राणिसुखहेतुत्वात् - वसन्तादौ ब्राह्मणोऽग्नीनादधीत - वसन्ते ब्राह्मणमुपनयीत - वसन्तेवसन्तेज्योतिषा यजेत" "वसन्ते दीक्षयेद्विप्र" इत्यादि श्रौतस्मार्तकर्मानुष्ठानकालत्वेनावगतत्वाच्च प्रशस्तो वसन्तर्तुः । अहम् ॥ ३५ ॥

छलयतां - छलंकुर्वतां - क्रयविक्रयऋणसंगरादिव्यापारैः परस्परं वञ्चनंकुर्वतां, वञ्चनास्पदेषूक्तव्यापारेषु मध्ये । द्यूतं - अक्षदेवन छागचरणायुधयुद्धादिनिर्जीवसजीवसमस्तद्यूतम् । अहं । तस्यानायासेन धर्माविरोधेन च समस्तपरधनहरणसाधनत्वेन प्रशस्तत्वादिति भावः । तेजः - पराभिभवन सामर्थ्यं - एषामस्तीति तेजस्विनः, तेषां सम्बन्धि । तेजः । अहं । जयशीलानां, जयः । अहं । अस्मि । तेजोजययो रुत्कर्षः स्फुटः । व्यवसायः - अध्यवसायनिष्ठेतियावत्, सः । अहं । व्यवसायोहि - "यथा-

---

सम्पूर्ण सामगीतों में मैं बृहत्साम, नाम गीतिछन्दविशिष्ट मन्त्रों में गायत्री छन्द, बारह महीनों में श्रेष्ठ अगहन मास, छः ऋतुओं में ऋतुराज बसन्त मैं ही हूँ ॥ ३५ ॥

छल करने वालों में जूआ का खेल मैं हूँ । तेजस्वियों में तेज मैं ही हूं । जयशीलों का जय और अध्यवसायी लोगों का अध्यवसाय (निश्चयात्मिका बुद्धि) महामनाओं का महामनस्त्व मैं ही हूँ ॥ ३६ ॥





**वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनंजयः ।**
**मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥३७॥**
**दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।**
**मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥३८॥**

---

वै निस्तिष्ठत्यथकरोतिनातिष्ठन् करोतिनिस्तिष्ठन्नेव करोतिनिष्ठात्वेव विजिज्ञासितव्ये"त्यादिनाऽध्यवधानेन प्रवृत्त्यादिहेतुतयाऽवगन्तव्यत्वात्प्रशस्तइति भावः । सत्त्वं - महामनस्त्वं, तद्वताम् । सत्त्वम् । अहम् ॥ ३६ ॥

वृष्णीनां - वृष्णिकुलजातानां पुरुषाणाम्मध्ये । वासुदेवः - वसुदेवसूनुः । तदीयानि - वसुदेवगृहे चतुर्भुजतयाऽवतरणं - शैशवएव पूतनाशकटयमलार्जुनकेशिबकप्रलम्बधेनुककालियादिनिग्रहः - सप्तरात्रं गोवर्धनोद्धरणेन गोपगोपीजनानामिन्द्रकृताश्मवर्षान्निवारणं - परलोकगतसान्दीपनिपुत्राहरणम् - इत्येवमादीन्यमानुषचेष्टितानि वासुदेवशब्देन विवक्षितानि । तानि । अहं - मद्विभूतिभूतानि । धर्मिणस्तु रामस्येव स्वावतारत्वेन स्वविभूतित्वायोगादिति बोध्यम् । इदं चार्जुनस्य सुविदितमेवनोपदेश्य मितिदृष्टान्तार्थम् । एवंच - यथावृष्णीनाम्मध्ये वासुदेवोऽहं तथा । पाण्डवानां - पंचानांमध्ये । धनंजयः - दिग्विजयपूर्वकराजसूयार्थधनाहरणेन देवतासार्वभौमसुतत्वेन-मयैव सारथिना प्रवर्त्यमानरथकरथिकत्वेन च प्रशस्तोऽर्जुनस्त्वंच । अहं - मद्विभूतिः । मुनीनां - मननेनार्थतत्त्वयाथात्म्यदर्शिनाम्मध्ये । व्यासः - पाराशर्यः । अहम् । "सहोवाच व्यासः पाराशरार्य" इतिश्रुति प्रसिद्धाप्तमत्वरूपोत्कर्षः पाराशर्यः । कवीनां - विपश्चिताम्मध्ये उशना - शुक्रोनामकविरहं । सहि नीतिशास्त्रप्रवर्तकत्वात्प्रशस्तः ॥ ३७ ॥

दमयतां - नियमातिक्रमे यथाधिकारं सर्वस्वहरणादिरूपं दण्डं कुर्वतां सम्बन्धी । दण्डः - निग्रहः । अहम् । सहि नियमातिक्रमजनितपाप-

---

वृष्णिवंशियों में वसुदेव पुत्र, पंचपाण्डवों में दिग्विजयी अर्जुन तुम भी मैं ही हूँ, अर्थात् तुम भी मेरी विभूति ही हो । मुनियों में पराशर मुनि का पुत्र आप्त पुरुष व्यास महर्षि, पण्डितों में महापण्डित शुक्राचार्य भी मैं ही हूँ ॥ ३७ ॥

निग्रहकारियों का दण्ड, जयाभिलाषियों के जय का कारण जो नीति अर्थात् जय का उपाय कौशल मैं ही हूँ । गोपनीय रहस्यों में मौन रहना, क्योंकि मौनी के हृदयगत भाव को कोई नहीं जान पाता है, तत्वज्ञानियों का तत्वज्ञान भी मैं ही हूँ ॥ ३८ ॥

**यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।**
**न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥३९॥**

निर्हरणेन पुरुषस्य नैर्मल्यापादकतया प्रशस्तः। जिगीषतां - जयेच्छूनां। नीतिः - जयोपायभूतसामाद्युपायप्रयोगकौशलरूपा। अहम्। तस्याजयहेतुत्वरूपोऽतिशयस्स्पष्टः। गुह्यानां - गोपनार्हाणामर्थानां सम्बन्धिषु गोपनोपायेषु। मौनं। वाङ्मुद्रणं। अहम्। मौने हि सन्ति हृदिस्थितेषु रहस्यार्थेषु न कश्चिदपि प्रकटी भवति, उक्तिप्रत्युक्त्यादि निमित्तः कलहोपि परैर्न प्रसज्यत इति तस्यातिशयः। ज्ञानवतां - तत्त्वज्ञानवतां। ज्ञानं - तत्त्वज्ञानं च। अहम्। तद्धि - ज्ञानी त्वात्मैव मे मतमित्युक्तरीत्या भगवत्प्रीतिविषयतापादनद्वारा मोक्षसाधनत्वादुत्कृष्टम् ॥ ३८ ॥

सर्वभूतानां - नित्यसृज्यमानानां नरतिर्यगादि सर्वावस्थावस्थितानां प्राणिनां। यच्च - परोक्षमपरोक्षं च। बीजं - तत्तदुपादानकारणतया स्थितं द्रव्यं। अस्ति। हे अर्जुन! तदपि। अहमेव। अहमादिश्चेत्यादिना नैमित्तिक प्राकृतसर्गोपादानादिसर्गाणां - आदि रन्तश्चेति नित्यसर्गे स्रष्टवर्गस्य चोक्तत्वादिह नित्यसर्गोपादानकारणमात्रं बीजमित्यनेन वक्तुं युक्तं। मया। विनाभूतं - शरीरतयान्तरननुप्रविष्टम्। यत्। चराचरं - जंगमस्थावरम्। स्यात्। तद्वस्तु। नास्ति। सर्वमपि भूतजातं मया शरीरतयाऽधिष्ठितमेवेत्यर्थः। स्वव्यतिरिक्तवस्तुसत्तानिषेधपरत्वे - अहमात्मागुडाकेशेत्याद्युपक्रमविरोधादेवमेव योजना न्याय्या ॥ ३९ ॥

निश्शेषवचनाशक्यतां प्रागुक्तां स्मारयति (नेति) हे परंतप! दिव्यानां - कल्याणीनाम्। मम। विभूतीनां - नियाम्यवस्तूनाम्। अन्तः - इयत्तालक्षणः - परिच्छेदः। नास्ति। एषः। विभूतेः। विस्तरतु। उद्देशतः - संक्षेपेण। प्रोक्तः ॥ ४० ॥

एवंप्राधान्यत इत्युपक्रम्य प्रपंचितमुपसंहरति (यद्यदिति) विभूतिमत - नियाम्यवस्तु सम्पन्नम्। श्रीमत् - कांतिमत्, नियाम्यजनभरणोपयोगि धन-

**हे अर्जुन! सम्पूर्ण प्राणियों का बीज मैं हूं क्योंकि सबकी उत्पत्ति का उपादान रूप जो कुछ है सब मैं हूँ। जड़चेतनात्मक ऐसी कोई वस्तु नहीं, जिसमें अन्तर आत्मा रूप से मैं प्रविष्ट न होऊँ। चित्-अचित् सम्पूर्ण विश्व में अन्तर्यामी रूप से मैं ही प्रविष्ट हूं ॥ ३९ ॥**





**नान्तोऽस्मि मम दिव्यानां विभूतीनां परंतप ।**
**एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥४०॥**
**यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।**
**तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम् ॥४१॥**

धान्यसम्पन्नं वा। ऊर्जितं - बलवत्। वाशब्दश्चार्थः। अधिकतयोत्तरोत्तरश्रीलाभायकल्याणारम्भेषूद्युक्तमेव च। नतु कदाचिदप्युद्योगादुपरतमित्यर्थः। यद्यत् - सर्वं जन्तुजातम्। तत्तत् - सर्वम्। मम - सर्वगोचराभंगुराघटित घटकसामर्थ्यस्येत्यर्थः। तेजोंशसंभवं - तेजसः - नियमनसामर्थ्यस्य, अंशः - लेशः, सम्भवः - कारणम्, यस्य तत्तथोक्तमेव। अवगच्छ जानीहि। यथा शैलान्दोलनसमर्थस्य चण्डमारुतस्य तूलतृणधरणादिकं वेगलेशमात्रकार्यम् - तद्वदिति भावः ॥ ४१ ॥

एवं प्राधान्यत इत्युक्तक्रान्तमुपसंहृत्यार्थसंक्षेपादप्यतिसंक्षेपेणप्रधानाप्रधानसमस्तविभूतिसंग्रहमाह (अथवेति) अथवेत्यतिसंक्षेपरूपपक्षान्तरारम्भे। हे अर्जुन! बहुना - पृथक्पृथक् उच्यमानेन - मयाऽविरतं कथ्यमानेन। तव - त्वयाच। पृथक्पृथक् - ज्ञातेन - अविरतं ज्ञायमानेन, एतेन - विभूतिविस्तरेण। किं साध्यं प्रयोजनं किं। अनन्तानां विभूतीनां पर्यवसानज्ञानरूपं प्रयोजनं न सिद्धयतीति भावः। अहं। इदं - कार्यकारणोभयावस्थस्थूलसूक्ष्मचिदचिद्वस्त्वात्मकं। कृत्स्नं। जगत्। एकांशेन - एकेन -

**हे अर्जुन! मेरी दिव्य विभूतियों का अन्त नहीं है। इसीलिए इन विभूतियों के विषय में मैंने संक्षेप से ही तुम्हें बताया है ॥ ४० ॥**

**जीवों के इस जगत् में परिजन आदि नियाम्य वस्तुओं की सम्पन्नता (विभूतित्व) सौन्दर्य सम्पन्नता एवं उन सेवक वर्ग के भरण-पोषण हेतु धन धान्य सम्पन्नता रूप श्रीमत्व, उत्तरोत्तर श्रीसम्पन्नता के लिए उद्यमशीलता (ऊर्जितत्व) आदि जो कुछ भी सत्व है, वह समस्त उत्कर्ष मेरे तेज से अर्थात् नियमन करने के सामर्थ्य के ही अंश मात्र से उत्पन्न हुआ है, यह जानो ॥ ४१ ॥**

**हे अर्जुन! पृथक् पृथक् रूप से एक एक वस्तु के जानने का अब और तुम्हें क्या प्रयोजन? अर्थात् मेरी विभूतियाँ अनन्त हैं प्रत्येक का जानना साध्य नहीं है। तुम इतना मात्र जानलो कि यह परिदृश्यमान जड़चेतनात्मक सम्पूर्ण जगत् मेरे अत्यन्त अल्प अंश में मेरे तेज अर्थात् नियमन सामर्थ्य से अवस्थित है।**

**अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ।**
**विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥४२॥**

॥ इति श्रीमद्भगवद्गीतायां दशमोऽध्यायः ॥ १० ॥

---

अत्यल्पेन, अंशेन - मन्नियमनसामर्थ्यायुतायुतभागेन । अवष्टभ्य - यथास्थितिप्रवृत्त्यादिषु मत्संकल्पमतिलंघ्य स्वैरं न व्याप्रियेत-तथाऽधिष्ठाय । स्थितः । एवं संग्रहेण जानीहीति भावः ॥ ४२ ॥

इति श्रीमद्भगवद्गीताभाष्यार्थसंग्रहतात्पर्यदीपे श्रीवरवरमुनिविरचितायां बालबोधिन्यपराऽभिधानायां गीतार्थ-संग्रहदीपिकायां
दशमोऽध्यायः ॥ १० ॥



---

**अभिप्राय यह है कि चित् एवं अचित् विशिष्ट इस समस्त जगत् की सृष्टि-काल में स्थूल अवस्था एवं प्रलयकाल में सूक्ष्म अवस्था यह जो जगत् का स्वरूप और स्वभाव है तथा सृष्टि स्थिति एवं प्रलय रूप से यह जगत् मेरे संकल्प के द्वारा हो, इसका मैं ही धारण नियमन एवं शासन करता हूँ ॥ ४२ ॥**

**॥ श्रीमद् भगवद्गीता के हिन्दी अनुवाद का राजविद्या—राजगुह्ययोग नामक दशम अध्याय समाप्त हुआ ॥**



**श्रीरस्तु ।**

# अथैकादशोऽध्यायः

अर्जुन उवाच—

**मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।**
**यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १ ॥**

---

एवं भक्तियोगनिष्पत्तये तद्विवृद्धये च स्वेतरसकलस्वभावविलक्षणेन भगवदसाधारणेन कल्याणगुणगणेन सह भगवतस्सर्वात्मकत्वे सर्वस्य जगतस्तच्छरीरतया तदायत्तस्वरूपस्थितिप्रवृत्तित्वे च कथिते सति तच्छ्रुत्वाऽऽस्तिक्यातिरेकात् - तत्तथैवेति निश्चित्य यथाश्रुताकारविशिष्टं भगवन्तं साक्षात्कर्तुकामोऽर्जुन आह ॥

मदनुग्रहाय - मम देहात्ममोहोपहतस्य, अनुग्रहाय - अनुग्रहं कर्तुम्; मदनुग्रहैकप्रयोजनपरतयेत्यर्थः । परमंगुह्यं - अतिरहस्यं । अध्यात्म संज्ञितं - आत्मानमधिकृत्य प्रवृत्ततयाऽध्यात्ममितिसंज्ञायुक्तम् । यद्वचः - नत्वेवाहं जातुनासमित्यारभ्य - तस्माद्योगी भवार्जुन - इत्येतदन्तं वाक्यम् । त्वयोक्तं । तेन वाक्येन । अयं - आत्मविषयः । मम, मोहः - भ्रमः । विगतः सवासनं विनाशित इत्यर्थः ॥ १ ॥

---

## एकादश अध्याय

**विश्वरूपदर्शन—योग**

**एकादशे स्वयाथात्म्यसाक्षात्कारावलोकनम् ।**
**दत्तमुक्तं विदिप्राप्त्योर्भक्त्येकोपायता तथा ॥**

( अध्याय संग्रह )

**श्रीकृष्ण द्वारा अर्जुन को दिव्यचक्षु प्रदानकर अपने यथार्थ तत्व का साक्षात्कार कराना एवं अपने रूप का दर्शन और उसका एकमात्र उपाय भक्तियोग इन दो विषयों का एकादश अध्याय में उपदेश हुआ है ।**

**अर्जुन ने कहा—हे भगवन् ! मुझे अनुगृहीत करने के लिए आपने प्रथम छः अध्यायों के द्वारा आत्म तत्व विषयक अति रहस्ययुक्त जो उपदेश दिया है, उससे आत्म तत्व के बारे में देहात्माभिमान रूप मेरा भ्रम दूर हो गया है ॥ १ ॥**

**भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।**
**त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २ ॥**
**एवमेतद्यथात्थ त्वमात्मानं परमेश्वर ।**
**द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ३ ॥**

---

एवं प्रथमषट्कार्थस्सूचितः। अथ सप्तमाद्यध्यायचतुष्टयोक्तमर्थमनुवदति।

हे कमलपत्राक्ष - पुण्डरीकदलामलायतेक्षण। हि - यस्मात्। भूतानां देवमनुष्यादिसमस्तजन्तूनाम्। त्वत्तः - परमात्मनस्सकाशात्। भवाप्ययौ उत्पत्तिप्रलयौ। विस्तरशः - प्रपंचेन। मया। श्रुतौ। अव्ययं - कालतो-विषयत स्संख्यातः प्रकर्षतश्चावधिरहितम्। माहात्म्यं च - शेषत्व परत्व सर्वाधारत्व सर्वप्रवर्तयितृत्वादि रूप स्त्वन्महिमा च। विस्तरशः। श्रुतः। हि शब्दोऽत्र वक्ष्यमाण भगवद्रूपदिदृक्षाहेतुत्वमेतदर्थश्रवणस्य सूचयति ॥ २ ॥

हे परमेश्वर - ईश्वरत्वेन प्रसिद्धानां ब्रह्मरुद्रादीनामपीश्वर। अति विश्वसनीयवचनो हि भवानिति भावः। आत्मानं - त्वाम्। यथा - येन प्रकारेण कल्याण गुणविभूति विशिष्टत्व रूपेण। आत्थ - ब्रवीषि। एतत् - त्वत्स्वरूपस्य त्वदुक्ताकार विशिष्टत्वं। एवं - इत्थं, सत्यमेव - नान्यदित्यर्थः। हे पुरुषोत्तम ! आश्रितजने तदिष्टप्रदान विरोधिदोषदर्शनं हि कापुरुषलक्षणं, भवांस्तूत्तमपुरुषतयाऽऽश्रितवत्सलत्वेन तत्प्रत्यनीकाकार इति भावः। ते - तव। ऐश्वरं। ईश्वरासाधारणम्। रूपं - कल्याणगुण विभूति विशिष्टं विग्रहम्। द्रष्टुं - चक्षुषा साक्षात्कर्तुम्। इच्छामि - अभिलषामि। पूर्वश्लोकद्वये भगवता पूर्वमुक्तानामर्थानां यथावदनुवादेनार्जुनस्य

---

**हे कमलदललोचन श्रीकृष्ण ! निश्चय ही परमेश्वर रूप आपसे ही मैंने देव मनुष्य आदि समस्त जीवों की उत्पत्ति और प्रलय की बात एवं आपके अविनाशी अनन्त माहात्म्य के विषयमें भी विस्तार पूर्वक सुना। (यह यथार्थ है, मैं दृढ़ विश्वास करता हूँ इसलिए आपके, विश्व रूप का दर्शन करना चाहता हूँ) ॥ २ ॥**

**हे परमेश्वर ! आपने अपने स्वरूप और स्वभाव अर्थात् 'सम्पूर्ण जीवों की उत्पत्ति, स्थिति, प्रलय, प्रवृत्ति आदि के नियामक एवं सर्वजीव रूप आपकी यह विभूति आपके एक अंश में स्थित है, यह जो आपने उपदेश दिया वह सम्पूर्ण रूप से सत्य है, यह मैं दृढ़ विश्वास करता हूँ। हे पुरुषोत्तम ! मैं आपके इस ऐश्वर्य विशिष्ट विश्वरूप को अपने नेत्रों से देखना चाहता हूँ ॥ ३ ॥**





**मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।**
**योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ४ ॥**

श्रीभगवानुवाच—

**पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।**
**नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥**

---

कृतज्ञतासूचिता। अस्मिन् श्लोकेतु - एवमेतदिति भगवदुक्तार्थे विश्वास-कथनादास्तिक्यं सूचितम्। द्रष्टुमिच्छामीति भगवदुक्ताकारविशिष्ट तद्रूप दिदृक्षाकथनाद्भगवत्कल्याणगुणविभूतिश्रवणोचितभक्तिविवृद्धि स्सूचिता ॥ ३ ॥

नन्वशक्यार्थविषयिणीयं त्वदिच्छेत्याशंक्याह—

हे प्रभो ! योगेश्वर - योगः ज्ञानशक्त्यादिगुणयोगः, तस्य ईश्वर - निर्वाहक - गुणपरिपूर्णेत्यर्थः। तत् - त्वत्स्वरूपम्। मया द्रष्टुं साक्षात्कर्तुम्। शक्यमिति। मन्यसेयदि - संकल्पयसिचेत्। ततः - त्वत्संकल्पाद्धेतोः। आत्मनं। त्वत्स्वरूपम्। अव्ययं - गुणविभूतिविग्रहेषु द्रष्टुमिष्टेष्वशेषं यथातथा। मे - शरणागतस्य मम। त्वम्। दर्शय। स्वयत्नेन द्रष्टुमिच्छतां हि दुष्करं त्वद्दर्शनम्, यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्माविवृणुतेतनूं स्वामिति श्रुत्युक्तरीत्या स्वसंकल्पेन त्वमेव त्वां दर्शयितुं प्रवृत्तश्चेत्किं तत्र दौष्कर्यमिति भावः ॥ ४ ॥

एवं कौतूहलान्वितेन सहर्षगद्गदकण्ठेन पार्थेन प्रार्थितो भगवानाह ॥

हे पार्थ ! शतशः सहस्रशः - शतानि सहस्राणि च, परव्यूह विभवाद्यनन्तावस्थावन्तीत्यर्थः। नानाविधानि - प्रत्येकं भूषणायुधलांछन भुजसंख्यादि नानाप्रकारवन्ति। दिव्यानि - अप्राकृतानि। नानावर्णाकृतीनि च - नाना - अनेक प्रकाराः, वर्णाः - शुक्लरक्तादिरूपाणि, आकृतयः - सुरनरतिर्यगादि

---

**हे प्रभो ! हे योगेश्वर ! (अर्थात् असंख्य कल्याण गुणों से परिपूर्ण सर्व नियन्ता) पहिले उपदिष्ट गुण और विभूतियों से परिपूर्ण आपके रूप को देखने के योग्य मैं हूं, यदि मुझे आप ऐसा मानते हैं तब तो आप अपने उस अव्यय (अविनाशी) ऐश्वर्य विशिष्ट रूप का मुझे दर्शन कराइये ॥ ४ ॥**

**श्रीभगवान् बोले—हे अर्जुन ! सैकड़ों तथा सहस्रों एवं असंख्य प्रकार के एवं अनेक वर्ण, आकृति विशिष्ट मेरे दिव्यरूप का तुम दर्शन करो ॥ ५ ॥**

पश्यादित्यान्वसून्रुद्रानाश्विनौ मरुतस्तथा ।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥ ६ ॥
इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।
मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥ ७ ॥

---

समानसंस्थानानि च, येषांतानि तथोक्तानि । नानावर्णाकृतित्वं च वासुदेवादिषु चतसृषु मूर्तिषु युगभेदेन सितरक्तपीतकृष्णरूपपरिवृत्तेः, अवतारान्तरेषु च तत्तत्फलार्थिनामनुसन्धानानुगुणरूपत्वेनावस्थानाच्च द्रष्टव्यम् । मे मम । रूपाणि - विग्रहाणि । पश्य - वीक्षस्व । यथा द्रक्ष्यसि तथा करिष्यामीत्यभिप्रायः, रागप्राप्तेऽर्जुनस्य भगवद्दर्शने प्रवर्तनायोगात् । अथ शब्दोऽत्र कार्त्स्न्यपरः । अथ पश्य - कार्त्स्न्येन पश्येत्यर्थः ॥ ५ ॥

हे भारत ! आदित्यान् - द्वादश । वसून् - अष्टौ । रुद्रान् - एकादश । अश्विनौ - द्वौ । मरुतः - एकोनपंचाशतंवायून् । पश्य मम रूपे साक्षात्कुरु । इदं जगति प्रत्यक्षदृष्टानां शास्त्रदृष्टानां चान्येषामपि वस्तूनामुपलक्षणम् । तथा, अदृष्टपूर्वाणि - इतः पूर्वं सर्वेषु लोकेषु शास्त्रेषु चादृष्टानि । बहूनि । आश्चर्याणि । पश्य । दर्शनक्रियायास्सकृदुक्तत्वे चारितार्थ्येप्यदृष्टपूर्वाणामाश्चर्यतया प्राधान्येन दर्शनीयत्वज्ञापनाय पुनरुक्तिः ॥ ६ ॥

प्रदर्शयिष्यमाणे स्वकीयरूपे कृत्स्नस्य जगतो निबिडवृत्तिशंकां निवर्तयतुमाह—

हे गुडाकेश ! अद्य - इदानीं । इह - मया प्रदर्शयिष्यमाणे । मम । देहे - एकस्मिन् विग्रहे । एकस्थं - एकस्मिन् संस्थितम् । स चराचरम् - जंगमस्थावरसहितम् । कृत्स्नं अशेषम् । जगत् । पश्य । किंच । अन्यत् - उक्तादन्यत् । यत् । द्रष्टुं इच्छसि । तदपि पश्येत्यन्वयः ॥ ७ ॥

---

**हे भरतवंश में श्रेष्ठ अर्जुन ! मेरे शरीर में बारहों सूर्य, ग्यारह रुद्र, आठ वसु, दो अश्विनी कुमार एवं उनचास वायुदेव के दर्शन करो और जो इससे पूर्व कभी कहीं नहीं देखी गयीं उन अदृष्ट पूर्व अनेक प्रकार की आश्चर्य प्रदान करने वाली वस्तुओं को देखो ॥ ६ ॥**

**हे गुडाकेश ! निद्रा विजयी अर्जुन ! अब मेरे इस शरीर में समस्त जड़-चेतनात्मक विश्व प्रपञ्च एक जगह स्थित है, उसे दर्शन करो एवं उससे अतिरिक्त भी जो कुछ देखना चाहते हो उसे भी देखो ॥ ७ ॥**





न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ८ ॥

संजय उवाच—

एवमुक्त्वा ततो राजन्महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥

---

त्वंतु । अनेनैव - परिमितविषयग्राहिणा इतरनिरपेक्षेण । स्वचक्षुषा-त्वदीयेन मां स चक्षुषा । मां - मदुक्तार्विशिष्टमप्रमेयम्मद्रूपम् । द्रष्टुम् । न शक्तो भविष्यसि, न मां स चक्षुरभिवीक्षते तमितिश्रुतेरिति भावः । तु शब्देन - अहन्तु मद्रूपं दर्शयिष्यामीति व्यज्यते । ते - तव । दिव्यं - अप्राकृतं मद्रूपदर्शनसमर्थम् । चक्षुः - नेत्रं । ददामि । तेन दिव्यचक्षुषा । मे मम । ऐश्वरं - असाधारणम् । योग - अनन्तकल्याण गुण विभूति विग्रह-योगम् । पश्य ॥ ८ ॥

एवं प्रतिज्ञाय ततः कृष्णः किं कृतवानिति पृच्छन्तं धृतराष्ट्रं संजय उवाच—

हे राजन् धृतराष्ट्र ! राज्ञां खलवद्भुत वृत्तांतनिवेदनमुचितमिति भावः । महायोगेश्वरः - महतां - अत्याश्चर्याणां, योगानां - कल्याणगुण-विभूत्यादियोगानां, ईश्वरः - नियन्ता, स्वायत्तीकृत सकलाश्चर्य योग इत्यर्थः । हरिः - तन्मातुलसुतत्व प्रयुक्तवात्सल्यातिरेकेण तत्सारर्थ्यऽवस्थायापि तद्विरोधि निर्हरणे व्याप्रियमाणो भगवान् कृष्णः । एवं - पश्यमेवार्थ रूपाणीत्यादिप्रकारेण । उक्त्वा । ततः - तदनन्तरं । पार्थायाः पितृष्वसुः कुन्त्याः पुत्रायार्जुनाय । परमं निरतिशयं । ऐश्वरं - स्वासाधारणं । रूपं - विविधविचित्र निखिलजगदाश्रयं विग्रहं । दर्शयामास - दिव्य चक्षुर्विषयं चकार ॥ ९ ॥

---

**किन्तु तुम अपने इन चर्म चक्षुओं से मेरे इस रूप का दर्शन करने में समर्थ नहीं हो सकते हो । मैं तुम्हें इस रूप के देखने योग्य दिव्य नेत्र प्रदान करूंगा, उन दिव्यनेत्रों से तुम मेरे उस ऐश्वर्य पूर्ण, अप्राकृत दिव्य मङ्गल विग्रह का दर्शन करो ॥ ८ ॥**

**संजय ने कहा—**

**हे राजन् धृतराष्ट्र ! महायोगेश्वर श्रीकृष्ण ने 'मेरे द्वारा प्रदत्त दिव्यनेत्रों से मेरे विश्वरूप के दर्शन करो' यह कहकर तब अर्जुन को अपने परम ऐश्वर्य विशिष्ट विग्रह रूप के दर्शन दिये ॥ ९ ॥**

**त्वमक्षरं परमं वेदितव्यं त्वमस्यविश्वस्य परं निधानम् ।**
**त्वमव्ययः शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषो मतो मे ॥१८॥**

पराज्जीवादपि परम् । अक्षरं - 'अथपरा, ययातदक्षरमधिगम्यत' इत्यादि श्रुतिप्रसिद्धमक्षरशब्दवाच्यं वस्तु । त्वमेव, नान्यः । अस्य - प्रत्यक्षादि प्रमाणसिद्धस्य । विश्वस्य - जंगमाजंगमात्मकस्य जगतः । परं - अनन्याधारं । निधीयतेऽस्मिन्निति निधानम् - 'सर्वाधारं विष्णुसञ्ज्ञं धामे'त्युक्तरीत्या आधारभूतवस्तु । 'एवमेवैताभूतमात्राः प्रज्ञामात्रास्वर्पिताः' 'आधारभूतं विश्वस्य' इत्याद्युक्तजीवव्यवच्छेदार्थः परशब्दः । त्वमेव । अव्ययः - 'तदव्ययंयद्भूतयोनिं परिपश्यन्तिधीराः' 'अनन्तमव्ययं कविं' इत्यादौ व्ययरहिततयोक्तः, स्वरूपतोगुणतोविभूतितश्च सततैकरूप इत्यर्थः । शाश्वतधर्मगोप्ता - शाश्वतस्य, नित्यस्य, धर्मस्य - शास्त्रचोदितस्य वर्णाश्रमोचितधर्मस्य, गोप्ता - एवमादिभिरवतारैरक्षकः । त्वमेव । 'धर्मसंस्थापनार्थाय संभवामि युगेयुगे' 'यदायदाहि धर्मस्य' इति हि त्वयोक्तमिति भावः । सनातनः - शाश्वतश्च । पुरुषः - 'येनाक्षरं पुरुषं वेदसत्यं' 'वेदाहमेतं पुरुषम्महान्तं' 'परात्परंपुरुषमुपैति दिव्यम्' इत्यादिषु ज्ञेयतयोपास्यतया प्राप्यतया च श्रुतः पुरुषशब्द वाच्यः । त्वमेव । मे मतः - मयाज्ञातः, साक्षात्कृतइतियावत् । अत्रश्लोके त्वमिति प्राचीनमांसचक्षुः प्रतिपन्नाकारानुवादः, अक्षरमित्यादितः दिव्यचक्षुर्लभसाक्षात्कृताकारकथनं, पूर्वमांसचक्षुर्विषयभूतो यदुकुलतिलक स्त्वमेवेदानीं परविद्यावेदितव्याक्षरत्व समस्तजगदाधारत्व शाश्वतधर्मगोप्तृत्वा व्ययत्व पुरुषत्वै रौपनिषदाकारै र्भवत्प्रसादात्साक्षात्कृतोऽसीति भावः ॥१८॥

अनादिमध्यान्तं - उत्पत्तिस्थितिनाशरहितम् । 'नान्तं न मध्य' मित्यादिकं स्वरूपविषयम्, इदं तु विग्रहविषयमित्यपौनरक्त्यम् । अनन्तंवीर्यं यस्य तमनन्तवीर्यं, वीर्यशब्दो ज्ञानबलादेरुपलक्षणार्थः, अनवधिकातिशय ज्ञानबलैश्वर्यवीर्यशक्तितेजो निधिमित्यर्थः । अनन्त बाहुं - अनन्ताः - असं-

हे भगवन् ! आपने कृपा करके मुझे जो दिव्य नेत्र प्रदान किये है, उनके द्वारा मैंने जाना कि वेदशास्त्र प्रतिपाद्य अक्षर पदवाच्य अक्षर पुरुष सूक्ष्म प्रकृति एवं जीवात्मा से भी परे आप ही श्रेष्ठ हैं, अर्थात् प्राकृत नेत्रों से दृष्टिगोचर होने वाले श्रीकृष्णरूप से अवत्तीर्ण हैं । चित् अचित् रूप यह विश्व प्रपञ्च के एकमात्र आधार, अव्यय अर्थात् सदा एक रूप रहने वाले आप ही सदा सनातन धर्म के रक्षक हैं, चिरन्तन आदि उपास्य पुरुष भी आप ही हैं, ऐसा मैं मानता हूँ ॥ १८ ॥





**अनादिमध्यान्तमनन्तवीर्यमनन्तबाहुं शशिसूर्यनेत्रम् ।**
**पश्यामि त्वा दीप्तहुताशवक्त्रं स्वतेजसा विश्वमिदं तपन्तम् ॥१९॥**

ख्येयाः, बाहवः - बाहूदरवक्त्रनेत्रम्, यस्य तं तथोक्तम् । पूर्वं बाहूदरादिनानात्वमात्रमुक्तं, अनेकेत्युक्तेः, इहत्वनन्तेत्यक्ते बाह्वादीनां संख्यानिवृत्तिरिति न पुनरुक्तिः । शशिसूर्यनेत्रं - शशिवत्सूर्यवच्च प्रसादप्रतापयुक्तानि नेत्राणि यस्य तम् । 'रक्षांसि - भीतानि दिशोद्रवन्ति सर्वे नमस्यन्ति च सिद्ध संघाः' इतिवक्ष्यमाणरीत्या नमस्कारादिप्रवणेषु देवादिषु प्रसादः, तद्विपरीतेष्वसुर राक्षसादिषु च प्रताप इति विभागः । दीप्तहुताशवक्त्रम् - ज्वलितकालानल वत्संहारोन्मुखानि वक्त्राणि यस्य तं तथोक्तम् । स्वतेजसा स्वस्य पराभिभवनसामर्थ्येन । इदम् । विश्वम् - जगत् । तपन्तं - अभिभवन्तम् । त्वा - त्वाम् । पश्यामि । यथोपदेशं साक्षात्करोमीत्यर्थः । शाखामूल बहुत्वेपि काण्डैक्याद्वृक्षवद्बाहूदरादिभेदेपि भेदोक्तिरहित कटिप्रदेशैक्यादिह रूपैक्यमिति मन्तव्यम् ॥ १९ ॥

एवं भूतं त्वां दृष्ट्वा देवादयोऽहंचात्यंतभीता भवाम इत्याह---

द्यावापृथिव्योरित्यत्र द्युशब्देनोपरितनलोकालक्षयन्ते, पृथिवी शब्देनाधस्तनलोका लक्ष्यन्ते, तथाच - द्यावापृथिव्योः - चतुर्दशानामपि लोकानाम् । इदम् । अन्तरं - अवकाशः । एकेन त्वयाअति महाविग्रहेण भवता । व्याप्तम् - आक्रान्तम् । सर्वाः दिशश्च व्याप्ताः । हे महात्मन् - अपरिच्छेद्य मनोवृत्तौ । उग्रत्वादि वदयमप्येकोभयहेतुरित्याशयः । इदम् - अनन्तायामविस्तारम् । अद्भुतं - अत्याश्चर्यम् । उग्रं - अतिकरालम् । तव, रूपं - विग्रहम् । दृष्ट्वा । लोकत्रयं - लोकानां - लोकवर्तिनां युद्धदिदृक्षयाऽऽगतानां देवासुरयक्षराक्षसादीनाम्, त्रयं अनुकूल प्रतिकूल मध्यस्थरूपं त्रितयम् । प्रव्यथितं - अत्यन्तभीतम् । अहंच प्रव्यथितः, 'दृष्ट्वा लोकाः प्रव्यथितास्तथाह' मिति वक्ष्यमाणानुसारात् । हि शब्दः पूर्वार्धस्योत्तरार्धं प्रति हेतुत्वंद्योतयति । युद्धदिदृक्षयाऽऽगतानां देवासुराणामप्यर्जुनस्येव भगवतादिव्यचक्षुः प्रदाना-

हे परमेश्वर ! आपका यह विश्वरूप आदि, मध्य और अन्त रहित है, अतएव आप अनन्त ज्ञान बल ऐश्वर्य आदि गुणों से परिपूर्ण हो । असंख्य बाहुओं से युक्त हो, चन्द्रमा के समान शीतल, सूर्य के सदृश प्रतापशाली, बहुत से नेत्रों से विशिष्ट, जलती हुई कालरूपी अग्नि के समान हो, असंख्य मुखों से युक्त हो तथा आपका तेज इस सम्पूर्ण जगत् को अभिभूत किये हैं ऐसा मैं देख रहा हूँ ॥ १९ ॥

**द्यावापृथिव्यो रिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः ।**
**दृष्ट्वाऽद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन् ॥२०॥**
**अमी हि त्वां सुरसंघा विशन्ति केचिद्भीताः प्रांजलयो गृणन्ति ।**
**स्वस्तीत्युक्त्वा महर्षिसिद्धसंघाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः**

त्समस्त जगदाश्रय भगवद्रूपसाक्षात्कार उपपद्यते, देवादीनामपि दिव्यचक्षुः प्रदानन्तु, तेषामपि भगवद्रूपदिदृक्षासम्भवात्सर्वेषामपि युगपदेव भगवद्दिव्य रूपदर्शनप्रापकप्राग्भवीय सुकृतविशेषपरिपाकसन्निपातादर्जुनाय सर्ववंद्यत्व सर्वभूतभयावहत्वादि स्वकीय निरंकुशैश्वर्यप्रकाशरूपप्रकृतोपयोगाच्चेति मन्तव्यम् ॥ २० ॥

अमी । सुरसंघाः - देवसमूहाः । त्वा - त्वाम् । विशन्ति - प्रविशन्ति । अत्रेदं भगवत्प्रवेशनं 'यत्प्रयत्यंभि संविशन्ती' त्यादाविव नप्रलयार्थं स्तुत्यादि समभिव्याहारात्, धार्तराष्ट्राणामिवासन्नोप संहाराभावाच्च, अपितु समीपागमनरूपसेवामात्रम् । सुरशब्दश्चात्र न देवमात्रवाची, केचिद्भीताः इतिधाष्टर्य रहितानां पृथगभिधानात् । येत्वद्भुतभगवद्रूपदर्शनेऽप्यक्षोभ्यहृदया हर्षवन्त उत्कृष्टा ब्रह्मादयः, तइह सुरशब्देनोच्यन्ते । तथाच, अमोब्रह्माद्युत्कृष्ट देवसमूहास्समस्त जगदाश्रयत्वादवलोकनहृष्टमनस स्त्वत्समीप मागच्छन्तीत्यर्थः । हि शब्दोऽवधारणार्थः, त्वामेवेत्यर्थः । केचित् ब्रह्मादिवद्धाष्टर्य रहितादेवाः । भीताः - अत्यद्भुतोग्रभगवदाकार विलोकन जनितभीतयः । प्रगाताः, अंजलयः, येषान्ते प्रांजलयः बद्धाजलयश्चसन्तः । गृणन्ति - स्वज्ञानानुगुणं स्तुतिरूपाणि वाक्यान्यक्रममुच्चारयन्तीत्यर्थः । केचिदित्यम्यसामान्यविषयस्यापि सुरसंघविषयेष्वन्यतमविषयत्वं, केचिदिति पृथक्करणस्य समुदाय विशेषव्यपेक्षायां जात्यन्तरानुपादानात्सुरसंघानां

**हे महात्मन् ! चौदहों भुवनों में व्याप्त आपके इस विशाल, अति आश्चर्यकारक एवं अत्यन्त भयंकर रूप के दर्शन करके देव, दानव, यक्ष, राक्षस आदिक समस्त त्रिलोकी के जीव अत्यन्त भयभीत हो रहे हैं ॥ २० ॥**

**हे भगवन् ! आपके इस अद्भुत विश्वरूप का दर्शन करके कोई-कोई देवता तो प्रसन्नचित्त हो आपके समीप आ रहे हैं, और कोई देवता भय से आर्त होकर हाथ जोड़े हुए खड़े हैं । भृगु आदिक महर्षिगण एवं सनकसनन्दादि सिद्धगण, आपके उपर्युक्त श्रेष्ठ गुणों के कीर्तन के द्वारा आप ही की स्तुति करते हैं ॥ २१ ॥**





**रुद्रादित्या वसवो ये च साध्या विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।**
**गन्धर्वयक्षासुरसिद्धसंघा वीक्ष्यन्ते त्वां विस्मिताश्चैव सर्वे ॥२२॥**
**रूपंमहत्ते बहुवक्त्रनेत्रं महाबाहो बहुबाहूरुपादम् ।**
**बहूदरं बहुदंष्ट्राकरालं दृष्ट्वालोकाः प्रव्यथितास्तथाहम् ॥२३॥**

प्रस्तुतत्वासुरव्यतिरिक्तानां भीत्यापलायनस्य वक्ष्यमाणत्वेन भीताः प्रांजलयो गृणन्तीत्यस्यान्यथा उपपत्त्या च । महर्षिसिद्धसंघाः महर्षिसंघाः - भृग्वादिगणाः, सिद्धसंघाः - सनकसनन्दनादयः । स्वस्तीत्युक्त्वा मङ्गलाशासनं कृत्वा । पुष्कलाभिः - समग्राभिः, त्वदनुरूपाभिरित्यर्थः । स्तुतिभिः - गुणप्रकर्ष व्यंजकोक्तिभिः । त्वाम् । स्तुवन्ति ॥ २१ ॥

रुद्रादित्याः - एकादशरुद्राः, द्वादशादित्याः । वसवः - अष्ट वसवः । साध्यानाम केचन देवयोनयः । विश्वे - विश्वदेवाः । अश्विनौ द्वौ । मरुतः - एकोनपंचाशद्वायवः । ऊष्मपाः - पितरः, ऊष्मभागाहिपितर इति श्रुतेः । गन्धर्वयक्षासुर सिद्धसंघाश्च । ये सन्ति । ते सर्वे च । विस्मिताः - आश्चर्याविष्टास्सन्तः । त्वामेव वीक्षन्ते ॥ २२ ॥

हे महाबाहो ! बहुवक्त्रनेत्रं - बहुमुखनयनम् । बहुबाहूरुपादम् - बहवः बाहवः - भुजाः, ऊरवः पादाश्च, यस्य तं तथोक्तम् । बहूदरं - बहून्युदराणि यस्य तम् । बहुदंष्ट्राकरालं - बह्वीभिः, दंष्ट्राभिः, करालं - अतिभीषणाकारम् । महत् - अपरिच्छेद्यम् । ते - तव । रूपम् । दृष्ट्वा । लोकाः - पूर्वोक्ताः प्रतिकूलानुकूल मध्यस्थभेदेन त्रिविधा युद्धदिदृक्षयाऽऽगताजनाः । प्रव्यथिताः - अत्यन्तभीताः । तथा । अहं च - येनैतद्रूपदर्शनं प्रार्थितं, यदर्थमिदं रूपं भगवताऽदर्शि, तादृशोऽहंच । प्रव्यथितः ॥ २३ ॥

**ग्यारह रुद्र, बारह आदित्य (सूर्य), आठ वसुदेवता साध्य नाम के विश्वदेवगण, दो अश्विनीकुमार, वायु, पितृगण, गन्धर्व, यक्ष और असुरगण, सिद्ध पुरुषों में जो युद्ध दर्शनार्थी यहाँ उपस्थित हैं, वे सब आश्चर्य चकित होकर आपको देखते हैं ॥२२**

**हे महाबाहु वाले भगवन् ! आपके बहुत मुख, बहुत नेत्र, बहुत हाथ और बहुत जंघा, पैर विशिष्ट एवं बहुत भयंकर आकार वाले दांतों से युक्त इस विशाल रूप को देखकर युद्ध देखने के इच्छुक अन्तरिक्ष में स्थित देवऋषि और सिद्धगण, पितृगण, यक्ष, राक्षस आदिक सम्पूर्ण जगत् अति भयभीत हो रहा है एवं मैं भी अत्यन्त डर रहा हूँ ॥ २३ ॥**

**अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।**
**अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥१०॥**
**दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।**
**सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥११॥**

---

तद्रूपं कीदृशमित्यत्राह—

अनेकवक्त्रनयनं - अनेकानि - बहूनि, वक्त्राणि - मुखानि, नयनानि नेत्राणि च, यस्य तथोक्त । अनेकाद्भुतदर्शन - अनेकाद्भुतं दर्शनं यस्य तदनेकाद्भुत दर्शनं - अनवधिकाश्चर्यतया दृश्यमानमित्यर्थः । अनेकदिव्याभरणं - अनेकानि - अनेक जातीयानि, दिव्यानि - अप्राकृततया स्वोचितानि च ; आभरणानि - किरीटकुण्डलादीनिभूषणानि, यस्य तत् - अनेक दिव्याभरणं । दिव्यानेकोद्यतायुधं - दिव्यानि - अप्राकृतानि, अनेकानि - नानाजातीयानि, उद्यतानि - आश्रितविरोधिनिरसनोन्मुखीकृतानि च, आयुधानि यस्य तत् - दिव्यानेकोद्यतायुधं ॥ १० ॥

दिव्यमाल्याम्बरधरं - दिव्यानि - स्वोचितानि, माल्यानि - कुसुमस्रजः, अम्बराणि वस्त्राणि च - धरतीति दिव्यमाल्याम्बरधरं । दिव्यगन्धानुलेपनं - दिव्यगन्धानि - अप्राकृतसौरभाणि, अनुलेपनानि - चन्दनकुंकुमकस्तूरिकादीनि, यस्य तत् - दिव्यगन्धानुलेपनं । सर्वाश्चर्यमयं - आश्चर्यभूत सर्वतत्त्वाश्रयमित्यर्थः । देवं - द्योतमानं । अनन्तं - कालत्रयवर्ति निखिलजगदाश्रयतया देशकालपरिच्छेदानर्हं । विश्वतोमुखं - विश्वदिग्वर्तिमुखं । अनेक वक्त्रेत्युक्तमेवात्र विव्रियत इत्यपौनरुक्त्यं । एतादृशं रूपं दर्शयामासेति पूर्वेणान्वयः ॥ ११ ॥

देवशब्दनिर्दिष्टस्य भास्वरत्वस्य निरतिशयत्वरूपं विशेषमाह—

दिवि - आकाशे । सूर्यसहस्रस्य - सहस्रशब्दोऽत्रानन्त्यवाची, अनन्त-

---

**वह विश्व रूप कैसा था ? इसे वर्णन करते हैं — वह भगवान् का विराट् विग्रह असंख्य मुख और नयन वाला, संख्यातीत आभरण विशिष्ट, असंख्य प्रकार के मारने को उद्यत अस्त्रशस्त्रों से युक्त, दिव्यमाला और दिव्य वस्त्र धारण किये था। दिव्य इत्र फुलेल आदि से परिलिप्त, बहुत प्रकार के आश्चर्य कारक दर्शनों से युक्त, अत्याश्चर्यमय, प्रकाशमान, देश एवं काल की सीमा से अपरिछिन्न, अनन्त मुख वाला अपना विश्वरूप विग्रह श्रीहरि ने अर्जुन को दिखलाया ॥ १०-११ ॥**





**दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।**
**यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥१२॥**
**तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।**
**अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥१३॥**

---

सूर्याणामित्यर्थः । भाः - कांतिः । युगपत् - एककालएव । उत्थिता - उदिताः । भवेद्यदि । सा - भाः । तस्य - भगवतः । महात्मनः । महतो-विग्रहस्य । भासः - तेजसः । सदृशी - समा । स्यात् । अभूतोपमेयं । असदृशं तत्तेज इत्यर्थः । अत्र भगवद्व्यासप्रसादलब्धदिव्यचक्षुषा संजयेना प्यतद्रूपं दृष्टमिति प्रतीयते - कथमन्यथा - इत्थं भगवद्विग्रहकांत्यतिशयवर्णन मुपपद्यते ॥ १२ ॥

तत्र - अनन्तायामविस्तारेऽपरिमित तेजस्के अनन्ताश्चर्यमये । देवदेवस्य - मनुष्याणां देववद्देवानामपि ब्रह्मरुद्रादीनां द्रष्टुमशक्यस्य भगवतः । शरीरे - देहे । एकस्थं - एकदेशस्थितम् । अनेकधा - विविध विचित्र भोक्तृ भोग्यभोगोपकरण भोगस्थानादि बहुप्रकारैः । प्रविभक्तं - भिन्नम् । कृत्स्नं, प्रकृतिपुरुषात्मकं सर्वम् । जगत् । तदा - तस्मिन्काले । पाण्डवः । अपश्यत् - भगवत्प्रसादलब्ध तद्दर्शनानुगुण दिव्यचक्षुषा ददर्श ॥ १३ ॥

सः । धनंजयः - अर्जुनः । ततः - तस्मात् , अदृष्टपूर्वभगवद्दिव्य विग्रहदर्शनाद्धेतोः । विस्मयाविष्टः - विस्मयेन - आश्चर्येण, अद्भुत रसदायिना, आविष्टः - आक्रान्तः । अतएव,हृष्टरोमा - हृष्टानिस्तब्धानि, रोमाणि, यस्य, तथोक्तस्सन् । देवं - एकदेशं नैव कृत्स्न जगदाश्रयभूतं स्वासाधारणं विग्रहं प्रदर्शयितारमाश्चर्यैकनिधिं तपन्तम् । शिरसा - किरीटितया जगद्विदितेन मूर्ध्नासह । प्रणम्य दण्डवत्पुनः पुनर्भूतले पतित्वा । कृतांजलिस्सन् । अभाषत उवाच ॥ १४॥

---

**आकाश में यदि असंख्य सूर्यों का तेज एक साथ उदित हो, तो वह तेज श्री भगवान् के उस दिव्य विग्रह के तेज के समान कथंचित् हो सकता है ।। १२ ।।**

**तब अर्जुन ने अनन्त विस्तार युक्त, अपरिमित (असीम) तेज से पूर्ण, अनन्त आश्चर्यमय देवदेव अर्थात् ब्रह्मादि देवों के भी देव श्रीहरि के एक अंश में अर्थात् भोक्तृवर्ग, भोग्य वस्तु समूह, भोगस्थान समूह रूप अनेक प्रकार से विभक्त जड़ और चेतन वस्तु विशिष्ट समस्त विश्व को स्थित देखा ।। १३ ।।**

**ततः स विस्मयाविष्टो हृष्टरोमा धनंजयः ।**
**प्रणम्य शिरसा देवं कृतांजलिरभाषत ॥१४॥**

अर्जुन उवाच—

**पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसंघान् ।**
**ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुरगांश्च दिव्यान् ।१५**

हे देव ! तव । देहे - दिव्यविग्रहे । सर्वान् - कर्मजानाजानजांश्च समस्तान् । देवान् - द्वादशादित्यान्, त्रयस्त्रिंशतं वा । तथा - सर्वान् भूतविशेषसंघान् - प्राणिविशेषसमूहान् । अत्र विशेषोपादानं क्रिमिकीटदंश मशकादि क्षुद्रजन्तुव्यावर्तनाय, तत्सम्बन्धस्य हेयत्वादस्मदादि प्राकृतशरीर साधारणत्वाच्च । ब्रह्माणं - अण्डाधिपतिं चतुर्मुखम् । कमलासनस्थं - कमलासने ब्रह्मणि, स्थितं, तन्मतेस्थितम् । ईशं - रुद्रम् । ईशपदव्यवधानादासनपदवैयर्थ्याच्च कमलासनस्थमित्यस्य ब्रह्मविशेषणत्वायोगात्; नचेशपदमपि चतुर्दश भुवननियंतृवाचि तया ब्रह्मविशेषणं, ब्रह्माणमिति पुंलिंग ब्रह्मशब्देनैव चतुर्मुखासाधारणेन तस्यार्थतस्सिद्धेः; ब्रह्मशब्दवद्द्रष्टव्य देवतांतर परत्वे स्वारस्यातिशयाच्च । दिव्यान् - प्राकृतसर्वविलक्षणान् । सर्वान् । उरगांश्च - वासुकितक्षकप्रमुखान् सर्पांश्च । पश्यामि ॥ १५ ॥

विश्वेश्वर - विश्वस्य - चिदचिदात्मकस्य जगतः, ईश्वरः - अन्तर्व्याप्यनियन्तः । अनेन विश्वरूपत्वहेतुशरीरित्वमुक्तम्, अन्तः प्रविश्यनियन्ताहि शरीरीति भावः। हे विश्वरूप - विश्वशरीर । अनेक बाहूदरवक्त्रनेत्रं, अनेकानि - बहूनि, बाहवः - भुजाः , उदराणि कुक्षयः, वक्त्राणि - मुखानि, नेत्राणि - चक्षूंषि च, यस्य तन्तथोक्तम् । अनन्तरूपं - अनन्तानि - देशकालपरिच्छेदरहितानि, रूपाणि यस्य तत्वाम् । सर्वतः - समन्तात् । पश्यामि । त्वत्प्रसादलब्धदिव्यचक्षुष्ट्वादिति भावः अनन्तरूपत्वमेवोप-

इस विश्वरूप के दर्शन कर लेने पर अर्जुन ने अत्यन्त आश्चर्य से रोमांचित होकर जिन भगवान के एक अंश में सम्पूर्ण जगत् उपस्थित है ऐसे जगदाधार स्वरूप भगवान् को साष्टाङ्ग प्रणाम कर हाथ जोड़कर कहना प्रारम्भ किया ॥ १४ ॥

अर्जुन ने कहा—

हे देवदेव ! आपके शरीर में समस्त देवगणों को, विशेष प्राणियों को एवं कमल के आसन पर बैठे ब्रह्माजी को, महादेव जी को, दिव्य ऋषिगणों को एवं दिव्य सर्पगणों को मैं देख रहा हूँ । ॥ १५ ॥





**अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूपम् ।**
**नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर विश्वरूप ।१६**
**किरीटिनं गदिनं चक्रिणं च तेजोराशिं सर्वतो दीप्तिमन्तम् ।**
**पश्यामि त्वां दुर्निरीक्ष्यं समन्ताद्दीप्तानलार्कद्युतिमप्रमेयम् ॥१७॥**

पादयति, (नान्तमिति) तव । अन्तंपुनः - उत्तरावधिन्तु । न पश्यामि । मध्यं च न पश्यामि । आद्यन्तोभयनिरूपणीयत्वान्मध्यस्य तयोरभावे मध्याभावोऽप्यर्थसिद्ध इत्यर्थः । भवत्प्रसादलब्धदिव्य चक्षुषो ममयोग्यानुपलंभादादिमध्यांतास्तव तुरंगस्य शृंगवन्नविद्यंत इत्येव धारयामीति भावः ॥ १६ ॥

तेजोराशिं - तेजशां समूहरूपम् । सर्वतोदीप्तिमन्तं - सर्वत्रापि प्रभायोगिनम् । दीप्तानलार्कद्युतिं - दीप्तानां, अनलानां - अग्नीनां, अर्काणां - सूर्याणां च, द्युतिरिवद्युतिर्यस्यतं तथोक्तम् । अत्र बहुवचनां तयोरनलार्कपदयो रितरेतरयोग द्वन्द्वाश्रयणाद् द्वन्द्वावगतेतरेतरसाहित्यस्य विवक्षितत्वाच्च परस्परसहितयुगपद्दीप्यमानानेकाग्निसूर्यसमद्युतित्वं लभ्यते, तेनपूर्वं दिविसूर्यसहस्रस्येत्यसदृशत्वमुक्त्वा इहानलार्क सदृशत्वमुच्यत इति शंका-च नास्ति । अत्र द्युतिशब्देन किरणरूपं तेजउच्यते, अतो न दीप्तिमन्तमित्यनेन पुनरुक्तिः । अप्रमेयं - ईदृश इयानिति परिच्छेत्तुमशक्यम् । दीप्तानलार्क द्युतित्वादेव, समन्तात् - सर्वतः । दुर्निरीक्ष्यं - क्वचिदपि, विग्रहप्रदेशे निरीक्षितुमशक्यम् । एवमदृष्टपूर्वरूप दर्शनेपि त्वदसाधारणै श्चिह्नैस्त्वां स मन्मातुलसुत एवायमिति प्रत्यभि जानामीति भावः ॥ १७ ॥

वेदितव्यं - 'द्वे विद्येवेदितव्ये पराचापराचे'ति मुण्डकोप निषदादिषु वेदितव्यतयानिर्दिष्टम् । परमं - 'अक्षरात्परतः पर' इत्युक्तरीत्या प्रकृतेः

हे विश्वरूपधारण करने वाले, हे विश्व के नियन्ता, विश्वेश्वर, असंख्य बाहु, उदर, मुख और नेत्र विशिष्ट एवं अनन्त रूप विशिष्ट सर्वत्र देखता हूँ । आपका आदि, अन्त और मध्य कुछ भी नहीं देख पा रहा हूँ ॥ १६ ॥

हे कृष्ण ! मैं आपको किरीट धारण किये, गदा धारण किये, सुदर्शन चक्र हस्त कमल में लिए, तेज की राशिरूप, सर्वव्यापी, प्रकाशमय, प्रदीप्त अग्नि और सूर्य के प्रकाश सदृश तेजपूर्ण अतएव सब प्रकार से देखने में अति गहन, अतुलनीय विग्रह वाले रूप में देख रहा हूँ ॥ १७ ॥

**नभः स्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रम् ।**
**दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा धृतिं न विन्दामि शमं च विष्णो२४**

हे विष्णो - सर्वव्यापिन् । नभस्स्पृशं नभः स्पृशतीति नभस्स्पृक्, तंतथा । अत्र नभशशब्देन 'तदक्षरे परमे व्योम्नी' त्यादि श्रुतिसिद्धस्त्रिगुण-प्रत्यतीतश्शुद्धसत्वमयः परमाकाश उच्यते, नतु प्राकृताकाशः, तत्स्पर्शस्य 'द्यावापृथिव्योरिदमन्तरं हि व्याप्त' मिति पूर्वमुक्तत्वेन पुनरुक्तिप्रसंगात् । दीप्तं - तेजाराशितया सर्वदेशव्यापिप्रभायोगिनम् । अनेकवर्णं - अनेके, वर्णाः - सितंरक्तपीतादयः, यस्य तं तथोक्तम् । व्यात्ताननं - व्यात्तानि - विवृ-तानि, जगद्ग्रसनोन्मुखतयाऽवस्थितानि' आननानि - मुखानि, यस्य तम् । दीप्तविशालनेत्रं - दीप्तानि - आश्रितानाश्रितरूपविषयभेदेन सौम्यासौम्य दीप्तिमन्ति, विपुलानि, नेत्राणि यस्य तम् । त्वां दृष्ट्वा । प्रव्यथितः - अत्यन्तभीतः, अन्तरात्मा - मनः, यस्य सः,प्रव्यथितान्तरात्मा सन् । धृतिं - शरीर धारणम् । नविन्दामि - नलभे, प्रशिथिलसर्वावयवोभवामीत्यर्थः । शमं - मनस इन्द्रियाणां शांतिं च । न विन्दामि । व्याकुलीभवामीत्यर्थः । अत्रा-त्मशब्दनिर्दिष्टस्य मनसोऽन्तरत्वम् 'तस्माद्वा एतस्मात्प्राणमयात्, अन्योन्तर आत्मा मनोमय' इति श्रुत्युक्तरीत्याऽन्नमयप्राणमयापेक्षयाद्रष्टव्यम् । अचेत-नेपि मनसि चेतनधर्मभीव्यपदेशश्चेतनत्वारोपेण भीत्यतिशयद्योतनार्थः ।।२४।।

अवयवांतरेभ्यो मुखानामतिभयङ्करत्वं व्यंजयन्नाह—

दंष्ट्राकरालानि - दंष्ट्राभिः, करालानि - अतिभीषणानि । कालानल सन्निभानि च - कालानलस्य - प्रलयकालाग्नेः, सदृशानि च । तद्वत्सर्व संहारे प्रवृत्तानीत्यर्थः । ते - तव । मुखानि । दृष्ट्वैव । नतु त्वत्तः किंचिदु-पमर्दं प्राप्येत्यर्थः । दिशः । न जाने - नवेद्मि । यासु दिक्षु स्थित्वा त्वद्दर्शनेन स्वस्थो भवेयमित्यर्थः । यद्वा दिक्छब्दो गत्यन्तरपरः । दिशः - त्वदन्यागती र्नजान इत्यर्थः । शर्म च सुखं च । न लभे - न प्राप्नोमि । एवं स्वावस्थां निवेद्य यथोपदेशं साक्षात्कृत भगवदाकारानुवादपूर्वकमात्मन स्वस्थताम्प्रा-र्थयते 'प्रसीदे'ति । हे जगन्निवास ? जगतां - सर्वेषां, स्वविग्रहैकदेशेन निवा-

**क्योंकि आकाश को स्पर्श करने वाले, कान्तियुक्त, अनेक वर्ण विशिष्ट, जगत् के स्वामी, फैलाये हुए मुख से युक्त, देदीप्यमान विशाल नेत्रों से विशिष्ट आपको देखकर मेरा मन अत्यन्त भयभीत होता है, मेरा मन धैर्य और शान्तिको प्राप्त नहीं हो रहा है ।। २४ ।।**





**दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसन्निभानि ।**
**दिशो न जाने न लभे च शर्म प्रसीद देवेश जगन्निवास ।।२५।।**
**अमी च त्वां धृतराष्ट्रस्य पुत्राः सर्वे सहैवावनिपालसंघैः ।**
**भीष्मो द्रोणः सूतपुत्रस्तथाऽसौ सहास्मदीयैरपि योधमुख्यैः ।।२६।।**

सभूत । देवेश - देवानां ब्रह्मादीनामपि महेश्वर । प्रसीद - यथाऽहं स्वस्थो भवेयम् तथा मयि प्रसादं कुरु ।। २५ ।।

एवं सर्वस्य जगतस्स्वाधीनस्थिति प्रवृत्तितां दर्शयता भगवता पार्थ-सारथिना राजवेषकंचुकितानां धार्तराष्ट्राणां पाण्डवेष्वनुप्रविष्टानां चासुरां-शानां संहारेण भूभारावतरणे स्वमनीषिते स्वेनैव करिष्यमाणे पार्थाय दर्शिते स च पार्थोभगवतस्सर्वं स्रष्टृत्वादिकमैश्वर्यं च साक्षात्कृत्यास्मिन्नेव सर्वा-त्मनि भगवति धार्तराष्ट्रादीनामुपसंहारमनागतमपि तत्प्रसादलब्धेन दिव्येन चक्षुषा साक्षात्कुर्वन्निदं धार्तराष्ट्रविषयं वचनमाह—

अमी । सर्वे । धृतराष्ट्रस्य । पुत्राः - दुर्योधनादयः । भीष्मः । द्रोणः । तथा । असौ । सूतपुत्रः - कर्णश्च । अवनिपालसंघैस्सहैव - दुर्यो-धनादिपक्षीयैः राजसमूहैः स्सर्वैः स्सहैव । अस्मदीयैः अस्मत्पक्षीयैः । कैश्चित् । योधमुख्यैरपि सह । त्वा हि । विशन्तीत्युत्तरश्लोकादनुषंजनीयम् । त्वय्येवमलीयन्त इत्यर्थः । नास्य श्लोकस्योत्तरश्लोकेनैकवाक्यता, अत्रत्वेति भगवतः कर्मत्वेन निर्देशादुत्तरश्लोके वक्त्राणां कर्मत्वे निर्देशात् ।। २६ ।।

तेषां भगवति प्रवेशं विवृणोति—

अमी - दुर्योधनादयः । त्वरमाणाः - सत्वरास्सन्तः । अनेन विशेष-णेन धार्तराष्ट्राणामपराध क्रौर्यातिशयमूलकं भगवता शीघ्र संहरणं व्यज्यते,

**भीषण दांतों वाले एवं प्रलयकाल की अग्नि के समान सबके संहार करने में प्रवृत्त आपके अति भयङ्कर मुख मण्डल के दर्शन मात्र से ही मैं दिग्भ्रमित (भ्रान्त जैसा) हो गया हूँ, अर्थात् किस ओर से इस रूप के दर्शन करने से मैं व्याकुल नहीं हो सकूँगा यह समझ नहीं पा रहा हूँ और शान्ति को भी प्राप्त नहीं कर पा रहा हूँ ।। २५ ।।**

**वे भीष्म, द्रोण, कर्ण और दुर्योधन आदि धृतराष्ट्र के पुत्रों के समुदाय को हमारे पक्ष से कोई कोई योद्धा सहित आपके मुख में प्रविष्ट होते में देखता हूं ।। २६ ।।**

**वक्त्राणि ते त्वरमाणाविशति दंष्ट्राकरालानि भयानकानि ।**
**केचिद्विलग्ना दशनान्तरेषु संदृश्यन्ते चूर्णितैरुत्तमांगैः ॥२७॥**
**यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति ।**
**तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभिविज्वलन्ति॥२८॥**

---

दंष्ट्राकरालानि - दंष्ट्रभिः, करालानि - विकृतानि । भयानकानि - भयंकराणि । ते - तव । वक्त्राणि - आस्यानि । विशंति, नाशाय बक्त्रेष्वन्तः पतन्तीत्यर्थः । केचित् - तेष्वन्यतरेराजानः । चूर्णितैः - भगवद्दन्तघातेन चूर्णीकृतैः । उत्तमांगैः - शिरोभिः । उपलक्षिताः । दशनान्तरेषु - त्वदीयन्तावकाशेषु । विलग्नाः - सक्तास्सन्तः । संदृश्यन्ते ॥ अत्र पूर्वश्लोके 'अमी-सर्वे धृतराष्ट्रस्य पुत्रास्सर्वै स्सहैवावनिपालसंघै'रिति पठितु'' श्लोकद्वयमेकवाक्यमेव । अयमेवपाठोयुक्तः शब्दानामाकर्षोत्कर्षादिक्लेशाभावादिति स एवादृतश्श्रीभाष्यकारैः, पाठान्तरमपि दृश्यते व्याख्यातं च कैश्चिदिति तदपि व्याख्यातम् ॥ २७ ॥

धार्तराष्ट्रादीनां सत्वरं भगवद्वक्त्रप्रवेशे दृष्टांतद्वयमाह यथेत्यादि-श्लोकद्वयेन—

यथा । बहवः - भूयांसः । नदीनाम् । अम्बुवेगाः, वेगशब्दोऽत्रवेगवत्प्रवाहपरः, जलप्रवाहा इत्यर्थः । समुद्रं प्रत्येव । अभिमुखास्सन्तः । नाशाय । द्रवन्ति - गच्छन्ति । नदीनां नाशोनाम पृथग्भूतप्रवाहाकारत्यागः । तथा । अमी । नरलोकवीराः - नरलोके - मनुष्यलोके, वीराः - योधाः, राजान इत्यर्थः । स्वयमेवत्वरमाणाः । अभिविज्वलन्ति - अभितो दीप्यमानानि । तव । वक्त्राणि । नाशाय । विशन्ति ॥ २८ ॥

यथा । पतंगाः - शलभाः । नाशाय - भस्मीभावाय । समृद्धवेगाः - सम्पूर्णवेगाः स्वयमेव त्वरमाणास्सन्त इत्यर्थः । प्रदीप्तज्वलनं - प्रदीप्तं-प्रकर्षेण

---

**वे बड़े वेग से नष्ट होने के लिए भीषण दाँतों वाले आपके भयङ्कर मुख में प्रविष्ट हो रहे हैं । उनमें से कोई कोई तो चूर्ण हुए सिरों सहित आपके इन कराल दाँतों के बीच में लगे हुए हैं ऐसा मैं देखता हूँ । २७ ॥**

**हे विश्वरूप जैसे नदियों का बड़ा वेगवान् जलप्रवाह समुद्र की ओर ही दौड़ता हुआ उसी में प्रविष्ट होता है, उसी प्रकार ये समस्त योद्धा राजागण अत्यन्त वेग से नष्ट होने के लिए आपके मुख में प्रवेश करते हैं ॥ २८ ॥**





**यथा प्रदीप्तं ज्वलनं पतंगा विशन्ति नाशाय समृद्धवेगाः ।**
**तथैव नाशाय विशन्ति लोकास्तवापि ववत्राणि समृद्धवेगाः ॥२९॥**
**लेलिह्यसे ग्रसमानः समंताल्लोकान् समग्रान् वदनैर्ज्वलद्भिः ।**
**तेजोभिरापूर्य जगत्समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो ॥३०॥**

---

दीप्यमानं, ज्वलनं - पावकम् । विशन्ति । पतंगादीनां प्रदीपादिषु पक्षवेगादिभि र्नाशिकत्वस्यापि कदाचित्सम्भवात्तद्व्यवच्छेदाय प्रदीप्तविशेषणम् । तथैव । लोकाः राजलोका अपि । समृद्धवेगास्सन्तः । नाशाय - नाशंप्राप्तुम् । तव । वक्त्राणि विशन्ति । अत्र स्वेच्छया पुनर्निवर्तितुमशक्तत्वेन नदीप्रवाह दृष्टान्तः । नाशस्य स्वेच्छानुकूल व्यापारहेतुकत्वव्यंजनाय पतंग दृष्टान्तः । अपि च सर्वप्रवेशेप्यपूर्णत्वविवक्षया समुद्रनिदर्शनम् ॥ सहसा-विध्वंसनाय ज्वलनोदाहरणम् ॥ २९ ॥

स्वयमेव त्वरमाणा इत्यनेन तत्संहरणे भगवताऽत्यन्तनिर्व्यापारत्व शंकां निराकरोति—

समग्रान् - युद्धाय समवेतान् । लोकान् - राजजनान् । ज्वलद्भिः - दीप्यमानैः । वदनैः । ग्रसमानः - भक्षयन् । समन्तात् - सर्वतः । तद्रुधिरावसिक्तं सर्वमोष्ठपुटादिप्रदेशमित्यर्थः । लेलिह्यसे - कोपवेगेन जिह्वयापुनः पुनर्लेहनं करोषि । हे विष्णो ! उग्राः - अतिघोराः । तव । भासः - रश्मयः । तेजोभिः - स्वकीयप्रकाशैः । समग्रं - सर्वम् । जगत् । आपूर्य - आवृत्य । प्रतपन्ति - सन्तापयन्ति । ग्रसनार्थं पचन्तीत्यर्थः । संहरणे तत्तच्चेतनानां युद्धादिव्यापारविशेषोनिदानम्, तद्धेतुककोपादिविशिष्टस्तु भगवान् संहरतीति भावः ॥ ३० ॥

एवमत्यन्त घोराकारदर्शनं सोढुमशक्नुवन्नर्जुन स्स्वैश्वर्यप्रकाशन प्रवृ-

---

**जैसे पतंगे मोह के वशीभूत होकर भस्म होने के लिए बड़ी तेजी से जलती हुई अग्नि में प्रवेश करते हैं, उसी प्रकार ये योद्धागण भी नष्ट होने के लिए अति वेग से आपके मुखरूपी छिद्र में प्रविष्ट होते हैं ।। २९ ॥**

**युद्ध के लिए इकट्ठे इन समस्त योद्धागणों को आप जलते हुए अपने मुखों से ग्रसन करते हुए, सब ओर से चाट रहे हो । हे विष्णो ! आपका अतिउग्र तेजोमय प्रकाश सम्पूर्ण जगत् को तेज से व्याप्त करके सन्तप्त करता है ।। ३० ॥**

**आख्याहि मे को भवानुग्ररूपो नमोस्तु ते देववर प्रसीद ।**
**विज्ञातुमिच्छामि भवंतमाद्यं न हि प्रजानामि तव प्रवृत्तिम् ॥३१॥**

श्रीभगवानुवाच—

**कालोऽस्मि लोकक्षयकृत् प्रवृद्धो लोकान् समाहर्तुमिह प्रवृत्तः ।**
**ऋतेऽपि त्वां न भविष्यन्ति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः ।३२**

तस्य भगवत एतादृश घोररूपाविष्कारे तात्पर्यकथनं पुनः प्रसन्नरूपपरिग्रहार्थं प्रसादं च प्रार्थयते—

हे देववर - ब्रह्मरुद्रादिसमस्तदेवतासार्वभौम । एतेन नमस्कारशेषित्वं व्यंजितम् । ते - तुभ्यम् । नमः । अस्तु । उग्ररूपः - अतिभयंकरविग्रहः । भवान् । कः । तवनिरंकुशैश्वर्यं साक्षात्कर्तुं मर्थयमानस्य भक्तस्य मम घोररूपाविष्करणे को वाऽभिप्राय इति प्रश्नार्थः, उपदेशसाक्षात्काराभ्यामेव स्वरूपेण भगवतः प्रतिपन्नत्वात् । आद्यं - आदौ - सृष्टेः पूर्वं, विद्यमानं, स्रष्टारमित्यर्थः । अनेन स्वप्रार्थितभगवत्प्रदर्शितस्वसाक्षात्कृतस्रष्टृत्वादि निरंकुशैश्वर्याणामंश उक्तः । एवंविधं । भवन्तं - त्वाम् । विज्ञातुं - किंकर्तुं प्रवृत्तइति विशिष्यज्ञातुम् । इच्छामि - अभिलषामि । हि - यस्मात् कारणात् । तव । प्रवृत्तिं - अभिप्रायविषयभूतं प्रयत्नम् । न प्रजानामि । आख्याहि - अनेनाभिप्रायेणेदं संहर्तृ रूपमाविष्कृतमित्युत्तरं ब्रूहि । प्रसीद - प्रसन्नरूपश्च भव ॥ ३१ ॥

एवं पार्थेन पृष्टो भगवान् पार्थसारथिः - त्वदुद्योगेन विनापि धार्त-

---

**हे देवताओं में श्रेष्ठ भगवन् ! मैं आपको नमस्कार करता हूँ । अत्यन्त भयङ्कर विग्रह विशिष्ट पुरुष आप कौन हैं ? अर्थात् आपका इस उग्र मूर्ति धारण करने का क्या प्रयोजन है, यह मैं नहीं समझ पा रहा हूँ । आदिपुरुष आपको मैं विशेष रूप से जानने की इच्छा करता हूँ । आपका इस प्रकार उग्र रूप धारण करने का क्या अभिप्राय है यह भी मैं नहीं जानता । आप कृपा करके मुझे इस सबका रहस्य बता दीजिये, आप मुझ पर प्रसन्न हो जाइये ॥ ३१ ॥**

**इस प्रकार अर्जुन के पूछने पर श्रीभगवान् बोले—मैं ही लोक का संहारकर्ता मूर्तिमान् काल हूँ । मैं ही इन समस्त योद्धाओं के संहार करने के लिए प्रवृत्त हो महाघोर काल रूप से प्रचण्ड हुआ हूँ । तुम्हारे द्वारा युद्ध न करने पर भी शत्रु सेना में उपस्थित यह सब योद्धा पुरुष जो यहाँ मौजूद हैं, वे सब कोई भी बच नहीं सकते, वे सब मेरे संकल्प के आधीन हैं, सबके सब नष्ट होंगे ही ॥ ३२ ॥**





**तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम् ।**
**मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन् ॥३३॥**

राष्ट्रप्रमुखाशेषराजलोकं संहर्तुमहमेव प्रवृत्तइति तव ज्ञापयितुं मम घोररूपाविष्करणं, तज्ज्ञापनं च त्वामुद्योजयितुमिति स्वाभिप्रायमाह "कालोस्मी"त्यादिना श्लोकत्रयेण ॥

लोकक्षयकृत् - लोकसंहर्ता । कलयति - गणयति, प्राणिनामायुरवसानमिति कालः - मृत्युः, तच्छरीरकः । अस्मि । अहम् । लोकान् - नृपजनान् । समाहर्तुं - आभिमुख्येन संहर्तुम् । अपरोक्षेण संहर्तुमित्यर्थः । अनेन भृत्यद्वारा शत्रुनिरसनवत्परोक्षसंहारो व्युदस्यते । प्रवृत्तस्सन् । इह - कुरुक्षेत्रे । प्रवृद्धः - महता घोरेग रूपेण विजृम्भितः । अस्मि । अतः । प्रत्यनीकेषु शत्रुसेनासु । ये । योधाः - भीष्म द्रोणादियाद्धारः । अवस्थिताः । ते । सर्वे । त्वा - त्वाम्, त्वदुद्योगम् । ऋते - विनापि । न भविष्यति - मत्संकल्पादेव नष्टाभविष्यन्ति ॥ ३२ ॥

यदि मदुद्योगं विनापि धार्तराष्ट्रादयो नंक्ष्यन्ति - तर्हि किमर्थम्मामुद्योजयसीत्यत्राह—

तस्मात् - मत्प्रवृत्तेरेतदर्थत्वाद्धेतोः । त्वम् । उत्तिष्ठ, तैर्योद्धुमिति मेषः । यशः - देवैरपि दुर्जया भीष्मादयोऽर्जुनेन निर्जिता इत्येवं कीर्तिम् । लभस्व । शत्रून् । जित्वा - अयत्नेन निर्जित्य । समृद्धं - सर्वभोग्यादि सम्पन्नम् । राज्यम् । भुङ्क्ष्व । नन्वेवम्ममानृशंस्यभंगः - पापं च स्यात्, जयोप्यशक्य निश्चय इत्यत्राह (मयैवेति) एते - कृतापराधा धार्तराष्ट्रादयः । पूर्वमेव - त्वद्युद्धोद्योगात्प्रागेव । मयैव । निहताः - निहन्तुं संकल्पिताः । स्वसङ्कल्पस्यामोघत्वात्फलसिद्धचविनाभावेन निहता इत्युक्तिः । हे सव्यसाचिन् - सव्येनापि करेण, साचयितुं - शरसन्धानादिकं कर्तुम्, शीलमस्यास्तीति सव्यसाची, तस्य सम्बुद्धिः ; करद्वयेनापि योद्धुं समर्थ इत्यर्थः । भूभार निर्हरणार्थं तवेदृशं सामर्थ्यं मया संकल्पितमिति भावः । निमित्तमात्रं

---

**इसलिए हे अर्जुन तुम युद्ध करने के लिए उठकर खड़े हो जाओ । शत्रुओं पर विजय प्राप्त कर यश का लाभ करो और समृद्धशाली राज्य का उपभोग करो । तुम्हारे द्वारा युद्ध करने के पूर्व ही मैंने इन सबका वध कर रखा है, अर्थात् मेरे संकल्प से ये सब मृत्यु को प्राप्त करेंगे ही । हे सव्यसाची अर्जुन ! तुम इन सबके विनाश में केवल निमित्त हो जाओ ॥ ३३ ॥**

**द्रोणंच भीष्मंच जयद्रथंच कर्णं तथान्यानपि योधवीरान् ।**
**मयाहतांस्त्वं जहि मा व्यथिष्ठा युध्यस्व जेतासि रणे सपत्नान् ।।३४**

तेषाम्मत्कर्तृकहनने त्वं शस्त्रादिकरणस्थानीयः । भव । प्राधान्यव्यवच्छेदाय मात्र शब्दः । भगवानेवात्र शत्रुसंहरणे प्रधानकारणम्, अहन्तु तदुपकरणमित्यनुसन्दधानः पापनैर्घृण्य पराजयशंकां त्यजेति भावः । मद्भक्तस्य तव जय यशो राज्यलाभार्थं त्वदुद्योजनमिति श्लोकतात्पर्यम् ॥ ३३ ॥

अर्जुनस्यास्थानस्नेहकारुण्यधर्माधर्मभयमूलं - 'कथं भीष्ममहं सख्ये' इत्यादिकं साक्षात्प्रतिवदति—

मया - सर्वसंहर्त्रा । हतान् - हननाय संकल्पितान् । द्रोणम् । भीष्मम् । जयद्रथम् । तथा । कर्णम् । अन्यान् । योधवीरानपि - योधश्रेष्ठानपि । त्वम् । जहि - हन्याः । मारितमारणे किं कारुण्यं का धर्मादिशंकेति भावः । ननु त्वया हननाय संकल्पितानपीदानीं जीवतो भीष्मादीन् कथं हन्यां, तथासति - मामयं लोको गुरुहन्ताबन्धुहन्तेति वक्ष्यति, एतज्जयश्चातिदुर्लभ इत्यत्राह माव्यधिष्ठाः - व्यथां माकृथाः । युद्धचस्व - स्ववर्णोचितं धर्मयुद्धं कुरु । रणे - युद्धे । सपत्नान् - आचार्यबन्धुरूपानपि प्रतिपक्षे नु प्रवेशेन शत्रुभूतान् । जेतासि - जेष्यसि । यदि द्रोणादीनुदासीनांस्त्वं हन्याः तदा तव लोकनिन्दा स्यात्, प्रतिपक्षीभूय युध्यमानां स्तान् स्ववर्णोचितेन धर्मयुद्धेन निघ्नत स्तव लोकनिन्दागन्धः कश्चिदपि नास्ति, मदीयामोघसंकल्पेन तेषां मरणावश्यम्भावाज्जयोपि तवातिसुलभ इति भावः ॥ ३४ ॥

एवमर्जुनाय भगवता स्वाभिप्राये कथिते तदनन्तरं किं वृत्तमिति धृतराष्ट्रेन पृष्टस्संजय उवाच—

किरीटी - अर्जुनः । केशवस्य - ब्रह्मरुद्रादेरपि नियन्तुर्भगवतः । एतत् - स्वाभिप्रायाविष्करणरूपं वचनम् । निशम्य । नमः - नमस्कारम् ।

**'आचार्यों पर मैं कैसे शस्त्रघात करूँगा' इसका उत्तर देते हुए भगवान् श्रीकृष्ण कहते हैं—द्रोण, भीष्म जयद्रथ, कर्ण एवं अन्यान्य जिन वीर योद्धागण को मैंने अपने संकल्प से पहले से ही निहत कर रखा है, उन्हें तुम निमित्त मात्र बनकर नाश करो । मेरे संकल्प से मृत इन सब स्वजनों के प्रति तुम दुःखी न होना । उठो, क्षत्रिय वर्ग के उचित धर्मयुद्ध करो । मेरे अमोघ संकल्प के अनुसार इन सबका मरण अवश्यंभावी है, इसलिए तुम्हारा युद्ध में विजय प्राप्त करना सुलभ है ।।३४।।**





संजय उवाच—

**एतच्छ्रुत्वा वचनं केशवस्य कृतांजलिर्वेपमानः किरीटी ।**
**नमस्कृत्वा भूय एवाह कृष्णं सगद्गदं भीतभीतः प्रणम्य ।।३५।।**

अर्जुन उवाच—

**स्थाने हृषीकेश तव प्रकीर्त्या जगत् प्रहृष्यत्यनुरज्यते च ।**
**रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसंघाः ।।३६।।**

कृत्वा । भीतभीतः - तद्रूपवत्तद्वचनस्यापि राजलोकसंहाराभिप्रायकथनरूपत्वेन भयजनकत्वान्निरूपणाज्ञानेन पूर्वमेव भीतो वचनश्रवणादति भीतस्सन् । भूयएव । प्रणम्य - प्रणिपत्य । कृतांजलिः - सम्पुटीकृतकरद्वयस्सन् । वेपमानः - कम्पमानः । कृष्णं - आश्रितसंसारकर्षणशीलं भगवन्तम् । सगद्गदं - गद्गदेन विकृतकण्ठस्वरेण सहितं यथातथा । आह ॥ अत्र नमस्कृत्वेत्यनेन स्वाभिप्रायावेदकभगवद्वचनश्रवणानन्तरमवश्यकर्तव्यः प्रथमनमस्कार उक्तः, भीतभीतस्य वक्ष्यमाणवाक्यप्रारम्भार्थौ पुनःप्रणामांजली । केशवस्यैतद्वचनमित्यनेन - स्वयं सर्वस्मात्परोऽपि सन्नपेक्षामात्रेण स्वविग्रहादिप्रदर्शनवत्स्वाभिप्रायाविष्करणमपि कृतवान्, अहो महदेतदाश्रितवात्सल्यमस्येतिव्यज्यते । किरीटी नमस्कृत्वेति पदसंघट्टनया भगवच्चरणारविन्दसम्बन्धेन किरीटजुष्टं शिरः कृतार्थतां गतम् । अन्यथा "भारः परं पट्टकिरीटजुष्टमप्युत्तमांगं न नमेन्मुकुन्दम् ।" इत्याद्युक्तरीत्या तच्छिरसो भारमात्रं स्यादिति भावो व्यज्यते ॥ ३५ ॥

**श्रीकृष्ण के द्वारा इस प्रकार अपना अभिप्राय व्यक्त करने पर बाद में क्या हुआ ? धृतराष्ट्र के ऐसा पूछने पर संजय बोले—**

**किरीटधारी अर्जुन श्रीकृष्ण के इस प्रकार बचनों को सुनकर और नमस्कार करके अत्यन्त भयभीत होता हुआ, फिर से प्रणाम करके हाथ जोड़कर एवं काँपता हुआ श्रीकृष्ण के प्रति गद्गद् वाणी से बोला ।। ३५ ।।**

**अर्जुन ने कहा—हे हृषीकेश ! हे इन्द्रियों के स्वामिन् युद्ध देखने के लिए अन्तरिक्ष में इकट्ठे बहुत से देव, गन्धर्व, यक्ष, किन्नर, विद्याधर आदिक देवगण आपके इस यश का गान करके अत्यन्त आनन्दित होते हैं एवं आपके प्रति अनुरक्त होते हैं और राक्षसगण भयभीत होकर चतुर्दिक् भागते हैं एवं सिद्धपुरुषगण आपको नमस्कार करते हैं । यह सब उचित ही है ।। ३६ ।।**

**कस्माच्च ते न नमेरन्महात्मन् गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।**
**अनन्त देवेश जगन्निवास त्वमक्षरं सदसत्तत्परं यत् ॥३७॥**

हे हृषीकेश ! जगत् - युद्धदिदृक्षयाऽऽगतमनेकदेवगन्धर्वयक्ष विद्याधर किन्नरकिंपुरुषादिरूपम् । तव । प्रकीर्त्या - त्वन्माहात्म्यप्रकीर्तनेन । प्रहृष्यति - प्रकृष्टं हर्षं प्राप्नोति । अनुरज्यते च - अनुरागं च करोति । त्वदानुकूल्येन त्वत्प्रसादविषयीभावादिति भावः । अत्र प्रहृष्यतीत्यनेन अतिथिलाभादिव तादात्विकप्रीतिर्विवक्षिता, अनुरज्यत इति तु पित्रादिषु पुत्रादिवत्स्नेह इति न पुनरुक्तिः । रक्षांसि - राक्षसाः । भीतानि - त्वयि प्रातिकूल्येन त्वत्प्रतापविषयतया भयातुराणि सन्ति । दिशः । द्रवन्ति-पलायन्ते । दिश इति बहुवचनेन सर्वादिश इति लभ्यते । सर्वेषामेकदिक्पलायने भगवदनुद्रवणशंकेतेति भावः । वीक्षन्ते त्वामिति देववदसुराणामपि भगवद्रूपदर्शन सत्वाद्रक्षसां भयोपपत्तिः । सर्वे । सिद्धसंघाः - सिद्धाद्यनुकूलवर्गाः । त्वाम् । नमस्यन्ति च - प्रणमन्ति च । जगत्प्रहृष्यत्यनुरज्यते च रक्षांसि दिशोद्रवन्ति सिद्धसंघानमस्यन्ति चेति, यत् - इदं सर्वम् । स्थाने - युक्तमित्यर्थः । अयं श्लोकः श्रीविष्णुपंजरादिषु विनियुक्तः प्रसिद्ध मन्त्र इत्याचार्याः ॥ ३६ ॥

युक्ततामेवोपपादयति—

हे महात्मन् - महाविग्रह । ब्रह्मणोपि - स्वेतरसमस्त देवजातेर्नन्तव्यस्य हिरण्यगर्भस्यापि । आदिकर्त्रे - आदिभूताय कर्त्रे, उपादाननिमित्तोभयकारणाय । ते - तुभ्यम् । कस्माच्च - हेतोः । न नमेरन् - न नमस्कुर्युः । ब्रह्मादय इतिशेषः । चकारेण कस्मान्नप्रहृष्येयुः, नानुरज्येरन्, कस्माच्च भीतानि रक्षांसि न द्रवेयुरिति समुच्चीयते । ब्रह्मापेक्षयाऽऽदिकर्तृत्व मुपपादयति (अनन्तेति) हे अनन्त - अपरिच्छिन्नस्वरूप । देवेश - देवानामपि

**हे विश्वरूप महात्मन् ! आप जगत् स्रष्टा ब्रह्मा के भी आदिकर्ता अतएव उससे भी श्रेष्ठ हैं, इसलिए आपको वे देवता, गन्धर्व, किन्नर आदिक कैसे नमस्कार नहीं करें ? क्योंकि हे अनन्त, हे देवों के भी ईश्वर ! समस्त जगत् के आश्रयभूत पुरुष ! जो सत् अर्थात् कार्यावस्थारूप जगत् और असत् अर्थात् कारणावस्थारूप प्रकृति तत्व सब आप ही तो हैं । इस प्रकृतितत्व से भी उत्कृष्ट जो आत्मतत्व वह भी आप ही हैं अर्थात् स्थूल एवं सूक्ष्म प्रकृतितत्व एवं आत्मतत्व के भी आत्मतत्व आप ही हैं । चिदचित् आपके शरीर हैं, आपके शरीर वाचक समस्त शब्द, सबके शरीरी आप में ही पर्यवसित होते हैं ॥ ३७ ॥**





**त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम् ।**
**वेत्तासि वेद्यं च परं च धाम त्वया ततं विश्वमनन्तरूप ॥३८॥**

नियन्तः । जगन्निवास - जगति निवासो यस्येति विग्रहः, जगदाधारत्वस्योत्तर श्लोके प्रतिपादितत्वात् । सत् - असत्–'असद्वाइदमग्र आसीत्ततोवै सदजायते'त्युक्तरीत्या भावविकारयोगितया कार्यावस्थं सच्छब्दवाच्यं, अभावविकारयोगितया कारणावस्थमसच्छब्दवाच्यं, कार्यकारणभावेनावस्थितं प्रकृतितत्वम् । त्वमेव । तत्परं - तस्मात् - कार्यकारणोभयावस्थादचेतनात्तत्संसृष्टचेतनाच्च, परं - उत्कृष्टम् । यत् । तदक्षरं - मुक्तात्मतत्वं च । त्वमेव ॥ ३७ ॥

न केवलं प्रकृतिपुरुषात्मकतया त्वं चतुर्मुखस्यैव कारणभूतः, किन्तु कृत्स्नस्यापि जगत इतिवदन् पूर्वोक्तप्रकृतिपुरुषादिसामानाधिकरण्ये निबन्धनमाह—

पुराणः — पुरापिनवः, सर्वदानूतन इत्यर्थः । पुरुषः - पुरिशयान इति वा, पुरु - भूयिष्ठम् - सनोतीति वा, पुरुषशब्दवाच्यः । यद्वा 'पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्वमि'ति श्रौतनिरुक्तिरीत्या पूर्वमप्यासीन इति पुरुषः । त्वम् । आदिदेवः - आदिः - उपादानकारणं, देवः । अस्य - प्रत्यक्षादिप्रमाणसिद्धस्य । विश्वस्य - स्वशरीरस्य जगतः । परं - उत्कृष्टम् । आधारभूतं विश्वस्येत्युक्त जीवव्यावृत्तचर्थः परशब्दः । निधानं - आत्मतया आधारभूतः । त्वमेव । अनेन त्वमक्षरमित्यादि सामानाधिरण्यस्य पूर्वोक्तस्यात्मशरीरभाव एवनिबन्धनमित्युक्तं भवति । यद्वा - परं निधानं - निधीयते - संहृत्य निक्षिप्यते, ऽस्मिन्निति निधानं - लयस्थानमित्यर्थः; त्वया-

**और हे प्रभो ! चिदचित्-विशिष्ट चराचर ब्रह्माण्ड के आदिकारण एवं उसके आत्मा, सर्वत्र व्यापक आप हैं । यह चराचर विश्व ईश्वर का शरीर और ईश्वर उसके शरीरी हैं । इस शरीर-शरीरीभाव सम्बन्ध से होने वाले वे प्रकृति-पुरुष से घटित सर्व शब्द वाच्य हैं यह इस श्लोक द्वारा प्रतिपादन कर रहे हैं ।**

**हे ईश्वर जगत् के निमित्त एवं उपादान कारण रूपी आप आदिदेव, सबसे पुरातन पुरुष, इस परिदृश्यमान विश्व के उत्कृष्ट आधार जगत् के जितने ज्ञाता पुरुष जीवात्मा अथवा क्षेत्रज्ञ, जितने ज्ञेय पदार्थ एवं मुमुक्षुओं के अभीष्ट परमप्राप्य वैकुण्ठादि स्थान यह समस्त भी आप ही हैं । हे अनन्तरूप ! इस समस्त जगत् में आत्मा रूप से आप ही व्याप्त हैं ॥ ३८ ॥**

**वायुर्यमोऽग्निर्वरुणः शशांकः प्रजापतिस्त्वं प्रपितामहश्च ।**
**नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्चः भूयोऽपि नमो नमस्ते ॥३९॥**

ततं विश्वमित्यात्मतयाधारकत्वस्य वक्ष्यमाणत्वात् । अथवा परमक्षयं, निधानं - निधिः, यथानिधिः प्राणिनामभीष्टहेतुस्तथात्वमपीत्यनेनोच्यते । वेत्ता ज्ञात्रात्मकः । त्वमेव अति । वेद्यं - ज्ञेयपदार्थजातं च । त्वमेव । परं - उत्कृष्टं । धाम - मुमुक्षूपास्यं वैकुण्ठादिस्थानं च । त्वमेव । अनन्तरूप - त्रिविधपरिच्छेदातीतस्वरूप । विश्वं - जगत् । त्वया । ततं - आत्मतया व्याप्तमित्यर्थः । सामान्यतोविशेषतश्च प्रवृत्तयोः पूर्वोत्तरसामानाधिकरण्ययो र्निबन्धनमात्मशरीरभाव एवेति तन्मध्यस्थिते नानेन विशेषणेन सूच्यते ॥ ३८ ॥

भगवता स्वप्रधान विभूतितयोक्तां स्तथैवसाक्षात्कृतान् पदार्थान् 'अहमात्मागुडाकेशे'ति तदुक्त्यैव तादात्म्यनिबन्धनेनात्मशरीरभावरूपेण तदात्मकतयानुवदन्नत्यद्भुताकार भगवद्दर्शन जनितसाध्वसावनतः साध्वसातिशयकृतं पौनः पुन्येन प्रणमनमित्यर्थं सूचयन्नाह—

'पवनः पवतामहं' 'यमस्संयमतामहं' 'वसूनां पावकश्चास्मि' 'नक्षत्राणामहं शशी' 'धाताऽहं विश्वतोमुखः' इत्याद्युक्ताः पवनयमपावकवरुण शशिप्रजापति प्रभृतयस्त्वमेव । इदं भगवत्प्रधानविभूतीनां सर्वासामप्युपलक्षणं । प्रपितामहश्च । त्वं । लोकस्य पितरः प्रजापतयः - प्रजापतीनामपि पिता-हिरण्यगर्भ स्तासां पितामहः - हिरण्यगर्भस्यापि पितात्वं तासां प्रपितामह इत्यर्थः । यद्वा - प्रजानादिजनक-जनकपरम्परायां प्रजा जनकजनकजनक-पुरुषाश्च त्वमित्यर्थः । पूर्वं - 'त्वमक्षरं सदसत्तत्परं यदि'त्यादौ - 'अथवा बहुनोक्तेन किमि'त्यतिसंक्षेपोक्त पृथगुक्तव्यतिरिक्तविभूतिः स्थालीपुलाक-न्यायेनोक्ता, इहतु - 'आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमा' नित्यादि विवेचनीयं । अतएव - 'त्वयाततं विश्वमनन्त रूपे'ति - सर्वं समाप्नोषि ततोऽसि सर्वं' इति चोक्तवक्ष्यमाणात्मशरीरभावप्रतिपादकवाक्यद्वयस्य न

**भगवान् ने अपनी विभूति को इस विभूति अध्याय में स्वयं कहा है—वायु, यम, अग्नि, वरुण, चन्द्र ये समस्त आप ही हैं । प्रजाओं के पिता, मनु प्रभृति प्रजापति आप ही हैं । आप ही ब्रह्मा के पिता अतएव प्रजागण के प्रपितामह हैं । मैं आपको शतसहस्रवार नमस्कार करता हूं, फिर भी आपको बार-बार नमस्कार है ॥ ३९ ॥**





**नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व ।**
**अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः ॥४०॥**

पुनरुक्तिः । पूर्वं हि पृथगुक्त विभूतिसामानाधिकरण्यमुक्तम्, इदानीन्तु पृथगुक्तविभूति सामानाधिकरण्यनिबन्धनं । अतः - सर्वात्मकस्य तवैव नमस्कार्यतोपपत्तेः । ते तुभ्यं । सहस्रकृत्वः - सहस्रसंख्याकावृत्तिमत् । नमोनमः - अनन्यार्ह नमस्कारः । अस्तु । पुनश्च भूयः - पुनरप्यधिकं, ततोप्यधिक मित्यर्थः । नमोनमोऽपि । अस्तु । प्रार्थनायां लोट् ॥ ३९ ॥

अथ दिग्भेदेन नमस्कारावृत्तिमाह—

सर्व - समस्तदेवतारूप । अस्यैव नमस्कार्यत्वोपपादकत्वान्नमस्कार हेतुत्वाभिप्रायेणोपादानम् । ते - तुभ्यम् । पुरस्तात् - अग्ने । नमः । अस्तु । अत्र द्वितीयमपि नमः पदमनन्यार्हत्व वाचकम् । अथ । तुभ्यम् । पृष्ठतः - पश्चात् । नमः अस्तु । किंबहुना । ते - तव । सर्वतएव - सर्वास्वपि दिक्षु । नमोऽस्तु । सर्वात्मकत्वं किं स्वरूपेणेत्यत्राह - हे अनन्तवीर्य - अनन्तानवधिकातिशयज्ञानबलैश्वर्यादिगुणनिधे । अमितविक्रमः - अमितपराक्रमस्त्वम् । सर्वं - तवशरीरतया प्रमाणं प्रतिपन्नं समस्तवस्तुजातं । समाप्नोषि - आत्मतया अन्तर्व्याप्नोषि । ततः - कारणात् । त्वम् । सर्वः - सर्वात्मकः । असि । सर्वेषां वस्तूनां त्वच्छरीरत्वे शरीरवाचकशब्दानां शरीरिपर्यन्तवाचकतया देव मनुष्यादिशब्देषु सम्प्रतिपन्नत्वत्तन्न्यायेन सर्वेपि चेतनाचेतनवाचकाश्शब्दास्त्वत्पर्यन्ताभिधायिन इति सर्वशब्दवाच्यत्वात्त्वमेव सर्वइत्यर्थः । अत्र प्रथमान्तसर्वशब्दस्य चेतनाचेतनशरीरकभगवद्वाचितया समानाधिकरण्योपपत्तिः, अन्यथाशरीरशरीरिणोरैक्याभावात् । द्वितीयांन्तु सर्वपदं शरीरतया निष्कृष्टजगद्वाचि, भगवत्पर्यन्तत्वे स्वस्यस्वेनैव व्याप्त्यनुपपत्तेः ॥ ४० ॥

भगवतः क्षमया निरसनार्हमक्षमाविषयभूतं प्राकृतं स्वापराधवर्गं वदन् क्षमामर्थयते - "सखे"त्यादि श्लोकद्वयेन—

**चिदचित् सब वस्तुओं के आत्मा स्वरूप हे सर्वात्मक ! आपको सामने से प्रणाम करता हूँ । आपको पीछे से प्रणाम करता हूँ । आपको चारों ओर से नमस्कार है । हे अनन्तज्ञान, शक्ति, बल, ऐश्वर्य, तेज और वीर्य आदिक अनन्त गुणों के निधि, हे अपरमित पराक्रमशाली, आप चिदचित् समस्त वस्तुओं के अन्तर्यामी आत्मारूप से, सम्यक् रूप से व्याप्त हो, इसलिए आप समस्त शब्द वाच्य अर्थात् समस्त पदार्थवाचक शब्द से आप ही अभिहित होते हैं ॥ ४० ॥**

**सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखेति ।**
**अजानता महिमानं तवेदं मया प्रमादात्प्रणयेन वापि ॥४१॥**
**यच्चावहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु ।**
**एकोथवाप्यच्युत तत्समक्षं तत्क्षामये त्वामहमप्रमेयम् ॥४२॥**

इमं - अनन्तवीर्यत्वापरिमितपराक्रमत्वसवान्तरत्वसर्व - स्रष्टृत्वादि-रूपम्। इदमिति पाठे लिंगव्यत्ययश्छान्दसः। तव। महिमानम्। अजानता। मया। प्रमादात् - मोहात्। प्रणयेन वापि - चिरपरिचयेनापि वा। सखेति - मम वयस्य इति मत्वा। हे कृष्णेति - 'कृषिर्भू वाचकश्शब्दो णश्च निर्वृतिवाचक' इति निरुक्तं त्वां प्रति हे श्यामलांगेति। हे यादवेति - 'एक इद्राजा जगतो बभूवे' त्युक्तरीत्योभयविभूतिसाम्राज्यवन्तं त्वां प्रति राज्यानर्हयदुकुलप्रसूतेति। हे सखेति - स्वेतरसमस्तवस्तुशेषिणं त्वां प्रति मदुपसर्जनभूतवयस्येति च सम्बोध्य। हे सखइति वक्तव्ये सखेति सन्धिरार्षः। प्रसभं - प्रसह्य। विनयोपेतं यथातथा। यत् - वचनम्। उक्तं - जल्पितम्। हे अच्युत। सर्वदा सत्कारार्हस्त्वम्। अपहासार्थं - मातुलपितृष्वसृसुतयोः परस्परोचितपरिहासार्थम्। विहारशय्यासनभोजनेषु - सहक्रीडा - सहशयनसहोपवेशसहभोजनेषु। एकः - द्वितीयजनरहितः। अथवा। तत्समक्षमपि - द्वितीयजनसन्निधावपि। सत्समक्षमिति पाठे, सतां सन्निधावपीत्यर्थः। एकान्ते हि महतामपि परिहासश्शोभते - जनसन्निधौ तु महत्सु परिहासवचनमत्यन्तानुचितमिति भावः। असत्कृतः - असत्कारं प्रापितः। असीतिच - यदस्ति ममापराधजातम्। तत् - सर्वम्। अहं - आश्रिताग्रेसरः। अप्रमेयं - अपरिच्छेद्यगुणविभवमाश्रितदोष - भोग्यम्। त्वाम्। क्षामये -

**आपकी इस अनन्तवीर्यता, अमितविक्रमता, सर्वान्तरात्मा, सर्वव्यापिता, विश्वकारणता आदिक महिमा को न जानकर मैंने भ्रमवश अथवा प्रेमवश अथवा लोक व्यवहार से सखा मानकर हे कृष्ण ! हे यादव ! हे सखा ! इस रूप से आपके प्रति अविनय सूचक वाक्यों का प्रयोग किया है एवं हे अच्युत ! मैंने जो आपको मामा के पुत्र, बूआ के पुत्र इन लौकिक सम्बन्धों से परिहास के प्रसङ्गों में अथवा एक साथ खेलते समय, सोते समय, बैठते समय, भोजन करते समय एकान्त में अथवा अन्य लोगों के सामने आप जो मेरे द्वारा अपमानित हुए हैं, उन समस्त अपराधों के लिए हे अप्रमेय परमेश्वर ! मैं आपसे क्षमा की प्रार्थना करता हूं ॥ ४१-४२ ॥**





**पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् ।**
**नत्वत्समोस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेप्यप्रतिमप्रभाव ॥४३॥**
**तस्मान् प्रणम्य प्रणिधाय कायं प्रसादये त्वा महमीशमीड्यम् ।**
**पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम् ॥४४॥**

क्षमां कारयामि। सहविहारे भुजेन स्कन्धवेष्टनं सहशयने तदुपरि पादप्रसारणं सहासनेऽङ्कनांकसंघट्टनं सहभोजने स्वपात्रस्थस्वादुतमव्यंजनादिप्रदानोद्यम प्रदर्शनमित्यादि रसत्कारोऽत्रविवक्षितः ॥ ४१-४२ ॥

असत्कारानौचित्यं वदन् पुनरप्यपराधक्षमामेव प्रार्थयते - 'पितासी'त्यादि श्लोकद्वयेन —

अप्रतिमप्रभाव - अनुपमगुणविभव। त्वम्। अस्य। कृत्स्नस्य। चराचरस्य - जंगमाजंगमरूपस्य। लोकस्य। पिता - उत्पादकः। गरीयान् - गुरुतरः। पूज्यः - पूजार्हः। गुरुश्च - अज्ञातज्ञापनकृदाचार्यश्च। असि। लोकत्रयेऽपि - कृतकं - अकृतकं - कृतकाकृतकमिति त्रिविधेष्वपि लोकेषु। अन्यः - त्वदितरः। त्वत्समः - कारुण्यादिना केनापि निरतिशयगुणेन त्वत्सदृशः। नास्ति। त्वत्सदृशस्त्वमेवेत्यर्थः। मुक्तानां भोगसाम्यसद्भावेऽपि तद्भोगस्य प्रीतभगवत्प्रसादमूलत्वेन सातिशयत्वान्न तत्साम्यम्। नित्यसिद्ध गुणानामपि भगवन्नित्येच्छाधीनत्वेन सातिशयत्वात्तेषामपि न तत्साम्यम्। अभ्यधिकः - त्वदपेक्षयाऽधिकस्तु। कुतः, न कुतोपि। अन्यस्त्वदधिको नास्ति, त्वय्यपि न त्वदधिकत्वसम्भव इत्यर्थः ॥ ४३ ॥

तस्मात् - सर्वस्य पितृत्वात्सर्वस्य पूज्यतमगुरुत्वात्स्वरूपगुण चेष्टितैस्सर्वाधिकत्वाच्च हेतोः। अहम् - अपराधैकभाजनभूतः। ईशं - जगन्नियन्-

**हे निरुपमगुण वैभवशाली परमेश्वर ! आप स्थावरजंगम रूप समस्त विश्व के सृष्टिकर्ता पिता हैं। आप ही श्रेष्ठ पुरुष, आप ही पूज्य एवं आप ही अज्ञात के जानने वाले आचार्य अथवा गुरु, इन तीनों लोकों में आपके समान अन्य कोई नहीं है, अतएव आपकी अपेक्षा अधिक किस प्रकार कोई हो सकता है। जगन्नियन्ता ईश्वर, समस्त जगत् के लोगों के द्वारा स्तुति करने योग्य पुरुष आपको साष्टांग प्रणाम पूर्वक आपकी प्रसन्नता अर्जित करने के लिए प्रार्थना करता हूं। हे परमदेव ! पिता जैसे पुत्र के, सखा जैसे सखा के अपराधों को क्षमा कर देते हैं, उसी प्रकार आप मुझे अपना प्रियजन जानकर मेरे अपराधों को क्षमा करें ॥ ४३-४४ ॥**

**अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे ।**
**तदेव मे दर्शय देव रूपं प्रसीद देवेश जगन्निवास ॥४५॥**

न्तारम् । ईड्यं - जगतस्स्तोत्रार्हम् । त्वं - प्रणतवत्सलं भगवन्तम् । कायं-शरीरम् । प्रणिधाय - छिन्नमूलतरुमिव भूतले प्रणिपात्य । प्रणम्य - प्रह्वीभूय । प्रसादये - प्रसत्तुं प्रेरयामि । हे देव ! पुत्रस्य - सम्बन्धिनमपराधम् । पितेव । सख्युः - मित्रस्य । अपराधम् । सखेव - मित्रमिव । प्रियाय - मह्यम् । प्रियः - मत्प्रीतिविषयस्त्वम् । तत्क्षामय इत्यतस्तदित्यनुषंजनीयम् । तत् - अपराधजातम् । सोढुं - क्षन्तुम् । अर्हसि । यद्यपि प्रार्थनामात्रेण दिव्यचक्षुः प्रदानपूर्वकं स्वविश्वरूपं दर्शयतो भगवतः कोपप्रसंगाभावात्प्रसाद-नमनपेक्षितम्, तथापि दिव्यचक्षुः प्रदानपूर्वकविश्वरूपप्रदर्शनस्य सापराधर-क्षोऽसुरादि साधारण्यदर्शनात्प्रदर्शितस्य रूपस्य सापराधधार्तराष्ट्रादिराज-लोकसंहाराय प्रवृत्तत्वाच्च स्वापराधानुसंधानभयेन प्रसादनमुचितमिति मन्तव्यम् ॥ ४४ ॥

प्राचीनरूपप्रदर्शनं सहेतुकमर्थयते–

हे देव ! अदृष्टपूर्वं - पुरा मया कदाप्यदृष्टम् । इदं - रूपमित्यर्थ - सिद्धम् । दृष्ट्वा - साक्षात्कृत्य । हृषितः - प्रहृष्टः । अस्मि । भयेन - तद्दर्शनजातेन । मे - मम । मनः । प्रव्यथितं च । अदृष्टपूर्वत्वभयानकत्वाभ्यां भयहर्षोभयजनकमिदं रूपमित्यर्थः । अत इदं रूपमुपसंहृत्य । मे - मह्यम् । तदेव - सोम्यतया हर्षैकजनकं मत्स्यैदनाभरणायमानं प्राचीनमेव देवकीवसु-देवनंदयशोदादितपः परिपाकरूपं सर्वचक्षुषामपि सुनिरीक्षम् । रूपम् । दर्शय । हे देवेश ! ब्रह्मादि देवानामपीश्वर । जगन्निवास - निखिलजगदा-श्रयभूत । प्रसीद - मयि प्रसादं कुरु ॥ ४५ ॥

तदेवरूपं विशेषयन्नाह–

तथैव - पूर्ववदेव । किरीटगदाचक्रादीनामस्मिन्नपि रूपे सत्त्वात्तथै-वेति विशेषणम् । एककिरीटादिमत्त्वं विवक्षितम् । इह तु मुखबाहु-बहुत्वा-

**हे देव ! पहले कभी नहीं देखे गये आपके इस अद्भुत रूप के दर्शन करके मैं आश्चर्य चकित पुलकित हो रहा हूं और भय से मेरा मन अत्यन्त व्याकुल हो रहा है । मुझे तो आप उसी वसुदेव पुत्र श्रीकृष्ण रूप से ही दर्शन दीजिये । हे देवेश ! हे सम्पूर्ण जगत् के आश्रयभूत ! परमपुरुष ! आप मुझ पर प्रसन्न हो जाइये ॥४५**





**किरीटिनं गदिनं चक्रहस्तमिच्छामि त्वां द्रष्टुमहं तथैव ।**
**तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्ते ॥४६॥**

श्रीभगवानुवाच—

**मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् ।**
**तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् ॥४७॥**

द्बहवः किरीटादयः । किरीटिनं - किरीटवन्तम् । गदिनं - कौमोदक्याख्यग-दायुक्तम् । चक्रहस्तं - सुदर्शनपाणिम् । पांचजन्यादीनामप्युपलक्षणमेतत् । त्वाम् । अहम् । द्रष्टुम् । हे सहस्रबाहो - सहस्रभुज । विश्वमूर्ते - सर्व-जगच्छरीर । इदानीं सहस्रबाहुत्वेन विश्वशरीरत्वेन च दृश्यमानरूपेप्यर्थः । तेनैव - पूर्वसिद्धेनैव । चतुर्भुजेन - चतुर्बाहुना । रूपेण - विग्रहेण । भव - आविर्भव ॥ ४६ ॥

एवं प्रार्थितस्सन् तमर्जुनमाश्वासयन् भगवानाह "मये"त्यादि श्लकत्रयेण–

हे अर्जुन ! मे - मम । यत्-रूपम् । तेजोमयं - तेजोराशि - रूपम् । विश्वं - विविधविचित्रजगदात्मकम् । अनन्तं - आदिमध्यान्तरहितम् । आद्यम् - मद्व्यतिरिक्त कृत्स्नस्य पूर्ववर्तिकारणभूत - मित्यर्थः । त्वदन्येन - मद्भक्तात्त्वत्त इतरेण केनापि । न दृष्टपूर्वं च - पूर्वं न दृष्टं च । इदम् । परं - निरतिशयोत्कृष्टम् । रूपं । प्रसन्नेन - त्वयि प्रसादवता । मया - आश्रितवत्सलेन । आत्मयोगात् - आत्मनस्संकल्पयोगात् कारणात् । स्वय-त्नादिना कारणान्तरेण द्रष्टुमशक्यत्वादिति भावः । तव । दिव्यचक्षुः प्रदा-नेन दर्शनविषयीकृतम् ॥ ४७ ॥

ऐकान्तिकमद्भक्तिव्यतिरिक्तैः स्सर्वैः रुपायैः दुर्दर्शमिदं रूपमित्याह–

**पहले देखे आपके उसी किरीट मुकुटधारी और शंख चक्र गदा लिये चतुर्भुज रूप में आपको मैं देखना चाहता हूं । हे अनन्तबाहु विशिष्ट विश्वरूप विग्रहधारी प्रभो ! आप पूर्वदृष्ट उसी चतुर्भुज रूप से हो जाइये ॥ ४६ ॥**

**श्रीभगवान् बोले–**

**हे अर्जुन ! मेरा ज्योतिर्मय अन्तरहित यह विश्वरूप तुम्हारे ऊपर प्रसन्न होकर मैंने अपने संकल्प से तुमको दिखाया है । तुम्हें छोड़ अन्य किसी के द्वारा इससे पूर्व इस रूप का दर्शन नहीं हुआ है ॥ ४७ ॥**

**न वेद यज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः ।**
**एवंरूपः शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ॥४८॥**
**मा ते व्यथा मा च विमूढभावो दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ।**
**व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रूपमिदं प्रपश्य ॥४९॥**

---

हे कुरुप्रवीर ! शौर्यातिशयेनकुरुषुवीरः - तत्रापिमय्यैकान्तिक भक्तियोगेन प्रकृष्टवीर इत्याशयेन कुरुप्रवीरेति हेतुगर्भ सम्बोधनम् । एवंरूपः - एवं इदानीं दिव्यचक्षुषस्तवैवं प्रदर्श्यमानाकारम्, रूपम्, यस्य सतथोक्तः । अहम् । नृलोके - मनुष्यलोके । त्वदन्येन - त्वत्त इतरेण, मद्भक्ति रहितेनेत्यर्थः । वेदयज्ञाध्ययनैः - वेदः - सांगसशिरस्कस्वाध्यायः, यज्ञाः - कल्पसूत्रादियज्ञविद्याः, तेषामध्ययनैः - ग्रहणधारणादिरूपै स्सर्वैरप्यध्ययनैः । द्रष्टुं नशक्यः । दानैरपि द्रष्टुम् नशक्यः । क्रियाभिश्च - अग्निहोत्रदर्शपूर्णमासादिभिः कर्मभिश्च । द्रष्टुं नशक्यः । उग्रैः - दुष्करैः । तपोभिः - कृछ्रचान्द्रायणादिभिरपि । द्रष्टुं नशक्यः । अत्राध्ययनादीनां भक्तियुक्तत्वादिरहितानां केवलानां दर्शनसाधनत्वं प्रतिषिध्यते, नतु स्वरूपतः, तमेतं वेदानुवचनेनेत्यादि श्रुतिविरोधात् । शक्यअहमित्यत्र सन्ध्यभाव आर्षः ॥ ४८ ॥

ईदृक् - ईदृशम् । घोरं - अतिभयङ्करम् । इदं - इदानीं प्रदर्शितम् । मम । रूपम् - विग्रहम् । दृष्ट्वा - तद्दर्शनपूर्विकेत्यर्तः । व्यथा - भयं । ते - तव । माभूत् । विमूढभावश्च - सूर्यदर्शनादुलूकस्येव वैक्लव्यं च । माभूत् । त्वम् । व्यपेतभीः - व्यपगतभयः । प्रीतमनाः - सन्तुष्टचित्तश्चसन् । तदेव - पूर्वन्तवाभ्यस्तमेव । इदं - प्रदर्शयिष्यमाणम् । मे - मम । रूपं - सौम्यं विग्रहम् । पुनः । प्रपश्य - नष्टलब्धमिव महामणिं प्रकर्षेण वीक्षस्व ॥४९॥

---

**हे कुरुवंश श्रेष्ठ अर्जुन ! इस प्रकार विश्वरूप विशिष्ट मेरे विग्रह को इस मनुष्यलोक में तुम्हारे सिवाय अन्य कोई, देव एवं विद्याध्ययन द्वारा एवं विविध यज्ञानुष्ठान द्वारा देखने में समर्थ नहीं हो सकता है । अनेक प्रकार के दान द्वारा या अग्निहोत्र प्रभृति विविध कर्मानुष्ठान द्वारा अथवा दुष्कर तप द्वारा भी देखने में समर्थ नहीं हो सकता है ॥ ४८ ॥**

**इस प्रकार अति भयङ्कर मेरे इस विश्वरूप का दर्शन करके तुम भयभीत और विकल न होना । तुम निर्भय एवं सन्तुष्ट चित्त से तुम्हारे द्वारा प्रार्थित पूर्व में देखा गया चतुर्भुज सौम्यरूप फिर से दर्शन करो ॥ ४९ ॥**





संजय उवाच—

**इत्यर्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः ।**
**आश्वासयामास च भीतमेनं भूत्वा पुनः सौम्यवपुर्महात्मा ॥५०॥**

अर्जुन उवाच—

**दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।**
**इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥५१॥**

---

एवमुक्त्वा भगवानर्जुनाय प्राक्तनमेव रूपं प्रदर्शयामासेति संजयो-धृतराष्ट्रं प्रत्याह—

वासुदेवः - वसुदेवसूनुः कृष्णः । तदा - प्रार्थनाकाले । इतिउक्तप्रकारेण । अर्जुनम् । उक्त्वा । भूयः - पुनरपि । स्वकं - स्वस्य वसुदेवसूनुत्वावस्थोचितमेव । रूपं - चतुर्भुजरूपम् । दर्शयामास । न केवलं तद्रूप प्रदर्शनमात्रमित्याह - किंच । महात्मा - महास्वभावः, स्वाश्रितो यथा यथा प्रार्थयते तथा तथा करणस्वभाव इत्यर्थः । पुनः । सौम्यवपुः - सौम्य विग्रहः, भूत्वा । भीतं - अपरिचितासौम्य विश्वरूप दर्शनात्तु भयाविष्टम् । एनं - अर्जुनम् । आश्वासयामास च - चतुर्भिरपि बाहुभि रंगाभिमर्शनेन तस्य भयमपाचकारेत्यर्थः । पूर्वंवाचिकमाश्वासनम्, इदन्तु कायिकमिति मन्तव्यम् । वसुदेव सूनोश्चतुर्भुजमेवौत्पत्तिकं रूपम्, कंसात्तुबिभ्यतो वसुदेवस्य 'उपसंहर सर्वात्मन् रूपमेतच्चतुर्भुज'मिति प्रार्थनयाऽऽकंसवधात्तुभुजद्वयमुपसंहृतम् । पश्चात्पुनराविष्कृतम् । अतएवार्जुनेनोक्तं तेनैव रूपेण चतुर्भुजेनेति ॥ ५० ॥

---

**संजय बोले—**

**वसुदेव पुत्र श्रीकृष्ण ने अर्जुन द्वारा प्रार्थना करने पर तीन श्लोकों से आश्वासन देते हुए, फिर से अपना वही रूप दिखाया और महान् आत्मा वासुदेव श्रीकृष्ण ने अपने सौम्यविग्रह में होकर उस भयभीत अर्जुन को पुनः आश्वासन प्रदान किया ॥ ५० ॥**

**अर्जुन बोले—**

**हे जनार्दन ! आपका यह प्रसन्न मनुष्यरूप दर्शन करके इस समय मैं व्याकुलता रहित चित्त हो गया हूँ और अपने स्वरूप में स्थित हो गया हूँ ॥ ५१ ॥**

श्रीभगवानुवाच—

**सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।**
**देवा अप्यस्य रूपस्य नित्यं दर्शनकांक्षिणः ॥५२॥**

ततो निर्भयस्सन्नर्जुन उवाच---

हे जनार्दन । इदं - अनवधिकातिशयसौन्दर्यसौकुमार्यादिकल्याण गुणशालि । मानुषं - मनुष्यसमान संस्थानम् । सौम्यं - प्रसन्नम् । तव । रूपं - विग्रहम् । दृष्ट्वा । इदानीं । सचेताः - प्रसन्नमनस्कः । संवृत्तः - जातः । अस्मि । प्रकृतिं - स्वस्थताम् । गतः - प्राप्तश्च ॥ ५१ ॥

स्वकृतानुग्रहस्यातिदुर्लभत्वं दर्शयन् श्रीभगवानुवाच---

मम । यत् - विश्वात्मकं रूपम् । दृष्टवान् । असि । इदम् । रूपम् । सुदुर्दर्शं - अतिदुर्लभदर्शनमित्यर्थः । यतः । देवाः - ज्ञानशक्त्यादि गुणै-र्मनुष्येभ्योऽधिकतरा ब्रह्मादयोपि । अस्य । रूपस्य । नित्यं - अनवरतम् । दर्शनकांक्षिणः - दर्शनाभिलाषिणः । कांक्षामात्रमेव, न तु कदापि कांक्षितमे तद्रूपदर्शनं लब्धवन्तः इदानीं तु त्वदनुग्रहाय प्रदर्शितमिदं रूपं प्रसंगात्तेपि दृष्टवन्त इति भावः । यद्वा सदा पश्यन्तीत्युक्तरीत्या नित्य दर्शनेपि नित्यं दर्शनसाभिलाषा एव भवन्ति, न तु सकृद्दर्शनमात्रेण तृप्यन्तीति भावः ॥५२॥

ननु कथं देवानामप्येतद्रूपदर्शनदौर्लभ्यम्, ते हि वेदानुवचन यज्ञ दान तपः प्रभृति भगवद्दर्शन साधनसामग्री सम्पन्ना इत्यत्राह---

यथा - मनुष्यत्वादि प्रमानर्हेणाप्राकृतेन येनाकारेण विशिष्टम् । माम् । दृष्टवान् - मद्दत्तेन दिव्यचक्षुषाऽध्यक्षितवान् । असि । एवंविधः - तदाकार-विशिष्टः । अहम् । वेदैः - अध्ययनाध्यापनश्रवणजपविषयैः केवलैस्स्वा-ध्यायैः । द्रष्टुम् नशक्यः । दानेन, केवलेन । द्रष्टुम् । नशक्यः । तपसा - केवलेन कृच्छ्रचान्द्रायणादिना । द्रष्टुम् । नशक्यः । इज्ययाच-केवलेन योगेन च । द्रष्टुम् नशक्यः । अत्र केवलानामेव वेदादीनां दर्शनसाधनत्वनिषेधः, भक्त्यंगतापन्नेन स्वरूपेण तु तेषां दर्शनसामग्र्यनुप्रवेशस्य श्रुतिसिद्धत्वादि-त्युक्तं प्रागेव ॥ ५३ ॥

**श्रीभगवान् बोले**

**हे अर्जुन ! तुमने मेरा जो विश्वरूप दर्शन किया इस रूप का दर्शन अति दुर्लभ है क्योंकि इस रूप के दर्शन करने के लिए देवतागण भी नित्य अभिलाषा करते हैं ॥ ५२ ॥**





**नाहं वेदैर्न तपसा न दानेन न चेज्यया ।**
**शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥५३॥**

तर्हि केनोपायेन द्रष्टुं शक्य इत्यत्राह---

हे अर्जुन ! परंतप - नामश्रवणमात्रेण शत्रुसंतापकर । एवंविधः - विश्वरूपः । अहम् । अनन्यया - अनन्यदेवताकया, अनन्यप्रयोजनया वा । भक्त्यातु । ज्ञातुं - शास्त्रतोऽवगन्तुम् । द्रष्टुं - साक्षात्कर्तुम् । प्रवेष्टुं - प्राप्तुं च । शक्यः । न केवलं साक्षात्कारमात्रे साधनत्वेन भक्तिरपेक्षिता, किंतु 'शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दन' मित्युक्तरीत्या साक्षात्कार पूर्वभाविनि शास्त्रार्थनिर्णये तदनन्तरभाविन्यां प्राप्तौ चेत्यभिप्रायेण ज्ञातुं प्रवेष्टुं चेत्युभयमपि पूर्वश्लोकाप्रसक्तमिह प्रसंजितम् तत्त्वेनज्ञातुम् तत्वेन-द्रष्टुम् तत्त्वेन प्रवेष्टुं चेति । तत्त्वतः प्रवेशोहिनाम परिपूर्णप्राप्तिः, यथावस्थित सर्वाकारेणानुभव इत्यर्थः, तेनव्यूह विभवादिमात्रप्राप्ति र्व्यवच्छिद्यते । स्मर्य-तेहि साक्षान्मुक्तेरर्वाचः प्राप्तौ पर्वभेदाः "लोकेषु विष्णोर्निवसन्ति केचि-त्समीप मृच्छन्ति च केचिदन्ये । अन्येतु रूपं सदृशं भजन्ते सायुज्यमन्ये न तु मोक्षसेतुम् ॥" इति ॥ न नु तत्त्वज्ञानस्यापि भक्तिसाध्यत्वे तत्त्वज्ञान साध्याभक्तिः - भक्तिसाध्यं च तत्त्वज्ञानं - इत्यन्योन्याश्रय इति चेन्न; भक्ते र्ज्ञानादिहेतुत्वे पर्वभेदात् । पूर्वजन्मसुकृतविशेषकारितसात्त्विकजनसम्वा-दादिजनितं यथावच्छ्रवणानुगुणंकिंचिदानुकूल्यरूपं भक्तिमात्रं शास्त्रजन्य ज्ञानोत्पत्तौ सहकारि भवति, उत्कटदिदृक्षागर्भातु परभक्तिस्साक्षात्कारहेतुः,

**तुमने जिस विश्वरूप का दर्शन किया है, इस प्रकार के विग्रह विशिष्ट मेरा दर्शन केवल वेदाध्ययन अध्यापन द्वारा या दान, उग्र तप या यज्ञ के द्वारा कोई भी पुरुष देखने में समर्थ नहीं हो सकता है ॥ ५३ ॥**

**देव भी इसे क्यों नहीं देख सकते इसे दो श्लोकों से बताते हैं --**

**हे शत्रुसन्तापकर अर्जुन ! पूर्वोक्त प्रकार से दिव्यनेत्रों द्वारा देखे गये सर्व नियन्ता, सर्वाश्रय एवं सर्वकारणरूप विश्वरूप विशिष्ट मुझे केवल अनन्यभक्ति के द्वारा ही यथार्थरूप से साक्षात्कार किया जा सकता है और यथार्थ रूप से प्राप्त किया जा सकता है— अर्थात् अनन्य भक्ति ही भगवत् साक्षात्कार का उपाय है । केवल इतना ही नहीं इस भक्ति से ही तत्वज्ञान, भगवत् साक्षात्कार एवं भगवत् प्राप्ति सम्भव है ॥ ५४ ॥**

**भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।**
**ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परंतप ॥५४॥**

---

साक्षात्कृतेतु परिपूर्णानुभवाभिनिवेशलक्षणपरमभक्तिर्हेतुरितिहि भक्तेः पर्वभेदाः ॥ ५४ ॥

नाहं वेदैरित्यादेः - तमेतं वेदानुवचनेनेत्यादि श्रुतिविरोधपरिहाराय भक्त्यंगभावेन वेदानुवचनादीनामुपयोगं वदन् - प्रवेष्टुमित्युक्त प्राप्तिहेतु-भक्त्यवस्थाविशेषं विवेचयति - (मत्कर्मेति) —

हे पाण्डव ! मत्कर्मकृत - अत्र नाहं वेदैरित्याद्युक्तानि वेदानुवचना-दिकर्माण्येव भगवति समर्पितानि मत्कर्मशब्देन विवक्षितानि, तानि करोतीति मत्कर्मकृत् । मत्परमः - कर्मणः प्रसंगात्साध्यं फलमिहबुद्धिस्थं परमशब्द-विवक्षितन् , अहमेव - परमं - सर्वारंभफलं यस्य स तथोक्तः । मद्भक्तः - अत्र भक्त्यंतर्गतानि कीर्तनस्तुतिध्यानप्रणामार्चनादीनि विवक्षितानि, लौकिक इवान्नपानादिभिर्मत्कीर्तनादिभिर्विनाऽऽत्मधारणमलभमानस्तदेकप्रयो-जनतया कीर्तनादि रूप मद्भजनकृदित्यर्थः । संगवर्जितः - संगेन मदित-रासक्त्या, वर्जितः त्यक्तः । मदितरसंगं तृषितस्यास्वाद्यमानामृतधारायां तृणादिविरोधसदृशम्मन्यमानः ; संगएवैनं विरक्तं यथा वर्जयेत - तथा संगे जातोद्वेग इत्यर्थः । सर्वभूतेषु - सर्वजन्तुष्वपि । निर्वैरः - न केवलमपरि-पक्व भक्तेरिव शास्त्रवश्यकत्व कृतेयं निर्वैरता - अपितु भक्तिकाष्ठाप्राप्त्या वैरनिमित्ताभावकृता ; विषयान्तरसंश्लेषविश्लेषैकस्वभावत्वं स्वदुःखस्य परापराधनिमित्तत्वानुसन्धानम् भूतानां च परमपुरुषनियमनं विनापि किंचि-त्करत्वभ्रमः इत्येतानि हि भूतेषु वैरनिमित्तानि ; भक्तिकाष्ठां प्राप्तस्यास्य मत्संश्लेषविश्लेषसुखदुःखतैकस्वभावत्वात् स्वदुःखस्य प्रारब्धरूपस्वापराध-मूलकत्वानुसन्धानात्सर्वभूतानां परमपुरुषपारतन्त्र्यानुसन्धानाच्चोक्तवैरनि-

---

**हे पाण्डव अर्जुन ! जो व्यक्ति अपने समस्त नित्य नैमित्तिक सम्पूर्ण कर्मों को मेरा आराधनरूप से सम्पन्न करते हैं । मेरी प्राप्ति ही जिनके सम्पूर्ण कर्मों का परम उद्देश्य है, जो मेरे परमभक्त हैं, मुझे छोड़कर जो समस्त वस्तुओं की आसक्ति से शून्य हैं और जो सम्पूर्ण प्राणियों में वैर शून्य हैं वे ही मुझे प्राप्त कर पाते हैं ॥ ५५ ॥**





**मत्कर्मकृन्मत्परमो मद्भक्तः संगवर्जितः ।**
**निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥५५॥**

॥ इति श्रीमद्भगवद्गीतायां एकादशोऽध्यायः ॥ ११ ॥

---

मित्ता भावः । एवंभूतः । यः पुरुषधौरेयः । सः । माम् । एति - सवासन निवृत्तसमस्तमदनुभव प्रतिबन्धको यथावस्थितसकलाकारेण मामनुभवती त्यर्थः ॥ ५५ ॥

इति श्रीमद्भगवद्गीताभाष्यार्थसंग्रहतात्पर्यदीपे श्रीवरवरमुनिविरचितायां बालबोधिन्यपराभिधानायां गीतार्थ-

संग्रहदीपिकायां

एकादशोऽध्यायः ॥ ११ ॥





**॥ श्रीमद् भगवद्गीता के हिन्दी अनुवाद का विश्वरूप दर्शनयोग नामक एकादश अध्याय समाप्त हुआ ॥**

श्रीरस्तु ।

# अथ द्वादशोऽध्यायः

अर्जुन उवाच—

**एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।**
**ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥**

एवं भगवता भक्तियोगप्राप्यस्य स्वस्य परब्रह्मणो यथावस्थितं निरंकुशैश्वर्यं दिदृक्षवेऽर्जुनाय प्रदर्शिततज्ज्ञानदर्शनाप्राप्तीनामैकान्तिकात्यन्तिकभक्तिलभ्यत्वमुक्तम् । अथात्मप्राप्तिसाधनभूतादात्मोपासनाद्भक्तिरूपस्य भगवदुपासनस्य स्वसाध्यनिष्पादने शैघ्र्यं भगवदुपासनोपायः - तद शक्तस्यात्मनिष्ठता तदपेक्षिताश्चोच्यन्ते । तदुक्तं गीतार्थसंग्रहे - "भक्तेश्शैघ्र्यमु-

## द्वादश अध्याय

### भक्तियोग अध्याय का अर्थ संग्रह

भक्तेः श्रैष्ठ्यमुपायोक्तिरशक्तस्यात्मनिष्ठता ।
तत्प्रकारास्त्वतिप्रीतिर्भक्तेर्द्वादश उच्यते ॥
( गीतार्थसंग्रह १५ )

**भक्ति की श्रेष्ठता, भक्तिसाधनों का विभिन्न स्तर, भक्तिसाधन में आसक्त लोगों के लिए आत्मानुसन्धान, आत्मानुसन्धान करने वाले लोगों के अद्वेषादि गुणगण, भक्तियोग और भक्त के प्रति भगवान की अत्यन्त प्रीति इन पाँच विषयों का वर्णन इस अध्याय में हुआ है ।**

अर्जुन बोले—

**इस प्रकार पूर्व अध्याय के अन्तिम श्लोक में 'मत्कर्मकृत् मत्परमो' इत्यादि प्रकार से आपके साथ सततयुक्त जो भक्त आपको सर्वतोभावेन उपासना करते हैं एवं जो व्यक्ति अव्यक्त, अव्यय जीवात्म स्वरूप की उपासना करते हैं, उनमें से कौन योग वित्तम है—अर्थात् अपनी प्राप्य वस्तु अथवा अभीष्ट वस्तु की प्राप्ति के लिए सबकी अपेक्षा कौन शीघ्रगामी है ॥ १ ॥**





श्रीभगवानुवाच—

**मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।**
**श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ २ ॥**

पायोक्तिरशक्तस्यात्मनिष्ठता । तत्प्रकारास्त्वतिप्रीतिर्भक्तेर्द्वादश उच्यते ॥" इति ॥

एवं - मत्कर्मकृदित्याद्युक्तप्रकारेण । सततयुक्ताः - त्वया सतत योगमेव सर्वारम्भफलम्मन्वानाः । ये । भक्ताः । त्वां । पर्युपासते - अनवधिकातिशयानन्तकल्याणस्वरूपगुणविभूतिभिः परिपूर्णमुपासते । किंच । येऽपि । अव्यक्तं - चक्षुरादिकरणैरनभिव्यक्तम् । अक्षरं - प्रत्यगात्मस्वरूपम् । उपासते । तेषां - उभयेषामुपासकानां । अव्यक्तशब्दस्याक्षरशब्दसमभिव्याहृतस्याचिद्विशेषे प्रसिद्धिप्राचुर्येऽपि - अत्र यच्छब्दत्रयाभावादुत्तरेचाव्यक्ताक्षरशब्दयोर्विशेषणविशेष्यभावव्यक्तेश्चोपास्यत्रयपरत्वानौचित्यात् - "पंचविंशकमव्यक्तं षड्विंशः पुरुषोत्तमः । एतज्ज्ञात्वा विमुच्यन्ते यतयश्शान्तबुद्धय" इति यमस्मृतिवचने पुरुषोत्तमादर्वाचीन एवाव्यक्तशब्दप्रयोगाच्चाक्षरछब्दविशेषणत्वमेवाव्यक्तशब्दस्येति बोध्यम् । मध्ये । के योगवित्तमाः - युज्यत इति योगः - प्राप्यं, तं - विन्दन्ति - लभन्ते, इति योगविदः, अतिशयितायोगविदः योगवित्तमाः ; अतिशयश्च प्राप्तौ शैघ्र्यम् ; - अचिरेण स्वसाध्यगामिन इत्यर्थः । अतएव - भवामिनचिरात्पार्थेत्युत्तरत्र शैघ्र्यविषयमेव योगवित्तमत्वं व्यंजयिष्यते ॥ १ ॥

ये - उपासकाः । मनः - प्राप्यविषयकं चेतः । मयि । आवेश्य - मदेकप्रियत्वेन मय्येव निवेश्य । परया - उत्कृष्टया । श्रद्धया - त्वरापर्यवसन्नयाऽऽस्तिक्यबुद्ध्या । उपेताः । नित्ययुक्ताः - मया नित्य योगमाकांक्षंतश्च सन्तः । माम् । उपासते । ते । युक्ततमाः - सुखमचिरात्स्वसाध्यभूत मत्प्राप्तृतयाऽतिशयिता इति । मे । मताः - सम्मताः ॥ २ ॥

एवं भगवन्निष्ठस्य श्रैष्ठ्यमुक्त्वाऽथाक्षरनिष्ठस्यापकर्षमाह - "येत्वक्षर" मित्यादि श्लोकद्वयेन—

येतु - उपासकाः । अनिर्देश्यं - देहादि विलक्षणतया देहादिवाचकै-

श्रीभगवान बोले —

**जो उपासक मुझ में मन लगाकर परमश्रद्धापूर्वक मेरे साथ नित्ययोग के अभिलाषी होकर मेरी उपासना करते हैं, मेरे मत से वे ही श्रेष्ठयोगी हैं। वही सबकी अपेक्षा शीघ्र एवं सुखपूर्वक मुझे प्राप्त होते हैं । २ ॥**

**ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।**
**सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥**
**सन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।**
**ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ ४ ॥**

र्देवादिशब्दै निर्देष्टुमनर्हम् । अतएव । अव्यक्तं - देहादि स्थूलाचिद्वस्तुग्राहकै श्चक्षुरादिकरणैरनभिव्यक्तम् । सर्वत्रगं । सर्वत्र - देहादिदहेषु, वर्तमानम् । सर्वत्र पन्नयोश्चेति गमे डंप्रत्ययः - अचिन्त्यं - देवादिदेहेषु विद्यमानत्वेपि तद्विसजातीयतया तेन तेन रूपेण चिन्तयितुमनर्हम् । अतएव । कूटस्थं - सन्तन्यमानानेकदेवमनुष्यादिदेहसाधारणतया पूर्वभूतम् । सन्तन्यमानानेकपुरुषसाधारणपूर्वपुरुषवाची हि कूटस्थशब्दः अत्र सन्तन्यमानानेकसाधारण्यमात्र परः । अचलं - न चलति - स्वासाधारणाकारान्नच्यवते इत्यचलं - अपरिणामीत्यर्थः । ध्रुवं - व्यापकीभूतपरिणामित्वनिवृत्त्या तद्व्याप्यानित्यत्वनिवृत्तोर्नित्यत्वमित्यर्थः । एवं भूतम् । अक्षरं - प्रत्यगात्मस्वरूपम् । इन्द्रियग्रामं - चक्षुराद्येकादशेन्द्रियवर्गम् । सन्नियम्य - स्वव्यापारेभ्यस्सम्यङ् निगृह्य । सर्वत्र - देवमनुष्यादिविषमाकारशरीरावस्थितेषु सर्वेष्वात्मसु । समबुद्धयः - समा - ज्ञानाकारत्वेनैकप्रकारा, बुद्धिर्येषां ते तथोक्ताः । सर्वभूतहिते - सर्वेषां भूतानां, हिते - अनिष्टनिवृत्तिपूर्वकेष्टप्राप्तिरूपे । रताः - रतिमन्तः । आत्मनि देवमनुष्यादिविषमाकाराभिमानस्य तदरति निमित्तस्याभावादिति भावः । एवम्भूताश्च सन्तः । पर्युपासते । ते - तेपि । मां - मत्समानाकारं प्रत्यगात्मानम् । प्राप्नुवन्त्येव । तेषामपि स्वसाध्यसिद्धौ न सन्देह इत्यर्थः । न चैवं मामित्यस्य गौणत्वप्रसंग शंकाकार्या , प्रकारैक्येपि मुख्यतयैव सोऽयंत्रीहिः, 'रूपं तदोजस्वितदेव वीर्यं तदेव नैसर्गिकमुतत्वम् ॥,

**और जो उपासक अनिर्देश्य अर्थात् जिसे किसी वाक्य से निर्दिष्ट नहीं किया जा सकता, अव्यक्त जो सूक्ष्मातिसूक्ष्म होने के कारण चक्षु आदि इन्द्रियों से ग्राह्य नहीं, सर्वत्रगामी—जो ब्रह्मा से चींटी तक समस्त जीवों में अन्तः अवस्थित है, अचिन्त्य-चिन्तातीत, कूटस्थ सदा एकरूप से अवस्थित, अचल-अर्थात् अपरिणामी, ध्रुव-नित्यवस्तु इस प्रकार अक्षर जीवात्म स्वरूप का जो व्यक्ति चक्षुकर्ण आदि इन्द्रियसमूह को भली भांति संयत करके सर्वत्र समबुद्धि होकर एवं प्राणीमात्र के कल्याण में तत्पर होकर उपासना करते हैं वे भी ज्ञानाकारत्वेन समान आत्मस्वरूप मुझे ही प्राप्त होते हैं यह निश्चित है ॥ ३।४ ॥**





**क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।**
**अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५ ॥**

ब्रह्मवेद ब्रह्मैव भवति ॥' इति लोकवेदयो स्तदभेदव्यवहारदर्शनात् । "निरंजनः परमं साम्यमुपैति" "भोगमात्र साम्य लिंगाच्च" "मम साधर्म्यमागता" इत्यादि श्रुतिसूत्र भगवद्वचनैर्मुक्तस्य भगवत्साम्यमात्रवचनात् । "ब्रह्मवेद ब्रह्मैव भवती"ति क्वचिदभेदनिर्देशस्यापि बहुप्रमाणविरोधेन परमसाम्यमात्र परत्वात्, "कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत्" इति भगवतैव परमात्मनः कूटस्थाक्षराद्वैलण्यस्य वक्ष्यमाणत्वाच्च ॥ ३-४ ॥

ननु तेपि चेत्स्वसाध्यं प्राप्नुवन्ति तेषां त्वदुपासकेभ्यः कथमपकर्ष इत्यपेक्षायां, क्लेशविशेषस्तेषामस्ति - मदुपासकानां तु सुकृत विशेषोऽस्ति अतस्तेषामपकर्ष इत्याह "क्लेश" इत्यादि श्लोक त्रयेण—

अव्यक्ते - अक्षरे, सासक्तं - साभिलाषं, चेतः, येषां तेषां अव्यक्तासक्तचेतसां; आत्मप्राप्तिकामानामित्यर्थः । क्लेशः - आयासः अधिकतरः - अत्यन्तमधिकः । परमात्मप्राप्तिकामानामपि क्लेशोस्त्येवेति तद्व्युदासायाधिकतर इत्युक्तम् । कुत इत्यत्राह (अव्यक्तेति) हि - यस्मात्कारणात् । देहवद्भिः - देहएषामस्त्यात्मतयेति देहवन्तः, तैः - देहात्माभिमानिभिरित्यर्थः । अव्यक्ता - अव्यक्तविषया । विषयविषयिणोरभेदोपचारः । देहातिरिक्तात्मविषयेत्यर्थः । गतिः - उपासनारूपमनोवृत्तिः । दुःखं यथातथा । अवाप्यते - निष्पाद्यते । अनादिदेहात्माभिमानवासनाबलेनोपासनादिरूपतदुपायनिष्पत्तोरतिक्लेसाध्यत्वात्तेषां स्वप्राप्तौ महान् विलम्बोऽस्तीति भावः ॥५॥

मत्प्राप्त्येकप्रयोजनतया मदुपासनाकान्तु - 'स च मम प्रियः' 'ज्ञानीत्वात्मैव मे मतम्' इत्युक्तरीत्या ममात्यर्थप्रियत्वान्मत्प्रसादादेव शीघ्रम्मत्प्राप्तिस्सिध्यतीत्याह "येत्वि" त्यादि श्लोकद्वयेन ॥

येतु । सर्वाणि - देहयात्राशेषभूतान्यशनादीनि लौकिकानि यागदानहोमतपः प्रभृतीनि वैदिकानि च समस्तानि । कर्माणि । मयि - सर्वात्मनि ।

**अव्यक्त जीवात्मा स्वरूप में आसक्त चित्त उन साधकों को भगवत् उपासकों की अपेक्षा अधिक क्लेश उठाना पड़ता है क्योंकि देहात्माभिमानी पुरुषों के पक्ष में अव्यक्त जीवात्म विषयक उपासना की उपयोगी मनोवृत्ति प्राप्त करना अत्यन्त कठिन और क्लेश कारक है ॥ ५ ॥**

**ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।**
**अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६ ॥**
**तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।**
**भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥ ७ ॥**

---

सन्न्यस्य - सम्यक् - साकारं सोद्देश्यं च, निधाय, यत्करोषियदश्नासि यज्जुहोषीत्याद्युक्त विधयेतिभावः ॥ मत्पराः - अहमेव परः प्राप्यो येषान्ते तथोक्ताः । अनन्येनैव - प्रयोजनांतररहितेनैव । योगेन - भक्तिरूपणोपायेन । ध्यायन्तः - ध्यानार्चनप्रणामादीनि कुर्वन्तस्सन्तः । मां उपासते ॥ ६ ॥

हे पार्थ ! मयि । आवेशितचेतसाम् । तेषाम् । अहं - परमकारुणिक आश्रितवत्सलः । नचिरात् - अचिरेण - अविलम्बेनैव । मृत्युसंसारसागरात्—मत्प्राप्तिप्रतिबन्धकतया मृत्युरूपात् स्थूलसूक्ष्मप्रकृति - सम्बन्धलक्षण संसाराख्यसमुद्रात् । समुद्धर्ता - सम्यगुद्धर्ता सन् । भवामि - सत्तांलभे । ज्ञानीत्वात्मैव मे मतमित्युक्तरीत्या तैर्विना शरीरस्येवात्मना विना - मम सत्ताया अनिर्वाहादिति भावः । अक्षरनिष्ठानामपि संसारसागरादहमुद्धर्ता - नतु समुद्धर्ता - समुद्धरणं हि संसारसागरादुद्धृत्य परमप्राप्यदेशप्रापणं, तत्तु तेषां नविद्यते, तत्क्रतुन्यायविरोधादिति समुपसर्गं प्रयुञ्जानस्य भगवतो ऽभिसन्धिः ॥ ७ ॥

एवं सामान्येनोक्तं कर्तव्यमर्थं श्रोतर्यर्जुनेनिवेशयति 'मय्येवे' त्यादिना ।

मय्येव - निरतिशय पुरुषार्थे सुलभेऽचिरलभ्ये च मय्येव । मनः । आधत्स्व, समाध्युपक्रमभूतं स्थिरम्मनस्समाधानं कुर्वित्यर्थः । मयि - विषये । बुद्धिं - परमप्राप्यत्वाध्यवसायम् । निवेशय - कुरु । अतः - परमप्राप्यत्वाध्यवसायपूर्वकमनस्समाधानात् । ऊर्ध्वं - अनन्तरमेव । सन्ध्यभावआर्षः ।

---

**किन्तु जो पुरुष अपने समस्त नित्य नैमित्तिक यहाँ तक कि भोजन शयन आदि कर्मों को, यज्ञ होमादि वैदिक कर्मों को मुझे ही अच्छी प्रकार से अर्पण करके, मुझे ही एकमात्र प्राप्त वस्तु स्थिर करके, ध्यान, अर्चन, प्रणामादि के द्वारा मेरी ही उपासना करते हैं, हे अर्जुन ! मुझ में मन को निविष्ट करने वाले उन उपासकों को मैं शीघ्र ही मृत्युरूपी संसार सागर से सम्यक् रूप से उद्धार कर देता हूँ क्योंकि भक्त तो मुझे अतीव प्रिय होते हैं ॥ ६-७ ॥**





**मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।**
**निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥ ८ ॥**
**अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।**
**अभ्यासयोगेन ततो मामिच्छाप्तुं धनंजय ॥ ९ ॥**

---

मय्येव । निवसिष्यसि - निवत्स्यसि । इडागमआर्षः । अत्र मयि निवसिष्यसीत्याधारतामात्रं न विवक्षितम् तस्यास्सर्वदा सत्त्वात्; नापि तद्बुद्धिः, तस्याश्श्रवणदशायामेव सिद्धत्वात्; किन्तु तादृशमनस्समाधानानन्तरमेव मुक्तवन्मद्गुणानुभवैकप्रवणो भविष्यसीत्यर्थः । यद्वा - पृष्टसर्वप्रकारावस्थिते मय्याचार्ये शिष्यइव पितरि पुत्र इव च स्थास्यसीत्यर्थः ॥ ८ ॥

एवं भगवदुपासनस्य स्वसाध्यनिष्पादने शैघ्र्यात्सुखोपादानत्वाच्च श्रेष्ठ्यमुक्तं, तस्मिन्नधिकुरुष्वेति चार्जुनं प्रत्यनुशिष्टम्, अथ शब्दादिविषय वासनाकृष्टचेतसा मत्यन्तादृष्टपूर्वे त्वयि कथं स्थिरं चित्तं समाधातुं शक्यमित्यर्जुनस्याशयमुन्नीय तदुपायमुपदिशति—

हे धनंजय - अर्जुन ! मयि - स्वाभाविकानवधिकातिशयासंख्येयगुणसागरे निखिलहेयप्रत्यनीके मयि । चित्तं - मनः । स्थिरं यथा तथा । समाधातुम् । नशक्नोष्यथ - शक्तो न भवसि यदि । अथ शब्दोयद्यर्थः । ततः तस्माद्धेतोः । अभ्यासयोगेन - मयि निरतिशयप्रेमगर्भस्मरणा वृत्त्युपायेन । माम् । आप्तुं - प्राप्तुम् । इच्छ ॥ ९ ॥

अभ्यासेपि - निरतिशयप्रेमगर्भस्मरणा वृत्तावपि । असमर्थः । असि यदि । मत्कर्मपरमः - मत्कर्माणि - इतिहासपुराणादिप्रसिद्धान्यालयनिर्माणोद्यानकरणप्रदीपारोपणसम्मार्जनाभ्युक्षणानुलेपन पुष्पाहरणपूजाप्रवर्तननामसंकीर्तनप्रदक्षिणस्तुतिप्रणामादि समाराधनात्मककर्माणि, परमाणि-परमप्रयो-

---

**इसलिए हे अर्जुन ! तुम मुझ में ही अपने मनको एकाग्र करके लगाओ और मुझ में ही बुद्धि को अभिनिविष्ट करो, ऐसा होने से इसके बाद तुम मुझ में ही निवास करोगे अर्थात् मेरे ही गुणों के अनुभव में निमग्न रहोगे इसमें सन्देह नहीं है ॥ ८ ॥**

**हे धनञ्जय अर्जुन ! यदि तुम मुझमें स्थिर भाव से मनको एकाग्र करके लगाने में समर्थ नहीं हो सकते तो मेरा बार-बार प्रेम पूर्वक चिन्तन या स्मरण रूप-योग का अभ्यास के द्वारा मुझे प्राप्त करने की चेष्टा करो ॥ ९ ॥**

**अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।**
**मदर्थमपि कर्माणि कुर्वन्सिद्धि मवाप्स्यसि ॥१०॥**
**अथैतदप्यसक्तोऽसि कर्तुं मद्योगमाश्रितः ।**
**सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥११॥**
**श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्धयानं विशिष्यते ।**
**ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥१२॥**

---

जनानि, यस्य स तथोक्तः । भव । मदर्थं - केवलम्मत्प्रीणनाय । कर्माणि - उक्तरूपाणि । कुर्वन्नपि - आचरन्नपि । सिद्धिं - मत्प्राप्तिरूपाम् । अवाप्स्यसि ॥ १० ॥

मद्योगं - मयि निरतिशयभक्तियोगम् । आश्रितस्सन् । फलत्यागं- फलस्य त्यागो यस्मिन् तत्तथोक्तं - फलाभिसन्धिरहितं । सर्वकर्ममदाराधनैकविषयज्ञानदानादिसमस्तकर्म । कुरु - समाचर ॥ ११ ॥

हि - यस्मात्कारणात् । अभ्यासात् - उक्तरूपात् । ज्ञानं - आत्मसाक्षात्काररूपम् । श्रेयः - हितम् । ज्ञानात् - तादृशात् । ध्यानं - आत्म-

---

उक्त प्रकार के मद् विषयक निरतिशय प्रेमपूर्वक बार-बार के स्मरण रूप अभ्यास में भी तुम असमर्थ हो तो मेरे लिये मन्दिर निर्माण, उद्यान बनाना, पुष्प-चयन, अर्चना और कीर्तन आदिक जितने कर्म करणीय हों उन्हें करने में परायण हो जाओ। केवल मात्र मेरे सन्तोष के लिए किये गये इन कर्मों के करने से भी मुझे प्राप्ति रूप सिद्धि लाभ कर सकोगे ॥ १० ॥

यदि मेरे प्रति भक्तियोग का आश्रय करते हुए, पूर्वश्लोकोक्त मेरे लिए कर्मों के अनुष्ठान करने में भी असमर्थ हो तो मनको संयमित करके फल की अभिलाषा रहित हो मेरी आराधना जानकर नित्यनैमित्तिक सम्पूर्ण कर्मों को करते रहो ॥११॥

नवम श्लोक में उक्त प्रीतिरहित ईश्वर स्मरण की अपेक्षा आत्मदर्शन रूप ज्ञान कल्याणकर है। ऐसे आत्मज्ञान की अपेक्षा आत्मस्वरूप विषयक चिन्तन हितकर है। मनकी एकाग्रता रहित इस प्रकार के आत्म स्वरूप चिन्तन की अपेक्षा की अभिलाषा का त्याग पूर्वक कर्म का अनुष्ठान श्रेयस्कर है। इस प्रकार के त्याग पूर्वक कर्मानुष्ठान से काम, क्रोध आदि की निवृत्ति होकर निरन्तर शान्ति प्राप्त होती है ॥ १२ ॥





**अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।**
**निर्ममो निरहंकारः समदुःख सुखः क्षमी ॥१३॥**
**सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः ।**
**मय्यर्पितमनोबुद्धि र्यो मद्भक्तः स मे प्रियः ॥१४॥**

---

स्वरूपविषयकम् । विशिष्यते - हितं भवति । ध्यानात् - तादृशात् । कर्मफलत्यागः - फलत्यागपूर्वककर्मानुष्ठानम् । श्रेयान् । त्यागात् तादृशात् । अनन्तरं - अचिरादेव । शांतिः -रजस्तमोमूलरागद्वेषादि निवृत्तिः । भवति । शान्ते मनस्यात्मध्यानं सम्पत्स्यते, ध्यानाच्च तदापरोक्ष्यम्, तदापरोक्ष्यात्पराभक्तिरितिभक्तियोगाशक्तस्यात्मनिष्ठैव श्रेयसी, आत्मनिष्ठस्याप्य शान्तमनसो निष्ठाप्राप्तये ऽन्तर्गतात्मज्ञानानभिसंहितफलकर्मनिष्ठैव श्रेयसीत्यर्थ ॥ १२ ॥

अनभिसंहित फलकर्मनिष्ठस्योपादेयान् गुणानाह—

सर्वभूतानां - मनोवाक्कायैरपकुर्वतामपि सर्वजन्तूनाम् । अद्वेष्टामदपराधानुगुणमीश्वरप्रेरितान्येतानि भूतानि द्विषन्त्यपकुर्वन्ति चेत्यकृतद्वेषः । मैत्रः - तादृशसर्वभूतहितैषी । करुणः - तेषु द्विषत्स्वपकुर्वत्सु च दुःखितेषु करुणां कुर्वन् । निर्ममः - देहेन्द्रियेषु तत्सम्बन्धिषु च ममकाररहितः । अतएव । समदुःखसुखः - सुखदुःखयो रविकृतचित्तः । अतएव । क्षमी - अवर्जनीयशीतोष्णादिसहिष्णु ॥ १३ ॥

सन्तुष्टः - यदृच्छोपगतेन येन केनापि देहधारणद्रव्येण सन्तुष्टः । सततं सन्ततम् । योगी - प्रकृतिविविक्तात्मानुसन्धानपरः । यतात्मा - नियमितमनोवृत्तिः । दृढनिश्चयः - अध्यात्मशास्त्रोदितेष्वर्थेषु दृढनिश्चयः । मयि - सर्वकर्माराध्ये मयि । अर्पितमनोबुद्धिः - अर्पितचित्ताध्यवसायः, भगवान् वासुदेवो वसुदेवसूनुरेवानभिसंहितफलेनानुष्ठिते न कर्मणाऽऽराध्यते - आराधितश्च ममात्मापरोक्षं साधयिष्यतीति मय्यर्पितमनोबुद्धिरित्यर्थः । एवंभूतः । यः । मद्भक्तः - मयि भक्तिमान् । सः । मे - मम । प्रियः ॥१४॥

---

जो सब प्राणियों में द्वेष रहित, प्राणिमात्र का हित चिन्तक, दयाशील, देह इन्द्रियों में एवं उनके सम्बन्धियों में ममता रहित, देहात्माभिमान रहित, अतएव सुख-दुःख में निर्विकार चित्त, शीत और उष्ण विषयों का सहनशील, सन्तुष्ट चित्त, सर्वदा प्रकृति वियुक्त आत्मा के अनुसन्धान में निरत, संगतमन वाला, अध्यात्म शास्त्रों के यथार्थ अर्थ में दृढविश्वासशील, सब कर्मों के आराध्य देवता मुझमें जिसका मन एवं बुद्धि समर्पित है ऐसा मेरा भक्त होता है और वह मुझे अतीव प्रिय है ॥१३-१४

**यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।**
**हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥१५॥**
**अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।**
**सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥१६॥**

---

यस्मात् - कर्मयोगनिष्ठात्पुरुषान्निमित्तात् । लोकः - जनः । नोद्विजते - न बिभेति । यो लोकोद्वेगकरं कर्म किंचिदपि न करोतीत्यर्थः । लोकाच्च - निमित्तभूतात् । यः । नोद्विजते - यमुद्दिश्य सर्वलोको नोद्वेगकरं कर्म करोतीत्यर्थः । अतएव । यः । हर्षामर्षभयोद्वेगैः - कंचित्प्रति अमर्षेण - कोपेन, कंचित्प्रति भयेन, कंचित्प्रति, उद्वेगेन - कंपेन च । मुक्तः । एवंभूतः । सच - सोपि । मे मम । प्रियः ॥ १५ ॥

अनपेक्षः - आत्मव्यतिरिक्त कृत्स्नवस्तुन्यपेक्षारहितः । शुचिः - नियताहारेण शुद्धः, शास्त्रविहितद्रव्यवर्धितकाय इत्यर्थः । दक्षः - युक्तायुक्तविवेकसमर्थः, शास्त्रीयक्रियोपादानसमर्थ इत्यर्थः । उदासीनः - अविहितक्रियायत्नरहित इत्यर्थः । गतव्यथः - अवर्जनीयशीतोष्णपरुषस्पर्शादिद्वन्द्वदुःखेषु व्यथारहितः । सर्वारम्भपरित्यागी - लौकिके कर्मणि मनोवाक्कायव्यापाररहितः, शास्त्रीयव्यतिरिक्तसर्वकर्मारम्भपरित्यागीति यावत् । एवंभूतः - यः । मद्भक्तः । सच । मे - मम । प्रियः ॥ १६ ॥

यः । न हृष्यति - दैवादुपनतं प्रियमर्थं प्रति हर्षं न प्राप्नोति । न द्वेष्टि - अप्रिय प्राप्यापि द्वेषं न करोति । न शोचति - पशुपत्नी सुतादिवियोगादिरूपशोकनिमित्तं प्राप्यापि शोकं न करोति । न कांक्षति - अनागतं वस्तु न वाञ्छति, तथाविधमर्थमप्राप्तं न कांक्षतीत्यर्थः । शुभाशुभपरित्यागी-

---

**जिस कर्मयोग निष्ठ पुरुष के द्वारा संसार के व्यक्ति उद्वेग को प्राप्त नहीं होते और किसी भी व्यक्ति के द्वारा जो उद्वेग प्राप्त नहीं करता अतएव जो हर्ष, क्रोध, भय और उद्वेग से मुक्त है वह भी मुझे प्रिय है ॥ १५ ॥**

**जो आत्मा से अतिरिक्त सभी वस्तुओं की अपेक्षा से रहित है, शरीर, मन, वाणी, कर्म से जो विशुद्ध है, शास्त्रीय कर्मों के करने में जो कुशल है, शास्त्रीय कर्मों के अनुष्ठान में निश्चित रूप से आने वाले शीत और उष्ण प्रकृतिजन्य दुःखों से होने वाली व्यथा से रहित है । अशास्त्रीय समस्त कर्मों के आरम्भ का परित्याग करने वाला ऐसे गुणों से युक्त मेरा भक्त मुझे प्रिय है ॥ १६ ॥**





**यो न हृष्यति न द्वेष्टि न शोचति न कांक्षति ।**
**शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः ॥१७॥**
**समः शत्रौ च मित्रे च तथा मानापमानयोः ।**
**शीतोष्णसुखदुःखेषु समः संगविवर्जितः ॥१८॥**
**तुल्यनिन्दा स्तुतिमौनी सन्तुष्टो येन केनचित् ।**
**अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः ॥१९॥**

---

पुण्यपापरूपप्राप्तिप्रतिबन्धककर्मनिवृत्तिपरः । पापवत्पुण्यस्यापि बन्धहेतुत्वात्तथानिर्देशः । यः । एवम्भूतः । भक्तिमान् । सः । मे । प्रियः ॥१७॥

शत्रौ - अपकारिणि । मित्रे - उपकारिणि च । समः । तथा । मानावमानयोः । सत्कारासत्कारयोः । शीतोष्णसुखदुःखेष्वपि । समः - निर्विकारः । संगविवर्जितः - क्वचिदप्यासक्तिरहितः ॥ १८ ॥

तुल्यनिन्दास्तुतिः - निन्दास्तुत्योरेकप्रकारः । मौनी - द्वेषप्रीति निबन्धननिन्दास्तुतिरूपवागुच्चारणरहितः । येन केनचित् - यदृच्छागतेन । सन्तुष्टः - संजातहर्षः । स्थिरमतिः - अचंचलात्ममननशीलः । अनिकेतः - गृहक्षेत्रादिष्वसक्तः । एवंभूतः । यः । भक्तिमान् । नरः । सः । मे । प्रियः ॥ १९ ॥

अस्मादात्मनिष्ठाद्भक्तियोगनिष्ठस्य श्रैष्ठ्यं प्रतिपादयन् यथोपक्रमं उपसंहरति—

---

**जो कर्मयोगी प्रिय वस्तु के लाभ होने पर हर्षित नहीं होता, अप्रिय वस्तु के प्राप्त होने पर द्वेष नहीं करता, स्त्री पुत्र का वियोग आदिक कारणोंके उपस्थित होने पर भी शोक नहीं करता, स्त्री पुत्र धन आदि के लाभ की जिसे आकांक्षा नहीं होती, संसार बन्धन से मुक्त होने में प्रतिबन्धक पुण्य पाप रूप कर्मों से जो निवृत्त होते हैं, ऐसे भक्तिमान् साधक मुझे प्रिय होते हैं ॥ १७ ॥**

**जो आत्मनिष्ठ पुरुष शत्रु और मित्र में, मान और अपमान में, शीत और ग्रीष्म में, सुख और दुःख में समान ज्ञान अर्थात् निर्विकार होता है,जो आसक्ति रहित, निन्दा और स्तुति में समबुद्धि एवं जो मौनी, जो कुछ थोड़ा-मिल जाय उसी में सन्तुष्ट, घर आदि में आसक्ति से शून्य, स्थिर चित्त, इस प्रकार के गुणों से विशिष्ट भक्तिमान् पुरुष मुझे प्रिय है ॥ १८-१९ ॥**

**ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।**
**श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥२०॥**

॥ इति श्रीमद्भगवद्गीतायां द्वादशोऽध्यायः ॥ १२ ॥

---

येतु - पुरुषाः । श्रद्धधानाः - श्रद्धावन्तः । मत्परमाः - मदेकप्रयोजनाः । यथोक्तं - मय्यावेश्य मनो ये मामित्यादिना मदुक्तप्रकारम् । धर्म्यामृतं - धर्मादनपेतममृतवद्भोग्यभूतं च । इदं - भक्तियोगाख्यं मदुपासनम् । पर्युपासते - सपरिकरमनुतिष्ठन्ति । ते । भक्ताः । मे - मम । अतीव । प्रियाः, मदात्मभूता इत्यर्थः ॥ २० ॥

इति श्रीमद्भगवद्गीताभाष्यार्थसंग्रहतात्पर्यदीपे श्रीवरवरमुनिविरचितायां बालबोधिन्यपराभिधानायां गीतार्थ-संग्रहदीपिकायां

द्वादशोऽध्यायः ॥ १२ ॥





---

जो पुरुष मेरे प्रति श्रद्धावान् एवं मुझे ही एकमात्र परम पुरुषार्थ मानकर मुझ में मन लगाकर परम श्रद्धायुक्त हो मुझे प्राप्त होने की आकांक्षा से मेरी उपासना करते हैं ऐसे प्रकृत धर्म साधनरूपी एवं अमृततुल्य उपभोग्य सपरिकर भक्तियोग रूप उपासना का अनुष्ठान करते हैं, ऐसे भक्तजन मुझे अत्यन्त प्रिय हैं ॥ २० ॥

**॥ श्रीमद् भगवद्गीता के हिन्दी अनुवाद का भक्तियोग नामक द्वादश अध्याय समाप्त हुआ ॥**

**श्रीरस्तु ।**

# अथ त्रयोदशोऽध्यायः

श्रीभगवानुवाच—

**इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।**
**एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ १ ॥**

---

अथ प्रथमषट्के शास्त्रावरणोपोद्घातभूतपार्थगतास्थानरनेहकारुण्यादिनिवृत्तिहेतुभूतभगवत्प्राप्त्युपायभूतभक्तियोगांगभूतमात्मयाथात्म्यानुसन्धानपूर्वककर्मयोगसाध्यं प्रत्यगात्मनोदर्शनं सपरिकरमुक्तम् । द्वितीयषट्के च तदंगिभूतो भगवत्प्राप्त्युपायभूतभक्तियोगस्सपरिकरः प्रतिपादितः । इदानीं तृतीय षट्के षट्कद्वयोदितमर्थजातं विशोधयिष्यन् - आदौ - गतासूनगतासूंश्चेत्यादिना प्रतिपादितं शरीरात्मतत्त्वं विशोधयितुं भगवानुवाच—

हे कौन्तेय ! इदं - देवोऽहं मनुष्योहमित्यहमर्थसामानाधिकरण्येन

---

## त्रयोदश अध्याय

**क्षेत्रज्ञविभागयोग अध्याय का अर्थसंग्रह**

देहस्वरूपमात्माप्ति हेतुरात्मविशोधनम् ।
बन्धहेतुः विवेकश्च त्रयोदश उदीर्यते ॥
( गीतार्थसंग्रह )

देह स्वरूप तथा आत्मस्वरूप का अतिस्पष्ट रूप से, विवेचन आत्म दर्शन का उपाय, आत्मा के देह सम्बन्ध का कारण, प्राकृतिक विषयों के विचार द्वारा अनुसन्धान का प्रकार इस तेरहवें अध्याय में उपदिष्ट हुआ है ।

भगवान् ने कहा—हे कुन्तीपुत्र अर्जुन ! देव, मनुष्य, तिर्यक् आदिक शब्दों से निर्दिष्ट शरीरों को क्षेत्र अर्थात् कर्मफलों का भोगने स्थान शब्द से कहा जाता है । इस शरीररूपी क्षेत्र को जो जानता है जो आत्मा का यथार्थ जानकार है उसे क्षेत्रज्ञ नाम से कहा जाता है ॥ १ ॥

**क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।**
**क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ २ ॥**

---

प्रतीयमानम् । शरीरम् । क्षेत्रमिति - कर्मबीजफलोत्पत्तिहेतुत्वात्क्षेत्रमिति । अभिधीयते - आत्मयाथात्म्यविद्भिः प्रतिपाद्यते । एतत् - शरीराख्यं क्षेत्रं । यः । वेत्ति - जानाति । तम् । तद्विदः - आत्मयाथात्म्यविदः । क्षेत्रज्ञ इति - क्षेत्रं जानातीति क्षेत्रज्ञ इति, वेद्यात् क्षेत्राद्वोदिताऽन्यइति । प्राहुः - वदन्ति । यथा केदारिणा - क्षेत्रमहं जानामीत्युक्ते ज्ञेयात् क्षेत्रात्तज्ज्ञाताऽन्यः प्रतीयते, एवं - शरीरमहं जानामीत्यनुभवेन ज्ञेयाच्छरीरात्तज्ज्ञाताऽन्यः - ज्ञातुश्च ज्ञेयं शरीरमन्यदिति स्फुटं ज्ञायते । ततएव - देवोऽहं - मनुष्योऽहं - इत्याद्यनुभवोप्यविनाभूतशरीरशरीरिभावनिबन्धनः , योगसहकृतमनोगोचरतया ; केवलचेतसादनवभासेन मोहकप्रकृतिसन्निधानदोषेणकर्मबलेनापि लौकिकानां देहात्मा भेदप्रतीतिरूप इतिभावः ॥ १ ॥

एवं ज्ञेयत्वेन ज्ञातृत्वेन चात्यन्तविविक्तयोरेव क्षेत्रक्षेत्रज्ञयोः - भूमिरापोनलोवायुरित्यादिसप्तमाध्यायादिसिद्धस्वशेषत्वप्रत्यभिज्ञापनेन स्वस्मादपि विविक्ततां ज्ञापयन्नेतद्विवेकज्ञानं प्रशंसति—

हे भारत ! सर्वक्षेत्रेषु - सर्वेषु शरीरेषु । क्षेत्रज्ञं चापि - अत्र जातावेकवचनं, क्षेत्रज्ञान् सर्वानपीत्यर्थः । मां -मदात्मकान् । विद्धि, अपिशब्दात्क्षेत्राण्यपि मदात्मकानि विद्धीति गम्यते । यथासर्वाणि शरीराणि शरीरिणामविनाभावेन विशेषणतया - देवोऽहं - मनुष्योऽहं - इत्यादि सामानाधिकरण्येनानुभूयन्ते, तथाक्षेत्रज्ञयो रुभयोरपि पूर्वोक्तरीत्या मदविनाभावेन - क्षेत्रज्ञं मां विद्धि - क्षेत्रं च मां विद्धीत्यादि सामानाधिकरण्यनिर्देशावुपपन्नावितिभावः । एवं - क्षेत्रक्षेत्रज्ञयोः - चेतना चेतनयोः । यज्ज्ञानं - परस्परविविक्ततया मच्छेषतया च यज्ज्ञानम् । तत् - ज्ञानम् । मम । मतम् । ज्ञानं - मुक्तिहेतुत्वाद्वेदवत्तन्ममाभिप्रेतं प्रशस्तज्ञानम् । अन्यत्तु वृथापाण्डित्यमितिभावः । तथा चोक्तम् - "तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तय" इति । यद्यपि - "द्वा सुपर्णा सयुजासखाया समानं वृक्षं परिषस्वजाते ।

---

**हे भरतवंश में पैदा होने वाले अर्जुन ! सब शरीरों में क्षेत्रज्ञ अर्थात् जीवात्मा मात्र को मुझे जानो, अर्थात् मदात्मक जानो यहाँ 'अपि' शब्द से समस्त शरीर भी मदात्मक हैं यह जानो । समस्त चेतन एवं अचेतन वस्तुयें मदात्मक हैं यह जानना ही मेरा अभिमत है ॥ २ ॥**





**तत्क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत् ।**
**स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ३ ॥**
**ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।**
**ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ४ ॥**

---

तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ।" "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति" इत्यादि केवलभेदश्रुतयः, "ऐतदात्म्यमिदं सर्वं स आत्मात्तत्त्वमसि" "अहं ब्रह्मास्मि" इत्याद्यभेदश्रुतयश्चापाततः परस्परविरुद्धाः प्रतीयन्ते ; तथापि "यः पृथिव्यां तिष्ठन् यस्य पृथिवीशरीरं" "य आत्मनि तिष्ठन् यस्यात्मा शरीरम्" इत्यादिना समस्तचिदचिद्वर्गस्य परमात्मशरीरतामुपपाद्य, "एष सर्वभूतान्तरात्माऽपहतपाप्मादिव्यो देव एको नारायणः" इतिनारायणस्य शरीरित्वं चाभिधाय सामानाधिकरण्यश्रुतीनां भेदश्रुतीनां च शरीरशरीरिभावमादायैककण्ठस्य ममाभिमततया मच्छरीरतया विविक्ततया ज्ञानमेव प्रशस्तमिति भावः ॥ २ ॥

क्षेत्रक्षेत्रज्ञज्ञानमेव प्रपंचयति—

तत् - शरीरात्मकम् । क्षेत्रम् । यत् - यद्द्रव्यम् । यादृक्च - जडोपादानकं - अजडोपादानकं वेति यावत्, येषामाश्रयभूतमित्यर्थः । यद्विकारि- यद्विकारयुक्तम् । येचास्यविकारा इत्यर्थः । यतः - यस्मात्प्रयोजनात्, यत्प्रयोजनसिद्ध्यर्थमुत्पन्नमित्यर्थः । यत् - यत्स्वरूपमित्यर्थः । जडद्रव्यसंघातएकदेशो वेत्यर्थः । सच - क्षेत्रज्ञः । यः - यत्स्वरूपः । यत्प्रभावश्च - प्रकृष्टाभावाः प्रभावाः, ये प्रभावा यस्य सः - यत्प्रभावः - यैर्यैस्स्वभावैर्युक्त इत्यर्थः । तत् - सर्वम् । समासेन - संक्षेपेण । मे - मत्तः । शृणु - आकर्णय । शृण्विति सावधानता द्योतनाय ॥ ३ ॥

---

**शरीर रूपी यह क्षेत्र जिन द्रव्यों तथा जिन उपादानों से उत्पन्न हुआ है, एवं जिन विकारों से युक्त है, और जिस प्रयोजन के लिए यह उत्पन्न हुआ है एवं जिस रूप और स्वरूप से विशिष्ट है एवं स्वभाव से युक्त है उस सम्पूर्ण विषय को संक्षेप में मुझ से सुनो ॥ ३ ।**

**इस विषय का पराशर आदिक ऋषियों ने बहुत प्रकार से वर्णन किया है । ऋग्वेद, यजुः, साम, आदिक वेदों ने भिन्न-भिन्न प्रकार से इस विषय का वर्णन किया है । युक्ति एवं तर्क द्वारा निर्णीत एवं विशेष रूप से निश्चित अर्थयुक्त ब्रह्मसूत्रों द्वारा भी इस विषय को गाया गया है ॥ ४ ॥**

**महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।**
**इन्द्रियाणि दशैकं च पंच चेन्द्रियगोचराः ॥ ५ ॥**

कुत्र विस्तरेणोक्तस्य भवता संक्षेपेण कथनमित्यत्राह—

ऋषिभिः - पराशरादिभिः । बहुधा - बहुभिः प्रकारैः । गीतं - क्षीरनीरवदतिदुर्विवेचतया बहुविधं विवेचितमित्यर्थः । विविधैः - ऋग्यजुस्सामादिबहुप्रकारैः । छन्दोभिः - वेदैश्च । पृथक् - असंकीर्णं यथातथा । गीतम् । हेतुमद्भिः - स्वाभिमतार्थसाधकयुक्तिसम्पन्नैः । विनिश्चितैः - विशेषेण निश्चितार्थैः । ब्रह्मसूत्रपदैः - ब्रह्मसूत्राणि - ब्रह्मसूचकानि - पदानि पद्यते - ब्रह्मज्ञानोपयोगितया प्रतिपद्यते क्षेत्रक्षेत्रज्ञतत्त्वमेभिरिति पदानि, ब्रह्मसूत्राणि च तानि पदानि च ब्रह्मसूत्रपदानि, तैः । गीतम् "नवियदश्रुतेः" "नात्माश्रुतेः" इत्यादिना क्षेत्रक्षेत्रज्ञतत्त्वे भेदेनोपादाय "परात्तुतच्छ्रुतेः" इत्यादिना तत्प्रवर्त्यत्वोपपादनादित्यर्थः । एवंभूतं तत् क्षेत्रक्षेत्रज्ञमाहात्म्यं समासेन शृण्विति पूर्वेणान्वयः ॥ ४ ॥

अथ भगवानेव - तत्क्षेत्रमिति स्वेनैवोपदिष्टानर्थान्विवेचयति—

एतत् क्षेत्रं - शरीरात्मकं क्षेत्रम् । महाभूतानि - पृथिव्यादीनि पंच । अहङ्कारः - तत्कारणप्रकृतिपरिणामविशेषः । बुद्धिः - महत्तत्त्वम् । अव्यक्तमेवच - प्रकृतिश्च । प्रकृत्याद्याकाशपर्यन्तजडमयमित्यर्थः । अनेन = यदितिप्रथमनिर्दिष्टांशो विवेचितः । द्वितीयं याद्दृगित्येतदंशं विवेचयति । दश - ज्ञानेन्द्रियकर्मेन्द्रियात्मकानि । इन्द्रियाणि । एकं च - मनश्च । पंच । इन्द्रियगोचराश्च - इन्द्रियविषयाश्शब्दादयश्च । एतद्रूपं क्षेत्रमित्यन्वयः, तदाश्रयभूतमित्यर्थः ॥ ५ ॥

यद्विकारीति तृतीयांशं विवेचयति (इच्छाद्वेषस्सुखं दुःखमिति) तत् । क्षेत्रम्, एतत्कार्यमित्यर्थ । यदितिनिर्दिष्टं पंचमांशं विवेचययि (संघातइति) पूर्वोक्तजडसंघातरूपं तत्क्षेत्रमित्यर्थः । यतइत्युद्दिष्टं चतुर्थमंशं विवेचयति (चेतनाधृतिरिति) चेतनस्य भोक्तुरात्मनः, आधृतिः - आधारः । सुखदुःखा-

**शरीर रूपी यह क्षेत्र, पृथ्वी, जल, तेज, वायु, आकाश यह पंचमहाभूत, अहङ्कार, महत्तत्त्व एवं सूक्ष्म प्रकृति, नेत्र कर्ण आदिक पाँच ज्ञानेन्द्रिय, वाक् आदिक पाँच कर्मेन्द्रिय, मन, इन्द्रियों के विषय शब्द, स्पर्श, रूप, रस, गन्ध भोग्य पदार्थ ये सब क्षेत्र अर्थात् शरीर के विभिन्न प्रकार हैं। इच्छा, द्वेष, सुख, दुःख ये सब क्षेत्र के कार्य अथवा स्वभाव हैं। पंचभूतों का संमिश्रण ही क्षेत्र है। यह चैतन्य वस्तु**





**इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।**
**एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६ ॥**
**अमानित्वमदंभित्वमहिंसा क्षान्तिरार्जवम् ।**
**आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ७ ॥**
**इन्द्रियार्थेषु वैराग्यमनहंकार एव च ।**
**जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनन् ॥ ८ ॥**

नुभवार्थमयनभूतं तत्क्षेत्रमित्यन्वयः । अनेन शरीरस्य सुखदुःखानुभव एव प्रयोजनमित्युक्तं भवति । एवम् । एतत्क्षेत्रम् । समासेन - संक्षेपेण । सविकारं - सकार्यं सस्वभावं च । उदाहृतम् - उपन्यस्तम् ॥ ६ ॥

अथक्षेत्रकार्येष्वात्मज्ञानसाधनतयोपादेयान् गुणानाह—

अमानित्वं - मानः - विद्यावित्ताभिजनादिजनितगर्वः, तद्रहितत्वम् । अदंभित्वं - दंभः - धार्मिकत्वयशः प्रयोजनतया धर्मानुष्ठानं, तद्रहितत्वम् । अहिंसा - मनोवाक्कायैः परपीडानाचरणम् । क्षान्तिः - परैः पीड्यमानस्यापि तान्प्रति द्वेषरहितत्वम् । आर्जवं - वाङ्मनः - कायानामेकरूपता । आचार्योपासनं - आत्मज्ञानप्रदायिन्याचार्ये प्रणिपातपरिप्रश्नसेवादिनिरतत्वम् । शौचं - अशुचित्वराहित्यम् । रागादिकम्मनसो ऽशुचित्वं, अनृतं वाचो ऽशुचित्वं, अभक्ष्यभक्षणादिकं कायस्याशुचित्वं, तद्रहितत्वमित्यर्थः । स्थैर्यं - अध्यात्मशास्त्रोक्तेष्वर्थेषु निश्चलत्वम् । आत्मविनिग्रहः - आत्मनः - मनसः, विनिग्रहः - प्रत्यगात्मव्यतिरिक्तविषयेभ्यो निवर्तनम् ॥ ७ ॥

इन्द्रियार्थेषु - इन्द्रियाणां - चक्षुरादीनाम्, अर्थेषु - विषयेषु रूपादिषु सांस्पर्शिकेषु । वैराग्यं - सदोषत्वानुसन्धानेन विरक्तिः । अनहङ्कारः - देहात्माभिमानरहितत्वम् । इदमुपलक्षणम् - अस्वेस्वत्वबुद्धिरहितत्वमप्यनेन संगृहीतम् । जन्ममृत्युजराव्याधि दुःख दोषानुदर्शनं - जन्ममृत्युजराव्याधिषु शरीरसम्बन्धिषु दुःखरूपस्थ दोषस्य, अनुदर्शनं - पुनः पुनरालोचनम् ॥ ८ ॥

**जीवात्मा का आधाररूप है। इस प्रकार के परिणाम एवं स्वभाव से युक्त क्षेत्र का स्वरूप संक्षेप से वर्णित हुआ है ॥ ५-६ ॥**

**विद्या, धन और सेवक वर्ग से होने वाले गर्व से रहित अमानिता, 'मैं बड़ा धार्मिक हूँ' जानकर अपनी प्रसिद्धि की अभिलाषा से रहित अदम्भिता, शरीर मन वाणी से दूसरों को पीड़ा पहुंचाना रूप हिंसा से रहित अहिंसा, क्षमा, अध्यात्म शास्त्र**

**असक्तिरनभिष्वंगः पुत्रदारगृहादिषु ।**
**नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ९ ॥**
**मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।**
**विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥१०॥**

असक्तिः - गृहारामक्षेत्रादिष्वाभिमानिकेष्वासक्तिरहितत्वम् । ननु-गृहाद्युपकरणेषु संगविरहे कथं गृहस्थधर्मनिष्पत्तिरित्यत्राह (अनभिष्वंगइति) पुत्रदारगृहादिषु । अनभिष्वंगः - शास्त्रोक्त धर्मसाधनत्वेन विना स्वभोगसाधनत्वानुसन्धानेनातिप्रीतिरहितत्वमित्यर्थः । इष्टानिष्टोपपत्तिषु - इष्टानिष्टानां सांकल्पिकानां, उपपत्तिषु प्राप्तिषु । नित्यं । समचित्तत्वंच - एकरूपचित्तत्वं च, हर्षोद्वेगरहितत्वंचेति यावत् ॥ ९ ॥

अनन्ययोगेन - अन्ययोगः - प्रयोजनान्तरस्पर्शः, तदभावेन । मयि-सर्वेश्वरे । अव्यभिचारिणी - न व्यभिचरितुं - देवतान्तरं स्प्रष्टुं, शीलमस्या इत्यव्यभिचारिणी - अतिस्थिरा । भक्तिश्च । विविक्तदेशसेवित्व - पवित्रदेशसेवित्वम् । जनसंसदि - असात्त्विकसभायाम् । अरतिः - अप्रीतिः ॥ १० ॥

अध्यात्मज्ञाननित्यत्वं - आत्मनि - विविक्तात्मविषये, यज्ज्ञानं तदध्यात्मज्ञानम्, तस्मिन्नित्यत्वं - तदेकनिष्ठत्वम् । तत्वज्ञानार्थचिन्तनं - तत्वज्ञानं-प्रत्यगात्मयाथात्म्यज्ञानं, अर्थः - प्रयोजनं, यस्य तत्, एवंभूतं चिन्तनं - आलोचनम् । एतत् - अमानित्वादिप्रत्यगात्मालोचनपर्यन्तं क्षेत्रकार्यजातम् । ज्ञान-

में स्थिर बुद्धि, मन पर संयम, समस्त इन्द्रियों से भोगे जाने वाले विषयों के प्रति वैराग्य, देह ही आत्मा है इस अहङ्कार से शून्य एवं शरीर सम्बन्धरूप जन्म, मृत्यु, बुढ़ापा, व्याधि एवं दुःख रूप दोष का बार-बार चिन्तन या देखना, आत्मा से अतिरिक्त, स्त्री, पुत्र, गृह (घर) आदि में आसक्ति का न होना, घर में, धन आदि में भोग्यता बुद्धि का न होना केवल भगवान की सेवा बुद्धि से नित्यनैमित्तिक कर्मों का अनुष्ठान करना, इष्ट वस्तु के प्राप्त होने पर हर्ष अथवा अनिष्ट वस्तु के लाभ होने पर उद्वेग से रहित, मुझे प्राप्त करने के सिवाय अन्य कोई प्रयोजन से रहित इस अव्यभिचारिणी भक्ति, निर्जन स्थान पर रहना, जन समूह में प्रीति का न होना, आत्मविषयक ज्ञान में ही एकमात्र निष्ठा, आत्मविषयक तत्वज्ञान के लिए बार-बार चिन्तन करना ये गुणगण आत्मज्ञान अथवा आत्मदर्शन के साधन रूप से उपयोगी कहे





**अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।**
**एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥११॥**
**ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ।**
**अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥१२॥**

मिति - ज्ञायते प्रत्यगात्मतत्वमनेनेति ज्ञानं - प्रत्यगात्मज्ञानसाधनं, तदिति । प्रोक्तम् । अतः - तस्मात् । अन्यथा - अन्यत् । यत् - क्षेत्रकार्यं मानित्वदंभित्वादि । तत् । अज्ञानं - आत्मज्ञानविरोधीत्यर्थः ॥ ११ ॥

पूर्वं 'क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानम्मतं ममे' ति ज्ञेयतया प्रक्रांतयोः क्षेत्रक्षेत्रज्ञयोर्मध्ये क्षेत्रस्वरूपं शोधितं । अथावशिष्टस्य वेदितुः स्वरूपं शोधयति—

ज्ञेयं - उक्तामानित्वादिभिः क्षेत्रविविक्ततया वेद्यम् । यत् - प्रत्यगात्मस्वरूपम् । तत् । प्रवक्ष्यामि - प्रकृष्टं यथातथा कथयिष्यामि । एवं श्रोतुस्सावधानताद्योतनाय प्रवक्ष्यामीति प्रतिज्ञायादरातिशयाय फलं निर्दिशति (यदिति) यत् - प्रत्यगात्मस्वरूपम् । ज्ञात्वा - तत्वतो विज्ञाय । अमृतं - जरामरणादिविरहितं परिशुद्धात्मस्वरूपम् । अश्नुते - प्राप्नोति । अनादि - न विद्यते, आदिः - उत्पत्तिः, यस्य तत् । इदमुपलक्षणम् । अनन्तमपि । मत्परं - अहमेव, परः - शेषी, यस्य तत् ; मच्छेषभूतमित्यर्थः । अनेन सप्तमाध्याये 'इतस्त्वन्यां प्रकृतिं विद्धि मे परां । जीवभूता' मित्यत्र म इति षष्ठ्यानिर्दिष्टस्सम्बन्धश्शेषत्वरूप इति शोधितं भवति । ब्रह्म - संसारदशायां कर्मणा संकोचेपि - सचानन्त्याय कल्पत इति श्रुतिसिद्धापरिच्छिन्नज्ञानस्वभावम् । न सत् - कर्मकृतकार्यावस्थावत्त्वेपि स्वरूपतः कार्यावस्थारहितम् ।

गये हैं। इसके विपरीत जो कुछ जान है वह सब अज्ञान अर्थात् आत्म ज्ञान का विरोधी है ॥ ७-११ ॥

जो जानने योग्य वस्तु क्षेत्रज्ञ या जीवात्मा का स्वरूप है, जिसके विषय में अच्छी प्रकार जानने से जीवात्माको अमृतत्व लाभ हो जाता है अर्थात् संसार से मुक्ति प्राप्त हो जाती है। उसे जानने योग्य जीवात्म स्वरूप के विषय में भली-भाँति कहता हूं। यह जीवात्मा, क्षेत्रज्ञ अनादि है तथा मैं ही जिसका परवस्तु एवं शेषी हूँ, मेरा वह जीवात्मा शेष है। वह ब्रह्म सद् एवं असत् शब्द से निर्दिष्ट नहीं किया जा सकता है ॥ १२ ॥

**सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् ।**
**सर्वतश्श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १३ ॥**

नासत् - कारणावस्थारहितं च । उच्यते - न जायते म्रियते वा विपश्चिदित्यादि श्रुतिभिरित्यर्थः ॥ १२ ॥

तत् - परिशुद्धात्मस्वरूपम् । सर्वतः पाणिपादं - सर्वतः - सर्वेषु देशेषु, पाणयः पादाश्च - यस्य तत् । अत्र पाणिपादग्रहणं कर्मेन्द्रियमात्रोपलक्षणम् । सर्वदेशगतकर्मेन्द्रियकार्यशक्तमित्यर्थः । सर्वतोऽक्षिशिरोमुखं - सर्वतः - सर्वदेशेषु, अक्षीणि शिरांसि मुखानि च यस्य तत् । सर्वतः - सर्वदेशेषु । श्रुतिमत् - श्रोत्रयुक्तम् । अत्राक्षिश्रुतिग्रहणं ज्ञानेन्द्रियमात्रोपलक्षणम् । सर्वदेशव्यापि सवज्ञानेन्द्रियमूर्धमुखादिकार्यशक्तमित्यर्थः । अतएव । लोके । सर्वं - विषयजातम् । आवृत्य - ज्ञानद्वाराऽधिष्ठाय । तिष्ठति । अयम्भावः - यथा 'अपाणि पादो जवनो ग्रहीता''पश्यत्यचक्षुस्स श्रृणोत्यकर्णः'इति कर्मेन्द्रिय ज्ञानेन्द्रियाद्यभावेपि परमात्मा तात्कार्यशक्त इत्युपपन्नं, तथा जीवस्यापिमुक्तिदशायां 'निरंजनः परमंसाम्यमुपैती' तिश्रुत्या 'मम साधर्म्यमागता' इति वक्ष्यमाणस्वसूक्त्या च जगद्व्यापारवर्जसर्वशक्त्यादिप्रतिपादनेन, सचानन्त्यायकल्पत इति व्यापकज्ञानाविर्भावोक्त्या च परमात्मवत्सर्व वस्तुजातव्याप्तिरुक्तेवैति ॥ १३ ॥

सर्वेन्द्रियगुणाभासं - सर्वेषाम् - विषयाणाम्, इन्द्रियगुणैः - चक्षुरादिवृत्तिभिः, आभासः - प्रकाशः, यस्य तत्; इन्द्रियवृत्तिभिरपि विषयान् ज्ञातुं समर्थमित्यर्थः । सर्वेन्द्रियविवर्जितं - स्वभावत स्सर्वेन्द्रियैर्विवर्जितम् । इन्द्रियव्यापार नैरपेक्ष्येणापि सर्वसाक्षात्कारसमर्थमित्यर्थः । असक्तं - स्वभावतो देहादिदेह संगरहित मित्यर्थः । अथापि । सर्वभृच्चैव - ऐच्छिकदेवादिसर्वदेहभरणसमर्थं चैव 'स एकधा भवति त्रिधा भवती' त्यादिश्रुतेः । निर्गुणं -

**वह प्रकृति से रहित विशुद्ध आत्मस्वरूप सर्वत्र हाथ पैर वाले की तरह नेत्र, मस्तक और मुख वाले के समान कार्य करने में समर्थ हैं एव सुनने में समर्थ हैं, अर्थात् वह आत्मतत्व सर्वदेशव्यापी एवं सम्पूर्ण ज्ञानेन्द्रिय, मस्तक, मुखवाले की तरह कार्य करने में सामर्थ्यवान् है । अतएव जगत् में सम्पूर्ण वस्तुओं में व्याप्त है ।**

**(आत्मा अणु है, उसका स्वरूप विभु नहीं है इसलिए आत्मा की यह सर्वत्रव्याप्ति स्वरूपगत नहीं है अपितु धर्मभूत ज्ञान के द्वारा व्याप्ति है ) ॥ १३ ॥**





**सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।**
**असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १४ ॥**
**बहिरन्तश्च भूतानामचरं चरमेव च ।**
**सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥ १५ ॥**

स्वभावतो गुणसम्बन्धरहितम् । गुणकार्यप्राकृतभोगरहितमित्यर्थः । अथापि । गुणभोक्तृ च - संसारदशायां कर्माधीनप्राकृतगुणभोगसमर्थं चेत्यर्थ ॥ १४ ॥

तत् - विविक्तात्मतत्वम् । भूतानां - पृथिव्यादीनाम् । बहिः - बहिर्देशे । वर्तते । पृथिव्यादीनि भूतानि विहायाशरीरं बहिस्तिष्ठतीत्यर्थः । अन्तश्च । वर्तते - "जक्षत्क्रीडन् रममाणस्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वे" त्युक्तप्रकारेण स्वेच्छया प्राकृतभूतान्तर्वर्तित्वेनापि तिष्ठतीत्यर्थः । तथास्वभावतः । अचरंच । चरमेव च - देहित्वदशायां च रमेव च । तत् - एव सर्वशक्ति सर्वज्ञमपि विविक्तात्मस्वरूपम् । सूक्ष्मत्वात् - शरीरेवर्तमानत्वेप्यतिसूक्ष्मत्वात् । अविज्ञेयं - योगासंस्कृतमनोभि स्संसारिभिः पृथक्त्वेनदुर्विभाव्यम् । अतएव । तत् । दूरस्थं - अमानित्वादिगुणविरहिणां योजनतोऽप्यन्तरितमिव तिष्ठति । तदेव । अन्तिके च - अमानित्वादिगुणोपेतानामतिसन्निधौ भवति ॥ १५ ॥

**विशुद्ध आत्मवस्तु स्वभाव से ज्ञानेन्द्रिय एवं कर्मेन्द्रिय रूप सम्पूर्ण इन्द्रियों से रहित है तथापि यह आत्मा सब इन्द्रियों से अनुभव करने योग्य सम्पूर्ण विषयों को जानने में समर्थ है । स्वभावतः देव, मनुष्य आदिक सब देहों में आसक्ति रहित होते हुए भी, उन-उन देवादि शरीर समूहों को धारण करने में समर्थ है । आत्मा स्वभाव से सत्वादि प्राकृत गुणों से रहित होते हुए भी संसारी दशा में कर्म जनित सत्व आदि गुणों के कार्यरूप सुख दुःखादि भोगों के भोगने में समर्थ है ॥ १४ ॥**

**वही देह रहित आत्मवस्तु अशरीरी अवस्था में जगत् के प्राणियों के बाहर स्थित रहता है । शरीरयुक्त अवस्था में वही आत्मा पृथिवी आदिक पंचभूतों के मध्य जीवरूप से अवस्थान करता है एवं स्वभाव से स्थूल और सूक्ष्म देह रहित अवस्था में अचलरूप से स्थित रहता है और देहयुक्त अवस्था में वही सचल होकर रहता है । ऐसी आत्मवस्तु अत्यन्त सूक्ष्म होने से अज्ञानी संसारियों को ज्ञेय नहीं होता है, इसलिए यह आत्मा उन संसारियों को दूर में स्थित किन्तु अमानिता आदि गुणों से युक्त पुरुष के लिए यही निकट में स्थित अर्थात् ज्ञेय होता है ॥ १५ ॥**

**अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।**
**भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १६ ॥**
**ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।**
**ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥१७॥**

---

भूतेषु - शरीरात्मनापरिणतेषु पृथिव्यादिषु । अविभक्तं च - विदुषां ज्ञातृत्वैकाकारतयैकरूपम् । विभक्तमिव च - अविदुषां - देवोऽहम्मनुष्योऽहमित्यादिना देवाद्याकारेण नानारूपमिव च । स्थितम् । एवं विलक्षणं शुद्धरूपमुपवर्ण्य विशिष्टरूपस्यापि क्षेत्रज्ञस्य प्रकरणारम्भइव क्षेत्राद्भेदं दर्शयति (भूतेति) तत् - जीवतत्वम् । भूतभर्तृ - भूतानां - शरीरात्मनापरिणतानां पृथिव्यादीनाम् । भर्तृ - पोषकम् । ज्ञेयं - ज्ञातुं शक्यम् । अनेन-पोष्यात्पोषकस्य भेदस्सिद्धः । ग्रसिष्णु - अत्रात्मना परिणतानां भूतानां ग्रसनशीलम् । ज्ञेयम् । अनेन ग्रस्यमानात्ग्रसितुर्भेदः । प्रभविष्णु च - भक्षितानां रूपान्तरेणोत्पादनं प्रभवः - तच्छीलं - तत्कारणं च । ज्ञेयम् । अन्नादीनां परिणामादप्यर्थान्तरं तत्कारणमात्मतत्त्वमिति सिध्यति । मृतशरीरे भरणग्रसनप्रभवानामदर्शनं तेषां जीवैकहेतुकत्वादि त्यवगन्तव्यम् ॥ १६ ॥

तत् - आत्मतत्त्वम् । ज्योतिषामपि - प्रकाशकानां - दीपादित्यादीनामपि । ज्योतिः - प्रकाशकम् । दीपादित्यादिः स्वप्रभा द्वारा घटादिकमिव

---

वह विशुद्ध आत्मवस्तु ज्ञानगुणयुक्त है, अतएव वह विभिन्न भौतिक शरीरों में आत्मज्ञानी जनों को ज्ञातृत्वगुणयुक्त रूप में अविभक्त के समान प्रतीत होता है, एवं वही आत्मा अज्ञानीजनों को देव मनुष्यादि नानारूप और आकार में विभक्त रूप से प्रतीत होता है । वही परमात्मा मनुष्य आदि भौतिक शरीरों का भरण करने वाला ज्ञेय वस्तु है, अर्थात् इसी को जाना जाता है । विभिन्न जीवों के शरीरों में यही आत्म तत्व अन्नादि के भोजन करने में समर्थ एवं खाये हुए को रूपान्तरित करके शरीर पोषक रस एवं वर्जनीय मलमूत्र आदि पदार्थों को उत्पन्न करने में समर्थ है ॥ १६ ॥

वही परमात्मा सूर्य आदिक ज्योतिमान् पदार्थों का भी प्रकाशक अर्थात् ज्योति प्रदान करने वाला है । तमः पदवाच्य मूलप्रकृति से भी अतिरिक्त (श्रेष्ठ) वस्तु कहा जाता है । अतएव अमानिता आदिक आत्मज्ञान के साधनों से जाना जाता है एवं ज्ञान स्वरूप है, इस प्रकार से इस आत्मवस्तु का अनुसन्धान करना चाहिए । यह विशुद्ध आत्मवस्तु समस्त जीवों के हृदय स्थल में विशेषरूप से स्थित रहता है ॥१७॥





**इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।**
**मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥१८॥**
**प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।**
**विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥१९॥**

---

प्रभास्थानीय स्वज्ञानद्वारा दीपादित्यादिकमप्यात्माप्रकाशयतीत्यर्थः । तमसः मूलप्रकृतेः । परं विविक्तम् । उच्यते - आत्मतत्त्वविद्भिः प्रतिपाद्यते । अतएव । ज्ञानगम्यं - ज्ञायते आत्मतत्वमेभिरिति ज्ञानानि - ज्ञानसाधनानि, अमानित्वादीनि; तैर्गम्यं - प्राप्यम् । ज्ञानं - ज्ञानैकाकारम् । ज्ञेयं - अनुसन्धेयम् । सर्वस्य - लोकस्य । हृदि - हृद्देशे । विष्ठितं - विशेषेण सन्निहितम् ॥ १७ ॥

क्षेत्रक्षेत्रज्ञयाथात्म्यमुपसंहरन्नुक्तस्य फलं दर्शयति—

इति - पूर्वोक्तरीत्या । क्षेत्रं - शरीरतत्त्वम् । तथा । ज्ञानं - ज्ञायते आत्मतत्त्वमनेनेति ज्ञानं - अमानित्वाद्यात्मयाथात्म्यज्ञानसाधनम् । ज्ञेयं च क्षेत्रज्ञतत्त्वं च । समासतः - संक्षेपेण । उक्तम् । एतत् - त्रितयं । विज्ञाय । मद्भक्तः - विविक्तात्मज्ञानानुकूलभक्तिमान् । मद्भावाय - मम यो भावः - स्वभावः - असंसारित्वम्, तस्मै । उपपद्यते - उपपन्नो भवति । ततस्त्रितयज्ञानेन मुक्तियोग्यो भवतीत्यर्थः ॥ १८ ॥

---

पूर्वोक्त रीति से शरीरतत्व, आत्मा के स्वरूप ज्ञान का साधन अमानित्व अदम्भित्व प्रभृति ज्ञानत्व साधन एवं ज्ञेयवस्तु क्षेत्रज्ञ अर्थात् देहयुक्त विशुद्ध आत्मवस्तु का स्वरूप, संक्षेप से कहा । इन तीन तत्वों को विशेष रूप से जानने वाला बुद्धिमान मेरा भक्त मेरा स्वभाव प्राप्त करने का अधिकारी हो जाता है, अर्थात् मुक्ति प्राप्ति का अधिकारी होता है ॥ १८ ॥

(इस श्लोक में स्वाभाविक रूप से अत्यन्त भिन्न जीव अवस्था में अत्यन्त संश्लिष्ट प्रकृति एवं जीवात्मा दोनों का अनादि होना एवं इनके कार्यभेद की बात कहकर अब यहाँ से इस अध्याय के शेष तक देह संयुक्त अवस्था में भी जीवात्मा के विभिन्न स्वभाव एवं देह से जीव की पृथक् सत्ता का स्पष्ट वर्णन करते हैं) ।

प्रकृति एवं पुरुष (जीवात्मा) और उनका परस्पर संसर्ग इन दोनों को ही अनादि जानो । और बन्धन के हेतु पूर्वोक्त इच्छा, द्वेष, सुख, दुःख आदि विकारों एवं दोषों को, अमानित्व आदि गुणों को प्रकृति से उत्पन्न हुए जानो ॥ १९ ॥

**कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।**
**पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥२०॥**

अथात्यन्तविविक्तयोः प्रकृत्यात्मनोरनादिसंसर्गं तत्कार्यभेदांश्चाह—

प्रकृतिं त्रिगुणात्मिकां मायाम् । पुरुषं चैव - ज्ञातारं चैव । एतावुभावपि । अनादी - विद्धि - इतरेतरयोगपरश्चकारः, परस्परं संसृष्टतयैवानादी जानीहि । विकारान् - बन्धहेतूनिच्छाद्वेषसुख दुःखात्मकान् दोषान् । गुणान् - मुक्तिहेतूनमानित्वादींश्च । प्रकृतिसम्भवान् । विद्धि । पुरुषेणानादिकालसंसृष्टाऽनादिक्षेत्रप्रवाहरूपेण परिणता प्रकृतिरेव पुरुषस्य बन्धार्थमिच्छाद्वेषसुखदुःखात्मकान् विकारानपवर्गार्थममानित्वादीन् गुणांश्च कल्पयतीत्यर्थः ॥ १९ ॥

ननु जडायाः प्रकृतेः कथमेवं शक्तिरित्यत आह—

प्रकृतिः - गुणत्रयमयी माया । कार्यकारणकर्तृत्वे - कार्यं - शरीरं, कारणानि - मनः प्रभृत्येकादशेन्द्रियाणि, तेषाम्, कर्तृत्वे । हेतुः - आश्रयतया प्रयोजकभूतः । उच्यते - प्रतिपाद्यते । शरीरेन्द्रियरूपेण परिणता भोक्तृपुरुषाधिष्ठिता प्रकृतिरेव भोगसाधनशरीरेन्द्रियव्यापाराश्रयभूतेत्यर्थः । ननु प्रकृतेरेव भोगसाधनक्रियाश्रयत्वे भोक्तृत्वमपि तस्या एव स्यादित्यत्राह (पुरुष इति) पुरुषः - प्रकृत्यधिष्ठाता चेतनः । सुखदुःखानां - शरीरेन्द्रियजन्यानामित्यर्थः । भोक्तृत्वे तदनुरूपे भोगे । हेतुः - आश्रयः । उच्यते । परस्परसंसृष्टयोः प्रकृतिपुरुषयोर्मध्ये जडायाः प्रकृतेः भोगसाधनक्रियाप्रयोजकत्वं तदधिष्ठातुश्चेतनस्य - शास्त्रफलं प्रयोक्तरीतिन्यायेन क्रियाफलभोक्तृत्वं चेत्यर्थः । अनेन क्षेत्रक्षेत्रज्ञयोः कार्यभेदश्चोक्त इति वेदितव्यम् ॥ २० ॥

**( देह और देही रूप से संयुक्त अवस्था में प्रकृति - पुरुष के कार्यभेद का वर्णन करते हैं ) ।**

**भोगों के साधन के लिए जितने व्यापार या कार्य हैं एवं मन आदिक एकादश (ग्यारह) इन्द्रियाँ इस शरीर को उन उन कार्यों में प्रवृत्त कराती हैं, इसलिये ये इन भोग साधनरूप व्यापार की कारण हैं और इन शरीर रूपी कार्य तथा मन आदिक ग्यारण इन्द्रियों का कारण या प्रयोजक (परम्परया कारण) उन-उन देहों के आश्रित त्रिगुणात्मिका माया या प्रकृति है और यह प्रकृति एवं शरीर से अधिष्ठित जीवात्मा (चेतनवस्तु) भोगों के साधन के लिए जितनी क्रियायें हैं उन सब सुख दुःख रूपी फलों का भोक्ता कहा जाता है ॥ २० ॥**





**पुरुषः प्रकृतिस्थो हि भुंक्ते प्रकृतिजान् गुणान् ।**
**कारणं गुणसंगोऽस्य सदसद्योनिजन्मसु ॥२१॥**

ननु परिशुद्धस्य स्वानुभवैकसुखस्य वैषयिकसुखदुःखानुभवो न तात्त्विकस्स्यात् - स्फटिकस्य जपाकुसुमलौहित्यवदारोपित एव च स्यादित्यत्राह—

पुरुषः - स्वानुभवैकसुखोपि प्रत्यगात्मा । प्रकृतिस्थः - शरीरसंसृष्टस्सन् । प्रकृतिजान् - तत्संसर्गप्रयुक्तान् । गुणान् - सत्त्वादिगुणकार्यसुखदुःखादीन् । भुंक्ते - अनुभवति हि । अनेन स्वानुभवैकसुखस्यापि प्रकृतिसम्बन्धएव बाह्यसुखदुःखानुभवे जलौष्ण्यानुभवे वह्निसंसर्गइव हेतुरित्युक्तं भवति । ननु शुद्धस्य तस्य प्रकृतिसम्बन्ध एव कथमित्यत्राह (कारणमिति) अस्य - परिशुद्धस्याप्यात्मनः । सदसद्योनिजन्मसु - सदसत्सु - साध्वसाधुषु, योनिषु - ब्रह्मक्षत्रचण्डालादिरूपेषु योनिषु, जन्मानि - शरीरसम्बन्धरूपाणि, तेषु । गुणसंगः - सत्त्वादिकार्यसुखाद्यासक्तिः । कारणम् । अयम्भावः - देवमनुष्यादि पूर्वपूर्वशरीरसंसृष्टो जीवस्तत्तत्प्रयुक्तसुखादीननुभूय तद्वासनावशात्पुनःपुनः पुण्यपापादिकर्माचरति - तदनुभवार्थं पुनःपुनः स्सदसद्योनिषु जायते-पुनःपुनःस्सुखाद्यनुभवतीति बीजांकुरवदनादिरियंगुणसंगशरीरसम्बन्धपरम्परेति भावः । अत्र गुणसंगस्य प्रकृतिसम्बन्धहेतुत्वोक्त्यैव कदाचित्संगकर्मानुष्ठानादि कृतसुकृतसंगमस्यामानित्यादिगुणसम्पत्तौ सत्यां गुणसंगनिवृत्त्या प्रकृतिसम्बन्धनिवृत्तिरपि सम्भवतीत्यपवर्गार्थव्यापारोऽपि प्रकृतिकार्यं सम्भवतीति द्योतितं भवति ॥२१॥

सदसद्योनिजन्मान्तरभाविपुरुषस्वभावानाह—

अस्मिन् । देहे - कार्यकारणसंघाते । स्थितः । अपरिच्छिन्नज्ञानशक्तिरपि । पुरुषः । उपद्रष्टा - उप - समीपे, द्रष्टा - शरीर संसृष्टत्वाज्जीवस्यापि शरीरस्य प्रवृत्त्यनुकूलसंकल्परूपदर्शनवान् । अनुमन्ता - प्रेरकः, नियन्तेत्यर्थः । भर्ता - देहस्यापिधारकः । भोक्ता - शरीरव्यापारफलभाक् । अनेन शरीरस्य पुरुषविशेषणत्वमुक्तम् । एभिर्विशेषणैर्नियमनधारणशेषित्वा-

**विशुद्ध जीवात्मवस्तु शरीर से संयुक्त होकर प्रकृति से होने वाले सत्वादि गुणों के कार्य या विकार रूप जो सुख दुःख आदि हैं उनका अनुभव करता है । उस शुद्ध आत्मा का अच्छी ब्राह्मणादि, बुरी चाण्डालादि योनियों में जन्म लेने का कारण उन सत्वादि गुणों के प्रति उसकी आसक्ति ही है ॥ २१ ॥**

**उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः ।**
**परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥२२॥**
**य एनं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।**
**सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥२३॥**

---

दिभिश्शरीरं प्रतिपुरुषस्य परत्वमुक्तम् । अतएव, महेश्वरश्च - शरीरेन्द्रिमनसामधिष्ठाता च । परमात्मेति चापि उक्तः - एतद्देहेन्द्रियमनांसि प्रतिपरमात्मेत्यप्युक्तः । अपिशब्दान्महेश्वर इत्यप्युक्त इतिगम्यते । देहेमनसिचात्मशब्दप्रयोगाज्जीवोपि तदपेक्षया परमात्मा भवति । स्वतोऽपरिच्छिन्नज्ञानशक्तिरप्ययं पुरुषोऽनादिप्रकृति संसर्गगुणसंगाभ्यां देहमात्र महेश्वरो परमात्मा च भवतीत्यर्थः ॥ २२ ॥

अथ विवेकानुसन्धानप्रकारं वक्ष्यन् तत्रात्यादराय तत्फलं प्रथमं दर्शयति–

यः - पुमान् । एवं - उक्तस्वभावम् । प्रकृतिं च । गुणैः - वक्ष्यमाणस्वभावैः सत्त्वादिभिः । वेत्ति - यथावद्विवेकेन जानाति । सः - पुमान् । सर्वथा - देवमनुष्यादि नानाविधदेहसंसर्गप्रयुक्तयोगविरोधिविचित्रक्लेशाविष्टतया । वर्तमानोपि । भूयः - पुनरपि । नाभिजायते - सदसद्योनि सम्बन्धं न प्राप्नोति, किंतु ज्ञानाग्निदग्धकर्मत्वात्तद्देहावसान एवापरिच्छिन्नज्ञानं प्राप्नोतीत्यर्थः ॥ २३ ॥

उक्तमेवार्थं श्लोकद्वयेन वित्रृण्वन्नात्मज्ञानस्य पर्वभेदानाह–

---

**प्रकृति का परिणाम रूप त्रिगुणमय इस शरीर में स्थित जीवात्मा उन-उन शरीरों का प्रकृति के अनुकूल प्रवृत्ति एवं संकल्प का कारण होने से द्रष्टा, संकल्पों का प्रेरक होने से अनुमन्ता और उन शरीरों का धारक होने से भर्ता, जीव के संकल्पानुसार देह इन्द्रियादि के द्वारा किये विभिन्न कर्मों के फलों का भोक्ता है, इसलिये यह जीवात्मा उन शरीरों एवं इन्द्रियों की अपेक्षा श्रेष्ठ वस्तु होने से महेश्वर एवं परमात्मा रूप से कहा जाता है ॥ २२ ॥**

**जो व्यक्ति पूर्वोक्त स्वभाव विशिष्ट जीवात्मा को एवं सत्वादि गुण युक्त प्रकृति को यथार्थ रूप से जानता है । वह सब प्रकार की अवस्थाओं में रहते हुये भी फिर से जन्म ग्रहण नहीं करता है ॥ २३ ॥**





**ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।**
**अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥२४॥**
**अन्ये त्वेवजानन्तः श्रुत्वाऽन्येभ्य उपासते ।**
**तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥२५॥**

---

केचित् - निष्पन्नयोगाः - पुमांसः । आत्मनि - शरीरे । स्थितम् । आत्मानं - परिशुद्धात्मानम् । आत्मना - मनसाकरणेन । ध्यानेन - समाधिना । पश्यन्ति - विशदमनुभवन्ति । अन्ये - अनिष्पन्नयोगाः । सांख्येन - संख्या - ज्ञानं, संख्यैवसांख्यं - तेन । योगेन । आत्मानम् । पश्यन्ति । ज्ञानयोगेन समाधियोग्यम्मनः कृत्वा परिशुद्धात्मानं साक्षात्कुर्वन्तीत्यर्थः । अपरेच - कर्मयोगाधिकारिणस्तु । कर्मयोगेन - असंगकर्मानुष्ठानेन । आत्मानं पश्यन्तीत्यन्वयः । दुष्करज्ञानयोगाधिकारिण स्सुकरोपायसक्ताश्शिष्टा एवान्तर्गतज्ञानेन कर्मयोगेन मनस्समाधियोग्यतामापाद्यात्मानं पश्यन्तीत्यर्थः ॥ २४ ॥

अनिष्पन्नकर्मयोगानाम्मुमुक्षूणां कर्मयोगोपक्रमदशोच्यते–

अन्येतु - कर्मयोगादि ष्वप्यनधिकृताः । एवम् - पूर्वोक्तरीत्या । अजानन्तः - आत्मानं साक्षात्कर्तुमशक्ताश्शिष्टाः । अन्येभ्यः - आत्मतत्त्वदर्शिभ्यः । श्रुत्वा - आत्मश्रवणं कृत्वा । उपासते - आत्मानं ध्यायन्ति । तेपि च, अत्रापिशब्दाभ्यामेषां निकृष्टत्वमन्येषां श्रैष्ठ्यं च सूच्यते । श्रुतिपरायणाः - श्रवणमात्रनिष्ठास्सन्तः । मृत्युं - संसारम् । अतितरन्त्येव - अतीत्य वर्तन्त एव । श्रवणनिष्ठाविध्वस्तपापाः क्रमेणकर्मयोगज्ञानयोगद्वारा समाधियोग्यतामासाद्य मुच्यन्त एवेति भावः ॥२५॥

---

**कोई-कोई सिद्ध योगीजन अपने शरीर में स्थित विशुद्ध आत्मवस्तु को मानसिक ध्यान अथवा बार-बार मानसिक चिन्तन के द्वारा होने वाले अनुभव के द्वारा अर्थात् भक्तियोग समाधि में देखते हैं । अन्य अधिकारी जन सांख्ययोग या ज्ञानयोग के द्वारा और कोई-कोई कर्मयोग के द्वारा उस विशुद्ध आत्मवस्तु का दर्शन करते हैं ॥ २४॥**

**इस प्रकार जो उक्त भक्तियोग, ज्ञानयोग और कर्मयोग में अनधिकारी पुरुष पूर्वोक्त प्रकार से आत्म दर्शन प्राप्त करने में असमर्थ होकर आत्मतत्वदर्शी जनों से आत्मवस्तु का श्रवण करके बार-बार उसका चिन्तन करते हुये उपासना करते हैं । वे श्रवणनिष्ठ अर्थात् सुनने के परायण हुये पुरुष भी आत्मदर्शन करके संसार से मुक्त हो जाते हैं ॥ २५ ॥**

**यावत्संजायते किञ्चित्सत्वं स्थावरजंगमम् ।**
**क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥२६॥**
**समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।**
**विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥२७॥**

---

अथ प्रकृतिसंसृष्टात्मनो विवेकानुसन्धानप्रकारं वक्तुं स्थावरजंगमात्मकस्य प्रपंचस्य चिदचित्संसर्गजन्यत्वमाह—

हे भरतर्षभ ! यावत् । किंचित् - किंचिदपि । स्थावरजंगमम् । सत्त्वं - जन्तुजातम् । संजायते । तत् - सर्वम् । क्षेत्रक्षेत्रज्ञसंयोगादेव विद्धि-अनादिपरस्परसंयुक्तक्षेत्रक्षेत्रज्ञसंयोगजं विद्धि; न तु मातापित्रादि संसर्गदेव कदाचित्संसर्गादेव वा जायत इत्यर्थः ॥ अतो दुर्विवेचतया परस्परविवेकानुसन्धानमुपदेष्टव्यमिति भावः ॥ २६ ॥

सर्वेषु भूतेषु - देवमनुष्यादिरूपेषु । तिष्ठन्तं - मृत्सुवर्णादिघटेषु गंगाजलमिव तत्तद्विविक्ताकारतया स्थितम् ; न तु रुमानिक्षिप्त काष्ठवत्तद्रूपतामापन्नम् । अतएव । समं - ज्ञातृत्वैकाकारतयैकरूपम् । अतएव, परमेश्वरं - तत्तच्छरीराधिष्ठातृतयात्यन्तद्विविक्ताकारम् । तेषु । विनाशं प्राप्नुवत्सु-सत्सु । अविनश्यन्तं - विनाशानर्हस्वभावतया नाशरहितम् । यः । पश्यति - अनुसंदधाति । सः । पश्यति - यथावत्साक्षात्करोति । यस्तु मनुष्यादिदेहवैषम्येनात्मानमपि विषमाकारं जन्मनाशवन्तं चानुसन्दधाति स तु नित्यं संसरतीति भावः ॥ २७ ॥

उक्तसमदर्शनमेव फलद्वारा स्तूयते—

हि - यस्मात्कारणात् । सर्वत्र - देवमनुष्यादिदेहेषु । समवस्थितं - सम्यगवस्थितं, शेषत्वेनाधारतया नियंतृतयाचावस्थितं । ईश्वरं - जीवम् ।

---

**हे भरतवंश में श्रेष्ठ अर्जुन ! जड़चेतनात्मक जितने प्रकार के जीव उत्पन्न होते हैं वे सब क्षेत्र एवं क्षेत्रज्ञ के परस्पर संयोग से उत्पन्न होते हैं, यह जानो। वास्तव में यह सम्पूर्ण जगत् क्षणभंगुर होने से अनित्य है ॥ २६ ॥**

**देव, मनुष्य आदि सम्पूर्ण जीवों में स्थित इसलिये उस देह के परमेश्वररूपी आत्मवस्तु को ज्ञातृत्व गुण विशिष्टरूप में सब शरीरों में समान आकार से एवं उस देह के नष्ट हो जाने पर भी इस आत्मा को अविनाशीरूप से जो देखते हैं वे ही जीवात्मा का यथार्थरूप से दर्शन कर पाते हैं ॥ २७ ॥**





**समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ।**
**न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥२८॥**
**प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।**
**यः पश्यति तथात्मानमकर्तारं स पश्यति ॥२९॥**

---

समम् - ज्ञातृत्वैकाकारतया एकरूपम् । पश्यन् । आत्मना - मनसा । आत्मानं - स्वात्मानम् । न हिनस्ति - संसारार्णवेनिक्षिप्य न निहन्ति, किंतु संसारसागरादुत्तार्योज्जीवयतीत्यर्थः । तदेवाह (ततइति) ततः - ज्ञातृत्वैकाकारतया सर्वत्र समत्वदर्शनात् । परां - उत्कृष्टाम् । गतिं - गम्यत इति-गतिः प्राप्यं, तां - परिशुद्धस्वरूपमात्मानम् । याति - प्राप्नोति । अनेन-स्वस्वाकारयथावददर्शन द्वारा बन्धहेतुत्वमोक्षहेतुत्वाभ्यां विवेक उक्तो भवति ॥ २८ ॥

अथैतयो स्साक्षात्क्रियाश्रयत्व तदभावाभ्यां विवेकमाह—

यः - योगी । सर्वशः कर्माणि - सर्वप्रकाराणि कर्माणि । प्रकृत्यैव च । क्रियमाणानीति । पश्यति - 'कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यत' इति पूर्वोक्तरीत्या प्रकृतिक्रियमाणतयाऽनुसन्धत्ते । तथा । आत्मानम् । अकर्तारं - ज्ञानैकाकारतया उदासीनम् । यः पश्यति । तस्य प्रकृति संसर्ग तदधिष्ठान-सुखाद्यनुभवादिकं च कर्मरूपाविद्याकृत मित्यपि पश्यतीति बोध्यम् । सः । पश्यति - यथावस्थितमात्मानं जानातीत्यर्थः ॥ २९ ॥

---

**क्योंकि उक्त समदर्शी पुरुष देव मनुष्य आदिक सब देहों में सम्यक् रूप से अर्थात् नियन्तारूप से स्थित उस शरीर मात्र के ईश्वर जीवात्मा को ज्ञातृत्व गुण विशिष्ट रूप से समान रूप से अनुभव करता हुआ, अपने मन से उस आत्मवस्तु के प्रति हिंसा नहीं करता, अर्थात् उस आत्मा की अवनति का कारण न होकर उन्नति का साधन बनता है, इसी से वह उत्कृष्टगति को प्राप्त होता है अर्थात् विशुद्ध आत्मवस्तु को प्राप्त होता है ॥ २८ ॥**

**सब प्रकार के कर्म प्रकृति के द्वारा ही किये जाते हैं, इस प्रकार जो देखते हैं एवं विशुद्ध आत्मवस्तु ज्ञानाकार है अतएव कर्मों का कर्ता नहीं है, किन्तु जीवदशा में प्रकृति से संयुक्त होकर अज्ञान का हेतु सुख दुःख अनुभव जन्य सत्वादि गुणों के द्वारा चलायमान होकर कर्म करता है इस प्रकार जो जानते हैं वे ही आत्म स्वरूप को यथार्थरूप से जानते हैं ॥ २९ ॥**

**यदा भूतपृथग्भावमेकस्थमनुपश्यति ।**
**तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥३०॥**
**अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः ।**
**शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥३१॥**

---

अथैतयोः परिणामित्वापरिणामित्वाभ्यां विवेकं दर्शयति—

यदा - यस्मिन्काले । भूतपृथग्भावं - भूतेषु - तिलतैलवद्दारुवह्निवद्दुर्विवे च प्रकृतिपुरुषद्वयात्मकेषु देवमनुष्यादिषु, पृथग्भावं - देवोऽहम्मनुष्योऽहं स्थूलोऽहं कृशोऽहमित्याद्यनुभूयमानं जातिगुणादिरूपं भेदम् । एकस्थं - प्रकृतिमात्रनिष्ठम्, नत्वात्मनिष्ठम् । तत एव च प्रकृतित एव च । विस्तारं - पुत्रपौत्रादिवृद्धिं च । पश्यति । यद्यपि - आत्मावैपुत्रनामासीत्यात्मन एव पुत्रादिरूपेणपरिणामः श्रूयते, तथापि अंगादंगात्सम्भवतीति मन्त्रलिंगात्पित्रादिशरीरात्पुत्रादिशरीरोत्पत्ति र्निर्णीयत इति भावः । तदा - तस्मिन्काले । ब्रह्म - अपरिच्छिन्नज्ञानरूपमात्मानम् । सम्पद्यते - प्राप्नोति । मत्समानाकारो भवतीत्यर्थः ॥ ३० ॥

पूर्वोक्तेष्वात्मनो नित्यत्वाकर्तृत्वापरिणामित्वेषु हेतुमाह—

हे कौन्तेय ! अयम् । परमात्मा - शरीरान्निष्कृष्य स्वस्वभावेन निरूपितः प्रत्यगात्मा । शरीरस्थोऽपि । अनादित्वात् - आरम्भकद्रव्यशून्यत्वात् । अव्ययः - नाशरहितः । आरभ्यमाणमेव हि नश्यति, आत्मात्वनारभ्यमाणत्वान्ननश्यतीति भावः । निर्गुणत्वात् - सत्त्वादिगुणरहितत्वात् । न करोति - कर्ता न भवति । तस्मात् । नलिप्यते - देवादिदेहस्वभावैः, लिप्तः वासितो न भवति ॥ ३१ ॥

---

**और जो प्रकृति एवं पुरुष से संयुक्त विभिन्न देव, मनुष्यादि जीवों के जो भिन्न-भिन्न जाति गुण रूप से भेदभाव एकमात्र प्रकृति से पैदा हुए जिस समय देखते हैं और इस प्रकृति से ही इन भेदों का विस्तार हुआ है यह जानते हैं, वे ही उस समय ब्रह्म वस्तु को प्राप्त होते हैं अर्थात् अपरिच्छिन्न ज्ञानाकार विशुद्ध आत्मवस्तु को प्राप्त होते हैं ॥ ३० ॥**

**हे अर्जुन ! शरीर का नियन्ता यह विशुद्ध आत्मा शरीर में स्थित होता हुआ भी इसका न आदि है और न अन्त ही है अतएव यह अव्यय है । प्राकृत गुणों से रहित होने के कारण यह किसी भी कर्म का कर्ता भी नहीं होता है और इसीलिए यह आत्मा शरीर सम्बन्धी कर्मों से लिपायमान नहीं होता है ॥ ३१ ॥**





**यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।**
**सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥३२॥**
**यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।**
**क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥३३॥**

---

ननु नित्यं कश्मलशरीरसंयुक्तो विविक्तात्मा रुमानिक्षिप्तकाष्ठवत्संसर्गस्वभावैः किमिति न लिप्यते,किंच "यं प्राप्याति पवित्राणि वस्त्राण्याभरणानि च । अशुचित्वं क्षणाद्यान्ति कोऽन्योऽशुचितमस्ततः" इत्यभियुक्तोक्तरीत्या क्षणमात्रेणाशुचित्वापादकस्य शरीरस्य नित्ययोगेऽपि कथं नलिप्यते ? तत्राह—

सर्वगतं - अनन्तविचित्र स्वभाव नानावस्तुसंसर्गमपि । आकाशम् । सौक्ष्म्यात् - सूक्ष्मत्वात् ; आत्मनो ऽसंगस्वभावत्वादिति यावत् । यथा । नोपलिप्यते - तत्स्वभावोपरक्तं न भवतीत्यर्थः । तथा । सर्वत्र । देहे - देवमनुष्यादिदेहेषु । अवस्थितोपि । आत्मा । नोपलिप्यते - परिशुद्धतया - आकाशादप्यतिसूक्ष्मतया देहस्वाभावैर्नोप लिप्यत इतिभावः ॥ ३२ ॥

अथाध्यायादावेवोक्तं क्षेत्रक्षेत्रज्ञयो र्वेद्यत्ववेदितृत्वादिभेदं सदृष्टान्तं विशदं वदन्नुपसंहरति---

हे भारत ! एकः । रविः । कृत्स्नम् । विचित्रभेदभिन्नम् । इमम् । लोकम् । प्रकाशयति - स्वप्रभया विशदीकरोति । तथा - क्षेत्री - क्षेत्रज्ञोपि । कृत्स्नं - क्षेत्रं - नानाविधं शरीरम् । प्रकशयति । बहिरंतश्च स्वज्ञानव्याप्त्या विशदीकरोति । अतः प्रकाश्याल्लोकात्प्रकाशयिताऽऽदित्य इव वेद्यात्क्षेत्राद्वेदिता प्यन्यति भावः ॥ ३३ ॥

अथैतदध्यायप्रधानप्रतिपाद्य हेयोपादेयविज्ञानस्य फलमाह---

एवं - उक्तप्रकारेण । क्षेत्रक्षेत्रज्ञोः । अन्तरं - भेदम् । भूतप्रकृति-

---

**जैसे आकाश सम्पूर्ण द्रव्यों से संयुक्त होता हुआ भी सूक्ष्मवस्तु होने के कारण उन उन वस्तुओं के स्वभाव से संश्लिष्ट नहीं होता है, उसी प्रकार देव मनुष्य आदिक सम्पूर्ण जीवों के शरीर में स्थित होता हुआ भी विशुद्ध आत्मवस्तु अत्यन्त सूक्ष्म होने से उन उन शरीरों के स्वभाव से लिपायमान नहीं होता है ॥ ३२ ॥**

**हे अर्जुन ! एक सूर्य जैसे अपनी प्रभा द्वारा इस समस्त जगत् को प्रकाशित करता है, उसी प्रकार क्षेत्रज्ञ आत्मा सम्पूर्ण जीवों की देहों को ज्ञान द्वारा प्रकाशित करता है अर्थात् जीवित करके रहता है ॥ ३३ ॥**

**क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।**
**भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥३४॥**

॥ इति श्रीमद्भगवद्गीतायां त्रयोदशोऽध्यायः ॥ १३ ॥

---

लोकं च - भूतानां - अचित्संसृष्टजीवानाम्, प्रकृतिः - प्रकृति परिणामभूतं शरीरम् । मोक्ष्यते - त्यज्यते - अनेनेति - भूतप्रकृतिमोक्षः - अमानित्वादि साधनवर्गं इति यावत्, तम् । ज्ञानचक्षुषा - ज्ञानं विवेकरूपं, तदेव - चक्षुः, तेन - येविदुः यथावज्जानन्ति । ते परं - परिशुद्धात्मानम् । यांति - प्राप्नुवन्ति । उक्तेनक्षेत्रक्षेत्रज्ञविवेकेनामानित्वादिसाधनसम्पत्त्या च विगतबन्धाः परिशुद्धात्मानं प्राप्नुवन्तीत्यर्थः ॥ ३४ ॥

इति श्रीमद्भगवद्गीताभाष्यार्थसंग्रहतात्पर्यदीपे श्रीवरवरमुनिविरचितायां
बालबोधिन्यपराभिधानायां गीतार्थ-
संग्रहदीपिकायां

त्रयोदशोऽध्यायः ॥ १३ ॥

સમરીતિર્દાતેજાઃ પરકૃષ્ણ સનાતનઃ।
જયતાજ્જાનકીનાથો વેદવેદ્યો મહામતિઃ ॥
ankurnagpal108@gmail.com

---

**जो इस प्रकार क्षेत्र अर्थात् शरीर एवं क्षेत्रज्ञ अर्थात् जीवात्मा के विभिन्न प्रकार के भेदों को अपनी बुद्धि से विचार कर उनके यथार्थ स्वरूप के ज्ञान में दृढ़ हो जाते हैं और प्राकृत पाञ्चभौतिक शरीर में हेयबुद्धि करके उसमें आसक्ति रहित होते हैं एवं मोक्ष के साधन अमानित्व अदम्भित्व आदि गुण उपादेय हैं यह जानकर उसके अनुसार आचरण करते हैं वे संसार बन्धन से मुक्त हो विशुद्ध परमात्मा को प्राप्त करते हैं ॥ ३४ ॥**

**॥ श्रीमद् भगवद्गीता के हिन्दी अनुवाद का क्षेत्रज्ञ विभागयोग नामक त्रयोदश अध्याय समाप्त हुआ ॥**



**श्रीरस्तु ।**

**गुणत्रय विभाग योग नाम**

# अथ चतुर्दशोऽध्यायः

श्रीभगवानुवाच—

**परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।**
**यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १ ॥**

---

पूर्वं त्रयोदशाध्याये तिलतैलवत्परस्परं संसृष्टयोः प्रकृतिपुरुषयो स्स्वरूपयाथात्म्यं विज्ञाय भगवद्भक्त्यनुगृहीतामानित्वादिसाधनवर्गेण बन्धान्मुच्यते, पूर्वपूर्वसत्त्वादिगुणकार्यसुखादिसंगेन न बध्यत इति चोक्तम् । इदानीं चतुर्दशाध्याये गुणानां बन्धहेतुत्वप्रकारं गुणनिवर्तनप्रकारं च प्रपंचयिष्यन् भगवानुवाच ।

परं - पूर्वोक्तादन्यत् । ज्ञानानां - प्रकृतिविषयाणामेव ज्ञानानान्मध्ये ।

---

## चतुर्दश अध्याय

**इस अध्याय का सार संग्रह—**

**गुणबन्ध विधा तेषां कर्तृत्वं तन्निवर्तनम् ।**
**गतित्रयस्वमूलत्वम् चतुर्दश उदीर्यते ॥**

**( गीतार्थ संग्रह १८ )**

**सत्व रज तम इन तीन गुणों के वश में होकर इस जीव को संसार के बन्धन में आना पड़ता है । ये तीन गुण ही सम्पूर्ण कर्मों के कर्ता हैं । इन गुणों से उद्धार पाने का उपाय । स्वर्गादि ऐश्वर्य की प्राप्ति, आत्मदर्शन एवं भगवत् प्राप्ति इन तीन प्राप्तव्य वस्तुओं का ईश्वर ही उपाय है । ये चार बातें इस चौदहवें अध्याय में वर्णित हैं ।**

**श्रीभगवान् बोले—**

**पूर्वोक्त प्रकृति विषयक ज्ञानों में से परमश्रेष्ठ ज्ञान की बात फिर से तुमको बताता हूं, जिसे जानकर मननशील ज्ञानीजन इस संसार बन्धन से मुक्त होकर विशुद्ध आत्मवस्तु की प्राप्तिरूप परमसिद्धि प्राप्तकर चुके हैं ॥ १ ॥**

**इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।**
**सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ २ ॥**
**मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।**
**संभवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥**

---

उत्तमं - श्रेष्ठम् । ज्ञानं - प्रकृतिगुणसत्त्वादिविषयमेवज्ञानम् । भूयः - पुनरपि । प्रवक्ष्यामि - प्रकर्षेण कथयिष्यामि । यत् - ज्ञानम् । ज्ञात्वा - सविशेषं विज्ञाय । मुनयः - तन्मननशीलः । सर्वेज्ञानिनः । इतः - अस्मात्संसारमण्डलात् । परां - उत्तमाम् । सिद्धिं परिशुद्धात्मप्राप्तिरूपाम् । गताः - प्राप्ताः ॥ १ ॥

पुनरपि तदेवज्ञानं - विशिनष्टि । (इदमिति)

इदं - वक्ष्यमाणम् । ज्ञानम् । उपाश्रित्य - साधनतयाऽवलम्ब्य मम । साधर्म्यं - अकर्म्यवश्यत्वादिना साम्यम् । आगताः - पुमांसः । सर्गेपि - सृष्टिकालेपि । नोपजायन्ते - ब्रह्मादिषूत्पद्यमानेष्वपि नोत्पद्यंत इत्यर्थः । प्रलयेपि - ब्रह्मादीनां प्रलये । न व्यथन्ति - प्रलयदुःखं नानुभवन्ति ॥ २ ॥

अथ सत्त्वादीनां बन्धहेतुत्वं वक्तुं कृत्स्नस्य स्थावरजंगमात्मकस्य प्रपंचस्य प्रकृतिसंसर्गजन्यत्वं स्वेनैव कृतमित्याह ।

हे भारत ! योनिः - 'भूमिराप' इत्यादिना 'अपरेयमितस्त्वन्या' मित्यन्तेनोक्तं जगत्प्रकृतिभूतम् । महत् - अपरिच्छिन्नम् । ब्रह्म - महदादि कार्यबृहणम्, तत्प्रादुर्भावकारणम् । मम - मत्सम्बन्धि, मच्छेषभूतमित्यर्थः ।

---

**हे अर्जुन ! इस ज्ञान का आश्रय ग्रहण करके अर्थात् इसे धारण करके जो पुरुष मेरे समान अकर्मवश्यत्व (यानी कर्मों के वशीभूत न होना) आदिक गुणों के द्वारा मेरी समानता प्राप्त करते हैं वे सृष्टिकाल में ब्रह्मा आदि की उत्पत्ति होने पर भी वे उत्पन्न नहीं होते हैं तथा प्रलयकाल में उन देवों के नष्ट होने पर भी वे नष्ट नहीं होते अर्थात् नाश से होने वाले दुःख का अनुभव नहीं करते अर्थात् वे बार-बार जन्म-मरण से मुक्त हो जाते हैं ॥ २ ॥**

**हे भरतवंशश्रेष्ठ ! जगत् की उत्पत्ति स्थल यह महद्ब्रह्म रूप मूलप्रकृति नामक मेरी अचित् रूप अपरा प्रकृति में मैं अपनी पराप्रकृति रूप जो चेतन समष्टि रूप बीज प्रदान करता हूँ। मेरे द्वारा किये गये इस चित् और अचित् वस्तु के संसर्ग से ब्रह्मा से लेकर स्तम्ब पर्यन्त समस्त जीवों की उत्पत्ति होती है ॥ ३ ॥**





**सर्वयोनिषु कौन्तेय मूर्तयः सम्भवन्ति याः ।**
**तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४ ॥**
**सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ।**
**निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ५ ॥**

---

तस्मिन् - भोगक्षेत्रे प्रधाने । अहं । गर्भं - ब्रह्मादिप्राणिवर्गबीजभूतं भोक्तृपुञ्जरूपं गर्भम् । दधामि - निक्षिपामि, भोगक्षेत्रभूतयाऽचेतनप्रकृत्या सह भोक्तृपुञ्जरूपां चेतनप्रकृतिं संयोजयामीत्यर्थः । ततः - चेतनाचेतनसंसर्गात् । सर्वभूतानां - ब्रह्मादिस्तम्बपर्यन्तानां प्राणिनाम् । सम्भवः - उत्पत्तिः । भवति ॥ ३ ॥

कारणावस्थचिदचित्प्रकृतिद्वयसंसर्गस्य स्वकृतत्वमुक्त्वा कार्यावस्थचिदचित्प्रकृतिद्वयसंसर्गस्यापि स्वकृतत्वमाह ।

हे कौन्तेय ! सर्वयोनिषु - देवयक्षराक्षसमनुष्यपशुपक्षिसरीसृपादियोनिषु । याः । मूर्तयः - कार्यभूततत्तद्व्यक्तयः । सम्भवन्ति जायन्ते । तासां - मूर्तीनाम् । महत् - महदादिपृथिव्यन्तपरिणतम् । ब्रह्म प्रकृतिः । योनिः - मातृस्थानीयकारणम् । अहं - सर्वज्ञः । बीजप्रदः - तत्तत्कर्मानुगुण्येन जनिष्यमाणभोक्तृवर्गरूपगर्भाधानहेतुः । पिता - जनकः ॥ ४ ॥

एवं प्राचीनकर्मवशात्सर्गादौ सत्त्वादिगुणसंसर्गेण देवादियोनिषु जातानां भूतानां पुनः पुनर्देवादिभावेन जन्महेतुमाह—

हे महाबाहो-महान्तौ-प्रकृतिगुणायत्तबन्धनिबन्धनायोधनसमर्थौ, बाहू

---

**(अचित् एवं चित् (जीव) को ईश्वर की अपरा और परा दो प्रकृति कहा गया है। इन प्रकृतिद्वय-विशिष्ट होकर ईश्वर जगत् की सृष्टि करते हैं। इसलिये यहाँ गर्भशब्द से बीजरूपी चेतन वस्तु को बताया गया है)।**

**हे कुन्तीपुत्र अर्जुन ! देव, मनुष्य, पशु, पक्षी आदिक सम्पूर्ण योनियों में जो समस्त प्राकृत शरीर उत्पन्न होते हैं, उन सब देहों का उत्पन्न करने वाला 'महद्ब्रह्म' अर्थात् मूलप्रकृति मातारूप से है एवं मैं उन-उन अचेतन देहों में जीवों के अपने कर्मानुसार फलों के भोक्ता जीवात्मा रूपबीज को (चित् को) प्रदान करता हूं इसलिए मैं जीवों का पिता हूं ॥ ४ ॥**

**हे महाबाहु अर्जुन ! सत्व, रज, तम ये तीन गुण प्रकृति से पैदा होकर अविनाशी होने पर भी बार-बार देव मनुष्य आदिक शरीरों के उत्पन्न करने में कारण होते हैं। अर्थात् जीवात्मा को शरीर में बाँधकर रखते हैं ॥ ५ ॥**

**तत्र सत्वं निर्मलत्वात् प्रकाशकमनामयम् ।**
**सुखसंगेन बध्नाति ज्ञानसंगेन चानघ ॥ ६ ॥**

यस्येति प्रकृतिगुणैर्युध्यमानपुरुषबन्धे निदर्शनतया सम्बोधनम्। रजस्तम- इति। गुणाः - पृथिव्यादीनां गन्धादय इव प्रकृत्याख्यद्रव्यस्वरूपानुबन्धिनः स्वभावविशेषाः। प्रकृतिसम्भवाः - प्रकृतितः स भवन्ति - महदादिष्वाविर्भ- वन्तीति तथाभूतास्सन्तः। पृथिवीतः पुष्पादिषु गन्धादय इवेति भावः। अव्ययम् - स्वभावतो न विद्यते - व्ययः - सत्वादिकृतज्ञानसंकोचः - यस्य तं। तथापि - देहे - वर्तमानम्। देहिनं - महदादिपृथिव्यन्ततत्त्वारब्धदेह- सन्ततिमन्तं पुरुषम्। निवध्नन्ति - पुनः पुनर्देवमनुष्यादिरूपेणोत्पादयन्ती- त्यर्थः ॥ ५ ॥

सत्त्वादीनां निबन्धनप्रकारमेवाह - (तत्रेति)।

तत्र - सत्त्वरजस्तमसाम्मध्ये। सत्त्वम् - सत्त्वगुणः। निर्मलत्वात् - प्रकाशविरोधितमस्स्वभावरूपमलरहितत्वात्, प्रकाशमात्र जननस्वभावत्वा- दिति यावत्। प्रकाशकं - वक्ष्यमाणरीत्या प्रकाशसुखहेतुभूतमित्यर्थः। अनामयं - न विद्यते, आमयः - कार्यभूतोव्याधिः, यस्य तत्। रजस्तमसी- व्याधिहेतु इदं त्वारोग्यहेतुरित्यर्थः। हे अनघ - न विद्यते, अघं - पापरूप- बन्धहेतुसुखसंगः, यस्य तथाभूतः 'किं नो राज्येन गोविन्द किं भोगै' रित्युक्तेः सुखसंगरहितेति भावः। सुखसंगेन सुखासक्त्या। ज्ञानसंगेन च ज्ञाना- सक्त्या च । बध्नाति. देहिनमित्यत्राप्यनुषज्यते। सत्त्वं पूर्वकर्मानुगुण्येन पुरुषस्य सुखासक्तिं ज्ञानासक्तिं च जनयति। सुखज्ञानसंगेजाते तत्साधनेषु लौकिकवैदिककर्मसु प्रवर्तते, पुनस्तत्फलानुभावार्थं योनिसम्बन्ध इति वीजां- कुरवदनादिरयम्बन्धः सुख ज्ञानसंगद्वारेण सत्त्वसाध्य इति भावः। अनेन ज्ञानसुखजनकं सत्त्वमित्युक्तं भवति ॥ ६ ॥

हे कौन्तेय ! रजः - रजोगुणः। रागात्मकं - रागः - योषित्पुरुषयो रन्योन्यस्पृहा, तदात्मकं - तद्धेतुभूतम्। तृष्णासंगसमुद्भवं - तृष्णाशब्दादि-

**अब सत्वादि गुणत्रय का स्वरूप एवं किस प्रकार वे बन्धन करते हैं — यह बताते हैं —**

**हे पाप रहित अर्जुन ! इन तीनों गुणों में सत्वगुण निर्मल स्वभाव का होने के कारण प्रकाशक अर्थात् ज्ञान स्वभाव वाला एवं व्याधिरहित है। जीवों को सुख के प्रति तथा ज्ञान के प्रति आसक्ति कराके उनका बन्धन करके रखता है ॥ ६ ॥**





**रजो रागात्मकं विद्धि तृष्णासंगसमुद्भवम् ।**
**तन्निबध्नाति कौन्तेय कर्मसंगेन देहिनम् ॥ ७ ॥**
**तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।**
**प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८ ॥**

सकलविषयस्पृहा, संगः - पुत्रमित्रादिसम्बन्धिषु संश्लेषस्पृहा, तयोः - समु- द्भवं - उत्पत्तिस्थानम्। विद्धि - जानीहि। तत् - रजः। कर्मसंगेन - तद्धे- तुभूतक्रियासु स्पृहा जननद्वारेण। देहिनं निबध्नाति। विषयस्पृहया तद्धेतु- भूतक्रियास्पृहातया तदनुष्ठानम्, तत्फलानुभावार्थं पुनःपुनः योनिसम्बन्ध इति कर्मसंगद्वारेण रजोबन्धहेतुरित्यर्थः ॥ ७ ॥

तमस्तु - तमोगुणस्तु। अत्र तु शब्देन पूर्वोक्तगुणद्वयापेक्षयाऽस्यात्यन्त- परिहरणीयत्वमुच्यते। अज्ञानजं - अज्ञानं - वस्तुतत्त्वज्ञान व्यतिरिक्तं विप- रीतज्ञानं, तस्माज्जातं, वस्तुविपरीतज्ञानजन्यपापानुष्ठानकार्यमित्यर्थः। सर्व- देहिनां - ब्रह्मादिप्राणिनाम्। मोहनं - विपरीतज्ञानजनकं च । विद्धि। हे भारत ! तत् - तमः। प्रमादालस्य निद्राभिः - प्रमादः - अनवधानता, विहितादन्यत्र प्रवृत्तिरिति यावत्; आलस्यं - विहितेषु यथाकालमप्रवृत्तिः; निद्रा - इन्द्रियप्रवर्तनश्रान्तस्य पुरुषस्य सकलेन्द्रियव्यापारोपरतिः ; तत्र बाह्येन्द्रिय व्यापारोपरतिस्स्वप्नः, मनसोपि व्यापारोपरति स्सुषुप्तिरिति विवेकः ; ताभिः। देहिनम्। निबध्नाति। पूर्वपूर्वविपरीतज्ञानेन पापानु- ष्ठानं - तेन तमः - इत्यादिप्रकारेण बन्धकं तम इत्यर्थः ॥ ८ ॥

**हे अर्जुन ! रजोगुण अनुरागरूपी है, यह तृष्णा अर्थात् विषयों के प्रति लालसा और सङ्ग अर्थात् पुत्र मित्रादि के प्रति आसक्ति से होने वाले संग इन दो का कारण है। वही रजोगुण अपने-अपने विषयों के प्रति स्पृहानुसार कर्मों के प्रति आ- सक्ति पैदाकर जीवात्मा को बाँधता है। अर्थात् रजोगुण सांसारिक विषयों में अनु- राग एवं आसक्ति के कारण तदनुसार पुण्यपापात्मक कर्म कराकर उनके फल भोग के लिए बार-बार विभिन्न जीवों को विभिन्न योनियों में जन्म करता है ॥ ७ ।**

**हे अर्जुन ! किन्तु तमोगुण तो अज्ञान से उत्पन्न होता है, अर्थात् किसी भी वस्तु का यथार्थ ज्ञान का अभाव एवं विपरीत ज्ञान (अज्ञान) से पापयुक्त कार्य का अनुष्ठान इससे होता है। तमोगुण का कार्य है विपरीत ज्ञान, जिससे तमोगुणी पुरुष प्रमाद (भ्रम) आलस्य एवं अधिक निद्रा युक्त हो जाता है। जिससे वह प्राणी अकृत्यकरण, कृत्य अकरण रूप पाप से बार-बार पाप योनियों में जन्म लेता है ॥ ८**

**सत्त्वं सुखे संजयति रजः कर्मणि भारत ।**
**ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत ॥ ९ ॥**
**रजस्तमश्चाभिभूयस्सत्त्वं भवति भारत ।**
**रजस्सत्त्वं तमश्चैव तमस्सत्त्वं रजस्तथा ॥१०॥**

---

बन्धहेतुत्वे सत्त्वादीनां प्रधानव्यापारानाह—

हे भारत ! सत्त्वं - सत्त्वगुणः । सुखे संजयति - दुःखशोकादि हेतुसत्त्वेपि तदभिभवेन सुखे तद्धेतुज्ञाने च संश्लेषयतीत्यर्थः । रजः - रजोगुणः । कर्मणि । सुखदुःखादिहेतुसत्त्वेपि तदभिभवेन रागतृष्णादिद्वाराऽभिमतहेतुकर्मण्येव संश्लेषयतीत्यर्थः । तमस्तु - तमोगुणस्तु । ज्ञानं - वस्तुयाथात्म्यज्ञानम् । आवृत्य - आच्छाद्य प्रमाद उत । संजयति । विपरीतज्ञानजननद्वारा कर्तव्यविपरीतव्यापारेपि संगं जनयतीत्यर्थः । उत शब्दादालस्यादावपीत्यर्थ ॥ ९ ॥

ननु देहाकारपरिणतायाः प्रकृतेस्स्वरूपानुबन्धिन स्सत्त्वादयो गुणाः कथमेवं परस्परविरुद्धकार्यकरा भवन्तीत्यत्राह (रजइति)

हे भारत ! सत्त्वं - सत्त्वगुणः । रजः - रजोगुणम् । तमश्च - तमोगुणं च । अभिभूय - तिरस्कृत्य । भवति उद्भवति । यथा वातपित्त कफानाम्मध्ये तत्तदुद्रेककराहारसेवातस्तत्तत्कर्मानुगुण्येन चैकैकस्योद्भवः इतरयोस्त्वभिभवः, तथा सात्त्विकाहारसेवया कर्मानुगुण्येन च कदाचित्सत्त्वस्यैवोद्भवः - इतरयोस्त्वभिभवश्चेत्यर्थः । एवमुत्तरयोरपि द्रष्टव्यम् । तथा । रजः - रजोगुणः । सत्त्वं - सत्त्वगुणम् । तमश्चैव । अभिभूय । भवति - उद्भवति । तमः - तमोगुणः । सत्त्वं - सत्त्वगुणम् । रजः - रजोगुणं च । अभिभूय । भवतीत्यन्वयः ॥ १० ॥

---

**हे अर्जुन ! सत्वगुण प्रधान रूप से ज्ञान और सुख को पैदा करने वाला होता है । रजोगुण अनुराग एवं तृष्णा उत्पन्न कर कर्मों में आसक्त करता है । किन्तु तमोगुण किसी वस्तु के यथार्थ ज्ञान को ढककर विपरीत ज्ञान की उत्पत्ति करके प्रमाद, आलस्य, निद्रा आदि को उत्पन्न करता है ।। ९ ।।**

**हे अर्जुन ! सत्वगुण, रज एवं तमोगुण को दबाकर बढ़ता है । उसी प्रकार रजोगुण, सत्व एवं तमोगुण को दबाकर बढ़ता है । जैसे ही सत्व एवं रजोगुण को दबाकर तमोगुण का बढ़ावा होता है ।। १० ।।**





**सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते ।**
**ज्ञानं यदा तदा विद्याद्विवृद्धं सत्वमित्युत ॥११॥**
**लोभः प्रवृत्तिरारम्भः कर्मणामशमस्स्पृहा ।**
**रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥१२॥**

---

एतच्च यथानुभवं कार्योपलब्धेरेवावगच्छतीत्याह—

अस्मिन् - आत्मनो भोगायतने । देहे । सर्वद्वारेषु - सर्वेष्वपि द्वारेषु श्रोत्रादिषु । ज्ञानं - शब्दादिज्ञानात्मकः । प्रकाशः । यदा - यस्मिन् काले । उपजायते - उत्पद्यते । तदोत - तस्मिन् कालेपि । सत्त्वं सत्वगुणः । विवृद्धः । इति विद्यात् - प्रकाशलिंगेन सत्त्वोद्भवं जानीयात् । उतशब्देन - सुखेनापि जानीयादित्यर्थः । अतस्सुखप्रकाशादिकार्यमपि तद्वृद्धिदशायामेवेति भावः ॥ ११ ॥

हे भरतर्षभ ! रजसि - रजोगुणे । विवृद्धे - उद्भूते सति । लोभः - स्वकीयद्रव्यस्यात्यागशीलता । प्रवृत्तिः - प्रयोजनमनुद्दिश्यापि च पलस्वभावता । कर्मणां - फलसाधनभूतानां कर्मणाम् । आरम्भः - उपक्रमः । अशमः - इन्द्रियाणामनुपरमः, इदं कृत्वेदमिदं करिष्यामीत्यादिसंकल्पविकल्पानुपरमः । स्पृहा - विषयेच्छा । इत्येतानि कार्याणि जायन्ते । यदा लोभादयो जायन्ते - तदा रजः प्रवृद्धमिति जानीयादित्यर्थः ॥ १२ ॥

हे कुरुनन्दन ! अप्रकाशः - विषयेज्ञानानुदयः । अप्रवृत्तिः - स्तब्धता । प्रमादः - अकार्यप्रवृत्तिहेतुश्चित्तैकाग्रत्वाभावः । मोहएव च विपरीतज्ञानं च । इत्येतानि । तमसि विवृद्धे जायन्ते । एभिस्तु तमोवृद्धिं जानीयादित्यर्थः । वातादिव्याधीना मुल्वणतामिव सांसारिकगुणत्रयस्योल्वणतां तत्तत्कार्यविशेषोद्भवेन ज्ञात्वा चिकित्सां कुर्यादितितात्पर्यम् ॥ १३ ॥

---

**जब चक्षु आदिक समस्त ज्ञानेन्द्रियों के द्वारा किसी वस्तु के यथार्थ (वास्तविक) स्वरूप का प्रकाश होकर ज्ञान उत्पन्न हो तब इस शरीर में सत्वगुण बढ़ा है ऐसा जानना चाहिये ।। ११ ।।**

**हे भरतवंश में श्रेष्ठ अर्जुन ! रजोगुण के प्रवृद्ध अर्थात् बढ़ने पर लोभ, विषयों के भोगने की इच्छा, उन भोग्यविषयों की प्राप्ति के लिए कर्म में प्रवृत्ति, इसके बाद इस प्रकार के कर्म का आरम्भ एवं तदनुरूप लगातार इन्द्रियों का व्यापार, उद्योग आदि लक्षण उत्पन्न होते हैं ।। १२ ।।**

**अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।**
**तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥१३॥**
**यदा सत्वे प्रवृद्धे तु प्रलयं याति देहभृत ।**
**तदोत्तमविदाँल्लोकानमलान् प्रतिपद्यते ॥१४॥**
**रजसि प्रलयं गत्वा कर्मसंगिषु जायते ।**
**तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥१५॥**

---

अन्त्यकाले रजस्तमस्समुद्भवहेतूनामाहारादीनां परिहारार्थमन्त्यकाले प्रवृद्धानां गुणानां पृथक्फलान्याह—

यदा - यस्मिन्काले । देहभृत - चेतनः । सत्वेतु - सत्त्वगुणेतु । प्रवृद्धे - उल्वणेसति । प्रलयं - देहनिवृत्तिरूपम्मरणम् । याति - प्राप्नोति । तदा - तस्मिन्काले । अमलान् - परिशुद्धान् । उत्तमविदां - सर्वोत्तरात्मतत्त्वविदाम् । लोकान् - समूहान् । प्रतिपद्यते - प्राप्नोति । यदा सत्त्वं प्रवृद्धं भवति - तदैव जीवोम्रियते चेत् - आत्मयाथात्म्यविदायतनेषु जनित्वाऽऽत्मयाथात्म्यज्ञानसाधने परमपुण्येऽधिकारी भवतीत्युक्तं भवति ॥ १४ ॥

अत्र श्लोके प्रवृद्ध इति पदे पूर्वश्लोकादनुवर्तते । रजसि - रजोगुणे । प्रवृद्धेसति । प्रलयं - मरणम् । गत्वा - प्राप्य । कर्मसंगिषु - फलसंगेन कर्म कुर्वत्सु । जायते । यदा रजः प्रवृद्धं - तदा मृतः काम्यकृदायतनेषु जनित्वा काम्यकर्मस्वेवाधिकारीभवतीत्युक्तं भवति । तथा । तमसि - तमोगुणे ।

---

हे अर्जुन ! तमोगुण के बढ़ने पर अज्ञान उसके कारण करनेयोग्य कार्यों में प्रमाद (भ्रम) एवं मोह (विपरीत ज्ञान) उत्पन्न होता है । १३ ॥

सत्वगुण के बढ़ने पर जीवात्मा देहत्याग करता है तो उस शरीर त्याग के बाद वह आत्मतत्व जानने वाले जनों के विशुद्ध कुल में जन्म लेकर फल की अभिलाषा न रखते हुये मेरे आराधन रूप पुण्यकर्मों का अधिकारी होता है ॥ १४ ॥

रजोगुण के प्रबल होने के समय मृत्यु होने पर वह रजोगुणी जीव काम्यकर्मों में आसक्त एवं अनुरत लोगों के कुल में जन्म लेते हैं एवं इसी कारण स्वर्गादि फलों की प्राप्ति के उपाय स्वरूप अनेक प्रकार के काम्य कर्म करने के अधिकारी होते हैं। इसी प्रकार तमोगुण बढ़ने पर यदि देह त्याग हो तो वह जीव कुत्ता, शूकर आदि ज्ञानहीन योनियों में जन्म लेता है अतएव वह पुरुषार्थ साधन के अयोग्य होता है ॥ १५ ॥





**कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलं ।**
**रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥१६॥**
**सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ।**
**प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥१७॥**

---

प्रवृद्धेसति । प्रलीनः - मृतः । मूढयोनिषु - चण्डालपश्वादियोनिषु । जायते । सकलपुरुषार्थानर्हजातिषूत्पद्यत इत्यर्थः ॥ १५ ॥

एवं अन्तकाले सत्त्वादिगुणविवृद्धिफलमात्मविदायतनोत्पत्त्यादिकमुक्त्वा तत्फलमाह—

सुकृतस्य - आत्मवित्कुलोत्पन्नकृतस्य फलाभिसन्धिरहितस्य । कर्मणः मदाराधनरूपस्य । सात्त्विकं - इतोऽधिकसत्वप्रधानम् । निर्मलं - दुःखलेश सम्बन्धरहितम् । फलम् । आहुः । सत्वगुणपरिणामतत्त्वविद इत्यर्थः । रजसस्तु - अन्तकालप्रवृद्धरजोगुणस्यतु । दुःखं - दुःखप्रायकाम्यकर्मानुष्ठानपरम्पराम् । फलम् । आहुः । रजः परिणामतत्त्वविदोवदन्तीत्यर्थः । अन्तकाले रजः प्रवृद्धचा राजस गृहजन्म - तेन पुनः पुनः काम्यकर्मानुष्ठानं - इत्येवं परम्परया दुःख मिश्रमेवफलं भवतीति भावः । तमसः - अन्त्यकालप्रवृद्धतमो गुणस्य । अज्ञानं - अन्त्यजातीय जन्मादिनाऽज्ञानपरं परारूपं - फलम् । आहुः तमः परिणामतत्त्वविदो वदन्तीत्यर्थः ॥ १६ ॥

एवमुत्तरोत्तराधिकसत्त्वादिजनितनिर्मलफलादिकं किमित्यत्राह—

सत्त्वात् - आत्मवित्कुलजन्मादिक्रमेणोत्पन्नादधिक सत्त्वात् । ज्ञानं - आत्मयाथात्म्यापरोक्षरूपं ज्ञानम् । जायते । तथा - रजसः एव च - राजसकुलजन्मादिना प्रवृत्ताद्रजोगुणादेव । लोभः - स्वर्गादिष्वति संगरूपः ।

---

पुण्यकर्मों का फल सात्विक (सुख) एवं निर्मल, रजोगुण का फल दुःख और तमोगुण का फल अज्ञान होता है, इस प्रकार त्रिगुणों के परिणाम जानने वाले लोग कहते हैं ॥ १६ ॥

आत्मज्ञानी जनों के कुल में बार बार जन्म लेने से क्रम से सत्व आदि गुणों के बढ़ने पर आत्मा का यथार्थ ज्ञान उत्पन्न होता है । रजोगुणी कुल में बार बार जन्म लेने से रजोगुण बढ़ता है, उससे स्वर्गादि फल में अधिकतर आसक्ति पैदा होती है । एवं चाण्डालादि अज्ञान बहुल योनियों में बार-बार जन्म लेने वाले तामसिक पुरुषों का प्रमाद, मोह और अज्ञान उत्तरोत्तर बढ़ता ही जाता है ॥ १७ ॥

**ऊर्ध्वं गच्छन्ति सत्वस्था मध्ये तिष्ठन्ति राजसाः ।**
**जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥१८॥**
**नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति ।**
**गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥१९॥**

जायते । एवम् । तमस एव च । प्रमादमोहौ–प्रमादः - असत्कर्मप्रवृत्तिहेतुरनवधानता, मोहः - विपरीतज्ञानं चेत्युभौ । भवतः । अज्ञानं - ज्ञानाभावश्च । भवतीति वचनव्यत्ययेन योज्यम् । विपरीतज्ञानाच्चाण्डालपश्वादियोनिषु जन्म, ततश्च ज्ञानाभाव इत्यर्थः ॥ १७ ॥

ततोपि किमित्यत आह—

सत्त्वस्थाः - अधिकसत्त्वगुणनिष्ठाः । ऊर्ध्वं—उत्तरोत्तरोत्कृष्टपदम् । गच्छन्ति । आत्मवित्कुलासंगकर्मानुष्ठानशुद्धसत्त्वादिपरं परानिःश्रेणिकासमारोहणेन मुक्तिं प्राप्नुवन्तीत्यर्थः । राजसाः - रजोगुणनिष्ठाः । मध्ये - ऊर्ध्वाधोलोकमध्यदेश एव । तिष्ठन्ति । विषयाभिलाष तत्साधनानुष्ठान तत्फलानुभवार्थ जन्मपुनर्विषयाभिषादि वात्यामण्डलोद्भ्रान्ता अन्तराल एव तिष्ठन्तीत्यर्थः । तामसाः - तमोगुणनिष्ठाः । जघन्यगुणवृत्तिस्थाः - जघन्यासु-नीचान्नीचतरासु, गुणवृत्तिषु - तमोगुणपरिणामेषु तिष्ठन्तीति तथाभूतास्सन्तः । अधः निकर्षकाष्ठाभूतपदं । गच्छन्ति । तमसाविपरीतज्ञानं - तेन पापानुष्ठानं तेन चण्डालपशुतिर्यक्क्रिमिकीटतरुगुल्मलताकाष्ठशिलादिप्रायाधोगतिभाजा भवन्तीत्यर्थः ॥ १८ ॥

ननु - ऊर्ध्वं गच्छन्ति सत्त्वस्था इति सत्त्वनिष्ठानां मुक्तिरुच्यते, गुणा-

**सत्वगुण वाले मनुष्य क्रमशः सात्विक गुणों के बढ़ने के कारण उत्तरोत्तर उत्तम ज्ञान प्राप्त करते हैं। रजोगुणी पुरुष ऊर्ध्वलोक और अधोलोक के मध्य में स्थित रहते हैं और तमोगुणी पुरुष जघन्य तामसिक कार्य करते-करते निकृष्ट योनियों को प्राप्त होते हैं ॥ १८ ॥**

**सत्वगुण के अत्यन्त बढ़ने पर जब जीवात्मा, त्रिगुणात्मिका प्रकृति एवं आत्मा के स्वरूप विवेचन द्वारा सत्वादि प्राकृत तीनों गुणों को सम्पूर्ण कर्मों के एकमात्र कर्ता रूप में देखता है एवं आत्मा को गुणत्रय से अतिरिक्त, अकर्ता रूप में स्पष्ट जान पाता है तब वह प्रकृति से भिन्न विशुद्ध ज्ञानाकार जो मेरा भाव है उसी भाव को प्राप्त होता है ॥ १९ ।**





**गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ।**
**जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥२०॥**

नेतानतीत्य त्रीनमृतमश्नुत इति गुणत्रयातीतानाम्मुक्तिरित्यनन्तरमेव वक्ष्यते, कथं विरुद्धमुभयं घटत इत्याशंक्य विषयव्यवस्थया घटयति—

यदा - यस्मिन् काले । सात्त्विकाहारसेवयाऽसंगकर्मानुष्ठानेन च रजस्तमोभिभवेनसत्त्वविवृद्धिदशायामित्यर्थः । द्रष्टा - विविक्तदर्शी जीवः । गुणेभ्यः - स्वानुगुणप्रवृत्तिषु कर्तृभ्यो गुणेभ्यः । अन्यम् । कर्तारम् । नानुपश्यति, गुणाएव सांसारिकप्रवृत्तिषु कर्तारः नान्य इति पश्यतीत्यर्थः । ननु आत्मविदामपि तत्तद्गुणोल्वणता समये प्रकाशादितत्तत्कार्याणामनुभवसिद्धतया गुणकर्तृताज्ञानसम्भवात्तेषामपि भवद्भावापत्तिस्स्यादित्यत्राह (गुणेभ्यश्च परंवेत्तीति) गुणेभ्यः - तत्तत्सांसारिकप्रवृत्तिकर्तृभ्यो गुणेभ्यः । परंच - अन्यमकर्तृस्वरूपमात्मानं च । वेत्ति - पश्यति । सः । मद्भावम् । अधिगच्छति । अयम्भावः आत्मनः परिशुद्धस्वभावस्यापि पूर्वपूर्वकर्ममूलगुणफलसङ्गनिमित्तं विविधकर्मसु कर्तृत्वं, स्वरूपत स्सकलसांसारिकप्रवृत्तिष्वकर्तेति च यदा सत्त्वविवृद्धया पश्यति, तदा स मद्भावं प्राप्नोतीति । अतएव विवृद्धसत्त्वस्य मुक्तिहेतुत्वं सांसारिकप्रवृत्तिहेतोरशुद्धसत्त्वस्य त्याज्यत्वं चेत्युभयमविरुद्धमिति विवेचनीयम् ॥ १९ ॥

अयम्मद्भावः कीदृश इत्यत्राह—

देही - चेतनः । देहसमुद्भवान् । एतान् - पूर्वं सविशेषं निरूपितान् । त्रीन् । गुणान् - सत्त्वादीन् । अतीत्य - सात्त्विकाहारसेवाद्युपबृंहितात्मज्ञानबलेनातिक्रम्य । जन्ममृत्युजरादुःखैः - जन्म - उत्पत्तिः, मृत्युः - मरणं, जरा - जीर्णता, तत्कृतैः दुःखैः । विमुक्तत्यक्तस्सन् । अमृतं - परिशुद्धमात्मानम् । अश्नुते - अनुभवति । अयमेव तु मद्भाव इत्यर्थः ॥ २० ॥

अथ स्वावस्थाजिज्ञासया गुणातीतस्यान्तरबाह्यलक्षणानि पृच्छन्नर्जुन उवाच—

हे प्रभो ! कैः लिंगैः - कीदृशैरान्तरचिह्नैः । त्रीन् । गुणान् सत्त्व-

**जो जीवात्मा, शरीर से उत्पन्न प्राकृत इन सत्वादि गुणत्रय का अतिक्रमण करके गुणत्रय से अतिरिक्त आत्मवस्तु की उपलब्धि करता है वह जन्म, मरण, बुढ़ापा आदिक शरीर सम्बन्ध से होने वाले समस्त दुःखों से मुक्त होकर अमृतरूप आत्मा का अनुभव करता है अर्थात् आत्मा को प्राप्त होता है ॥ २० ॥**

अर्जुन उवाच—

**कैर्लिंगैस्त्रीन्गुणानेतानतीतो भवति प्रभो ।**
**किमाचारः कथं चैतां स्त्रीन्गुणानतिवर्तते ॥२१॥**

श्रीभगवानुवाच—

**प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।**
**न द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि कांक्षति ॥२२॥**

---

रजस्तमांसि । अतीतः । भवति । गुणातीत इति ज्ञेय इत्यर्थः । किमाचारः - कः आचारः यस्य सः । भवति । केनाचारेण बाह्यचिह्नेन च गुणातीत इति ज्ञेय इत्यर्थः । कथं च - केनोपायेन । त्रीन् । गुणान् । अतिवर्तते - अतीतो भवति ॥ २१ ॥

द्वितीयाध्याये स्थितप्रज्ञस्य का भाषेत्यादिना पृच्छतोऽर्जुनस्योत्तरे दत्तेपि पुनः प्रश्नो विशेषान्तरबुभुत्सयेति मत्वा प्रकारान्तरेणोत्तरं श्रीभगवानुवाच । तत्रात्मव्यतिरिक्तानि वस्तूनि द्विविधानीष्टान्यनिष्टानि च, तत्र गुणवश्यस्यानिष्टतत्साधनेषु द्वेषः इष्टतत्साधनेषु द्वेषः इष्टतत्साधनेषु निवृत्तेषु पुनराकांक्षा लोकसिद्धा, गुणत्रयातीतस्य तद्विपरीतवृत्तिरेव लक्षणमित्याह—

हे पाण्डव ! सम्प्रवृत्तानि - स्वस्वविषयप्रसृतानि, अनिष्ट तत्साधनविषयाणीति तावत् ; न द्वेष्टीति क्रियान्वयस्वारस्यात् । प्रकाशं च - सत्त्व कार्यभूतमवध्यवस्त्वाद्यनिष्टावभासं च । मोहमेव च - तमः कार्यभूतं तेष्वेवेष्ट-

---

**अर्जुन ने कहा—**

**हे प्रभो ! यह त्रिगुणातीत आत्मा किन किन आन्तरिक लक्षणों द्वारा एवं किन-किन आचारों अथवा बाहरी चिह्नों द्वारा जाना जा सकता है ? एवं किन किन उपायों से यह गुणत्रय अतिक्रमण किया जा सकता है ? ॥ २१ ॥**

**श्रीभगवान् के कहा—**

**अब गुणातीत पुरुष के लक्षण एवं आचरण बताते हैं—**

**हे अर्जुन ! आत्मा से अतिरिक्त समस्त वस्तुयें इष्ट और अनिष्ट रूप से दो प्रकार की होती हैं । इष्ट की प्राप्ति से सुख और अनिष्ट से दुःख होता है । इसी प्रकार अनिष्ट साधन में प्रवृत्ति के प्रति द्वेष एवं इष्ट साधन की निवृत्ति होने पर उस इष्ट साधन की पुनः प्राप्ति के लिए आकांक्षा का होना संसार में प्रसिद्ध है ।**

**जो पुरुष इष्ट साधन की निवृत्ति होने पर उस इष्ट साधन में प्रवृत्ति का हेतु**





**उदासीनवदासीनो गुणैर्यो न विचाल्यते ।**
**गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥२३॥**

---

तत्साधनत्वभ्रमं च । प्रवृत्तिं च - रजः कार्यभूतां तादृशभ्रमाधीनां तेषु प्रसक्तिं च । एतानि । नद्वेष्टि । निवृत्तानि - स्वस्वविषयाप्रसृतानि - इष्टतत्साधनविषयाणीति यावत् ; न कांक्षतीति क्रियान्वयस्वारस्यात् । प्रकाशं च सत्त्वकार्यभूतमिष्टवस्त्ववभासं च । मोहमेवच - तमः कार्यभूतां तेष्वत्यासक्तिं च । प्रवृत्तिं च - रजः कार्यभूतां तदधीनां तेषु प्रसक्तिं च । एतानि; इष्टवस्त्ववभास तदासक्ति तदधीन तत्प्रसक्तीनां निवृत्तिमिति यावत् । न कांक्षति - पुनःपुनर्नाभिलषति । आत्ममात्रसक्तस्य तदतिरिक्तेष्टानिष्टप्राप्तिपरिहाराभ्यां प्रयोजनाभावादिति भावः । 'एते वै निरयास्तातस्थानस्य परमात्मन' इति स्वर्गस्वाराज्यपर्यन्तसुखस्य तत्त्वतो ऽनिष्टत्वात्तदिष्टत्वज्ञानं भ्रमरूपमिति ज्ञेयम् ॥ २२ ॥

गुणान्वितस्यापि शरीरस्य सतः कथमिष्टानिष्टसन्ततौ न विक्रियत इत्यत्राह—

यः । उदासीनवत् - उदासीनेन तुल्यम् । आसीनः - तूष्णीं स्थित इत्यर्थः । आत्मावलोकनतृप्त्या तद्व्यतिरिक्ते ऽनासक्त इतिभावः । अतएव । गुणैः - सत्त्वादिभिः । न विचाल्यते । एतदेव विवृणोति (गुणाइति) गुणाः - सत्त्वादयः । गुणेषु - स्वस्वकार्येषु । वर्तन्ते - प्रवर्तन्ते । इत्येव - एवमेवा-

---

**सत्वगुण का कार्य प्रकाश आदि की फिर से आकांक्षा नहीं रखता एवं अनिष्ट साधन में निवृत्ति का हेतुभूत रजोगुण और तमोगुण के कार्य प्रवृत्ति और मोह आदि से भी द्वेष नहीं करता वह गुणातीत है । ऐसा व्यक्ति आत्मा से अतिरिक्त वस्तुओं में इष्टानिष्ट बुद्धि का त्यागकर देता है । इसीलिए वह अपने प्रति अनिष्ट करने वाले से द्वेष नहीं करता और उसकी अपनी इष्ट वस्तु की निवृत्ति होने पर उसकी पुनः प्राप्ति की आकांक्षा उसे नहीं होती ॥ २२ ॥**

**आत्मदर्शन में सन्तुष्ट एवं आत्मभिन्न समस्त वस्तुओं में अनासक्त होने के कारण जो उदासीन की तरह स्थित रहते हैं, जो द्वेष एवं आकांक्षा रहित हैं, जो सत्व आदि गुणों से विचलित नहीं होते, सत्व आदि तीनों गुण अपने-अपने प्रकाश आदि कार्यों में स्वयं प्रवृत्त होते हैं, इस प्रकार अनुसन्धान करके जो मौन का अवलम्बन करके रहते हैं और इसीलिए इन समस्त सत्वादि गुणों के कार्य अनुरूप कोई चेष्टा नहीं करते वे गुणातीत अर्थात् प्राकृत मिश्र त्रिगुणों से अतीत होते हैं ॥ २३ ॥**

**समदुःखसुखस्स्वस्थस्समलोष्टाश्मकांचनः ।**
**तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥२४॥**
**मानावमानयोस्तुल्यस्तुल्यमित्रारिपक्षयोः ।**
**सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥२५॥**

नुसन्धाय। अवतिष्ठति - तूष्णीमवतिष्ठत एव। उदासीनवदित्यस्येदं विवरणम्। न विचाल्यत इत्येतदपि विवृणोति (नेङ्गतइति) गुणकार्यद्वेष कांक्षानुगुणं न प्रवर्तत इत्यर्थः ॥ २३ ॥

स्वस्थः - स्वस्मिन्नेव स्थितः, स्वात्मैकप्रियः। अतएव। समदुःखसुखः - समे - एकरूपे, दुःखसुखे - यस्य सः, पुत्रजन्ममरणाभ्यामप्यविकृतचित्त इत्यर्थः। अतएव। समलोष्टाश्मकांचनः - समानि - एक रूपाणि, लोष्टं - मृत्पिडः, अश्मा - शिला, कांचनं - सुवर्णं, इत्येतानि यस्य सः। अतएव। तुल्यप्रियाप्रियः - तुल्यौ, प्रियाप्रियौ - इष्टानिष्टविषयौ, यस्य सः। धीरः - धियं प्रकृत्यात्मविवेकं, राति - आदत्त इति धीरः, प्रकृत्यात्मविवेककुशल इत्यर्थः। एभिर्विशेषणैरान्तरलक्षणान्युक्तानि। अथ तत्कार्यबाह्यलक्षणान्याह (तुल्येति) तुल्य निन्दात्मसंस्तुतिः - तुल्ये - एकरूपे, निन्दा - देहवैरूप्यादिख्यापनं, आत्मसंस्तुतिः - देहसौन्दर्यादिख्यापनं च, एते यस्य सः; विविक्तात्मदर्शिन स्तस्मादत्यन्तविविक्तदेहनिन्दास्तुत्योः परनिन्दास्तुत्योरिव नाप्रीत्यादि सम्भव इति भावः। अतएव। मानावमानयोस्तुल्यः - मूर्खाः पूजितपूजकाः इतिन्यायेन स्तुतिनिन्दाप्रयुक्तपुरस्कारतिरस्कोरयोरविकृत

**जो पुरुष आत्मनिष्ठ होता है, अतएव प्राकृत, देह सम्बन्धी सुख दुःख के प्रति समभाव अतएव ढेला, पत्थर, सुवर्ण में, और प्रिय-अप्रिय वस्तुओं में समान भावना, जो प्रकृति और आत्मा के विवेक ज्ञान में कुशल धीर अर्थात् प्रकृति-आत्मा विवेकी और अपनी निन्दा तथा प्रसंशा में भी समान भावना रखता है वह गुणातीत है ॥२४॥**

**जो मान और अपमान तथा शत्रु और मित्र में समभाव होता है। शरीर तथा शरीर सम्बन्धियों में सत्वादि गुणत्रय ही सम्पूर्ण कार्यों का आरम्भ करने वाले हैं, आत्मा नहीं, इस अनुसन्धान के कारण जो स्वयं को किसी भी कार्य का कर्ता नहीं मानता उस पुरुष को गुणातीत कहा जाता है। (सम्पूर्ण आरम्भों का परित्याग आदिक आचरण इस गुणातीत के बाह्य लक्षण हैं एवं अद्वेष, शत्रु-मित्र में समबुद्धि आदिक उसके आन्तरिक लक्षण हैं) । २५ ॥**





**मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।**
**स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥२६॥**

चित्तः। अतएव। मित्रारिपक्षयोरपि तुल्यः। देहात्मदर्शिनां मानयिता मित्रं भवति, अमानयिता ऽरातिर्भवतीति लोकसिद्धम्, विविक्तात्मदर्शिनान्तु देहमानावमानाभ्यां परमानावमानाभ्यामिव चित्तविकारा भवादिति भावः। अतएव। सर्वारम्भपरित्यागी, आरभ्यन्त इत्यारम्भाः - कृतप्रतिकृतरूपाणि कार्याणि, सर्वारम्भान् परित्यक्तुं शीलमस्येति तथाभूतः। एवं भूतः। यः। सः। गुणातीतः। उच्यते। एवं बाह्यान्तरलक्षणं गुणातीत इति जानीयादित्यर्थः ॥ २५ ॥

अथैवं रूपगुणात्ययहेतुमाह—

यः - अनादिकालप्रवृत्तविपरीतज्ञानवानपि योगी। अव्यभिचारेण- देवतन्तरास्पर्शिना। भक्तियोगेन। मां च - सत्यसंकल्पं परमकारुणिकमाश्रितवात्सल्यैकजलधिं च। सेवते। अत्र च शब्देन देहात्मविवेकस्समुच्चीयते। सः। एतान् गुणान् - दुरत्ययानपि सत्त्वादिगुणान्। अतीत्य- अतिक्रम्य। ब्रह्मभूयाय - ब्रह्मभावाय। कल्पते - योग्यो भवति। यथावस्थितमात्मानममृतमव्ययं प्राप्नोतीत्यर्थः। देहात्मविवेकमात्रस्यानादिकालप्रवृत्तविपरीतवासनाबाधनासामर्थ्यान्मद्भक्तियोगः प्रधानसहकारितयाऽऽवश्यक इतिभावः ॥ २६ ॥

अत्र हेतुमाह—

हि - यस्मात्कारणात्। अहं - अव्यभिचारिभक्तियोगविषय इत्यर्थः। अमृतस्य - नित्यस्य। अव्ययस्य च - ज्ञानसंकोचरहितस्य च। ब्रह्मणः - परिशुद्धात्मनः। प्रतिष्ठाप्रकाशनेन धारकः, तत्प्रापक इत्यर्थः। शाश्वतस्य- मद्भजनरूपस्य। धर्मस्य च धर्मफलस्य च, इन्द्रप्रजापत्यैश्वर्यादिप्युत्कृष्टैश्वर्यस्य चेत्यर्थः। प्रापकवचनोपि धर्मशब्दोऽत्र प्राप्य साहचर्यात्फलवचनः। ऐकान्तिकस्य एकान्तिभिः ज्ञानिभिः, प्राप्यस्य। दुखस्य च रसोवै सः रसं- ह्येवायं लब्ध्वानन्दीभवतीति श्रुतिप्रतिपाद्यनिरतिशयसुखस्य चेत्यर्थः। अहं। प्रतिष्ठाधारकतया प्रापक इत्यर्थः। अत्र मध्यम षट्क प्रपंचितैश्वर्यकैवल्य-

**जो पुरुष उक्त प्रकार से आत्मा के विवेक ज्ञान से युक्त होकर अव्यभिचारी ऐकान्तिक भक्तियोग के द्वारा मुझ सर्वेश्वर की सेवा करता है वह इस कठिन तीन गुणों का अतिक्रमण करके ब्रह्मभाव प्राप्ति के उपयुक्त हो जाता है ॥ २६ ॥**

**ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।**
**शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥२७॥**

॥ इति श्रीमद्भगवद्गीतायां चतुर्दशोऽध्यायः ॥ १४ ॥

भगवल्लाभप्रदानं विविक्तात्मप्राप्तिहेतुत्वस्थापनार्थमुक्तमिति मन्तव्यम् । एतदुक्तम्भवति - पूर्वत्र "दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतान्तरन्ति ते ॥" इत्यारभ्य गुणातिक्रमस्य तत्पूर्वकाक्षरैश्वर्यभगवत्प्राप्तीनां च भगवत्प्रपत्तिमात्रसाध्यतयाः प्रतिपादितत्वादेकान्तभगवत्प्रपत्त्यैव गुणातीतत्वं तत्पूर्वकब्रह्मप्राप्तिश्च भवतीति ॥ २७ ॥

इति श्रीमद्भगवद्गीताभाष्यार्थसंग्रहतात्पर्यदीपे श्रीवरवरमुनिविरचितायां बालबोधिन्यपराभिधानायां गीतार्थसंग्रहदीपिकायां

चतुर्दशोऽध्यायः ॥ १४ ॥





**ब्रह्मभाव प्राप्त होने के लिए भक्तियोग द्वारा भगवत्सेवा का कारण क्या है, यही बताते हैं—**

**अखिल कल्याणगुण विशिष्ट परमेश्वर मैं, मृत्यु रहित अतएव नित्य, अव्यय अर्थात् ज्ञान संकोच से रहित, विशुद्ध आत्मवस्तु का धारक एवं अक्षय ऐश्वर्य, ऐकान्तिक सुख का प्राप्त कराने वाला हूं ॥ २७ ॥**

**॥ श्रीमद् भगवद्गीता के हिन्दी अनुवाद का गुणत्रय विभागयोग नामक चतुर्दश अध्याय समाप्त हुआ ॥**



**श्रीरस्तु ।**

**पुरुषोत्तमप्राप्तियोग नाम**

# अथ पञ्चदशोऽध्यायः

श्रीभगवानुवाच—

**ऊर्ध्वमूलमधश्शाखमश्वत्थं प्राहुरव्ययम् ।**
**छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १ ॥**

पूर्वं त्रयोदशे प्रथम षट्कोदितप्रकृतिपुरुषयाथात्म्यविवेचनं तत्र परिशुद्धस्यापि जीवस्य बीजांकुरवदनादिभ्यां भगवदाज्ञातिलंघनरूपदुष्कर्मानुष्ठान गुणफलसंगाभ्यां बन्धः प्रकृतिपुरुषविवेकसहकृतभगवद्भजनेन तन्निवृत्तिरिति चोक्तम्, इदानीं भजनीयस्य मध्यमषट्कोदितस्य परमात्मनो माहात्म्यं शोधयितुं बद्धमुक्तरूपविभूतिमत्तां ताभ्यामपि व्यापनभरणस्वामित्वादिभिरत्यन्तवैलक्षण्यं च वक्ष्यन् संगमूलस्य बन्धस्यासंगशस्त्रच्छेद्यत्व सिद्ध्यर्थं वृक्षरूपतां निरूपयन् श्रीभगवानुवाच—

ऊर्ध्वमूलं - ऊर्ध्वः - सप्तलोकोपरिनिविष्टश्चतुर्मुखः, मूलं - निदानं,

## पञ्चदश अध्याय

**अध्याय अर्थसंग्रह**

**अचिन्मिश्राद् विशुद्धाच्च चेतनात् पुरुषोत्तमः ।**
**व्यापनाद् भरणात् स्वाम्यादन्यः पंचदशोदितः ॥**

**( गीतार्थ संग्रह १९ )**

**देहयुक्त बद्धजीवात्मा से एवं देहरहित विशुद्ध जीवात्मा से एक स्वतन्त्र तत्व है जिसे पुरुषोत्तम कहा जाता है । यह पुरुषोत्तम उक्त दोनों प्रकार के जीवात्माओं में व्यापक उनका भरण करने वाला, स्वामी है । ये दो विषय इस पन्द्रहवें अध्याय में उपदिष्ट हुए हैं—**

**ऊपर स्थित सातलोकों में सबसे ऊर्ध्व स्थित सत्यलोक निवासी ब्रह्मा (उनके अन्तर्यामी परमात्मा) जिस वृक्ष के मूल एवं नीचे स्थित पृथिवी आदिक सातलोक, उनके मध्यस्थित मनुष्य, पशु, पक्षी, कीट, पतङ्ग, लता, गुल्म आदिक सभी शाखायें**

**अधश्चोर्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः ।**
**अधश्चमूलान्यनुसन्ततानि कर्मानुबन्धीनि मनुष्यलोके ॥ २ ॥**

यस्य तम् । अधश्शाखं, अथः - सत्यलोकादधोलोकाः पृथिव्यादयः, तेषु प्रसृताः नरपशुमृगादिरूपाश्शाखाः, यस्य तम् । अव्ययं, वैराग्यमूलकतत्त्वज्ञानपर्यन्तं प्रवाहरूपेणावर्तमानतया नाशरहितम् । अश्वत्थं - श्वः प्रातरपि स्थास्यतीति निश्चेतुमशक्यं संसारवृक्षमित्यर्थः । उत्तरश्लोकवक्ष्यमाणस्य असंगशस्त्रेण छित्वेति वैराग्यछेद्यत्वस्य संगमूलकसंसारएवान्वय स्वारस्यात् । प्राहुः "ऊर्ध्वमूलो ऽह्यधश्शाखएषोऽश्वत्थस्सनातन" इत्याद्याश्श्रुतय इत्यर्थः । छन्दांसि - वायव्यँश्वेतमालमेतभूतिकाम' इत्यादिकाम्यकर्मप्रतिपादकवेदाः । यस्य - संसारवृक्षस्य । पर्णानि - पत्रवद्वर्धकानि । तत्प्रतिपादितैः काम्यकर्मभिर्हि संसारोवर्धते । तं - संसाररूपमश्वत्थवृक्षम् । यः । वेद - यथावज्जानाति । सः - पुमान् । वेदवित् - वेदयत्यपवर्गोपायमिति वेदः - उत्तरभागः, तं वेत्तीतिवेदवित् । वेदोहि संसारवृक्षच्छेदनोपायं ज्ञानं वदति, छेद्यवृक्षस्वरूपज्ञानं च छेदनोपायज्ञानोपयोगीति संसार तत्त्वज्ञ एव वेदविदितिभावः ॥ १ ॥

एवं नैमित्तिकव्यष्टिसृष्टिमुक्त्वा नित्यसृष्टिप्रकारमाह—

तस्य - मनुष्यादिशाखस्य संसारवृक्षस्य । शाखाः - पूर्वशाखाभ्यः प्रसृता अपरशाखाः । अधश्च - मनुष्यलोकादिषु च । ऊर्ध्वं च - देवलोकादिषु च । प्रसृताः - तत्कर्मद्वारा तत्पुत्रपौत्रादिरूपेण पशुमनुष्यदेवगन्धर्वादिरूपेण चोपशाखा उद्भूता इत्यर्थः । गुणप्रवृद्धाः, गुणैः - सत्त्वादिभिः, प्रवृद्धाः - जलसेकादिभिरिव वर्धिताः । विषयप्रवालाः, विषयाः - शब्दादय

---

**हैं, ऐसा संसाररूप अश्वत्थवृक्ष अविनाशी है, अर्थात् वैराग्यमूलक तत्वज्ञान न होने तक संसार प्रवाहरूप से चलता ही रहता है। उससे निवृत्ति नहीं होती है। काम्यकर्मो का प्रतिपादक वेद (पूर्वकाण्ड) इस संसार वृक्ष के पत्ते हैं। इस संसाररूप अश्वत्थ वृक्षको जो यथार्थरूप से जान पाते हैं, वे वेद के यथार्थ तत्व के जानकार हैं, वैराग्य एवं ज्ञानवान् पुरुष हैं ॥ १ ॥**

**यह संसाररूपी अश्वत्थवृक्ष आदि तीन गुणों के रस-सिंचन द्वारा बढ़ता है, रूप, रसादि भोग्य पदार्थ इसके पल्लव हैं, इसकी मनुष्यलोक स्थित सम्पूर्ण शाखाओं से कर्मकृत उपशाखायें ऊपर स्वर्गादि लोकों में एवं नीचे मनुष्यादि लोकों में व्याप्त हो जाती हैं। अर्थात् संसारी जीव सत्वादि गुणविशिष्ट मन से रूप रसादि विभिन्न**





**न रूपमस्येह तथोपलभ्यते नांतो न चादिर्नच सम्प्रतिष्ठा ।**
**अश्वत्थमेनं सुविरूढमूलमसंगशस्त्रेण दृढेन छित्वा ॥ ३ ॥**

एव, प्रवालाः - पल्लवाः, यासान्ताः । पल्लवाहि वृक्षाग्रसम्बन्धिनः, शब्दादयोपि संसारवृक्षाग्रभूतमनुष्यादीनां भोग्यतया सम्बन्धिन इति भावः । तथाभूताश्च भवन्तीत्यन्वयः । ननूर्ध्वमूलस्य वृक्षस्याधश्शाखात्वम्मूलानुसाराद्भवतु, अधश्शाखानामूर्ध्वप्रसरणं कथमतआह (अधश्चेति) अधश्च-मनुष्य लोके च । कर्मानुबन्धीनि - कर्मरूपाण्यनुबन्धीनि, वासनयाऽविच्छिन्नानि । मूलानि - शाखामूलानि । अनुसन्ततानि - व्याप्तानि । यथा प्रासादादि शिखरोत्पन्ना अधोलम्बिन्यो लताः क्षितिसंसर्गेण पुनस्संचितमूला ऊर्ध्वं प्रसरन्ति, तद्वदेव मनुष्यादिशाखाअपि भूलोकमागम्य तत्र संचितकर्मरूप मूलाः काश्चित्तत्रैव प्रसरन्ति काश्चिच्च देवलोकादौ प्रसरन्तीति भावः ॥ २ ॥

ननु सर्वप्रत्यक्षसिद्धेऽस्मिन् संसारे 'यस्तं वेदे' ति दुर्लभत्वाभिधानमयुक्तं, अतआह—

इह - संसारे । वर्तमानैः पुरुषैः । अस्य - संसारवृक्षस्य । रूपं - स्वरूपम् । तथा - पूर्वोक्तप्रकारेण । नोपलभ्यते । चतुर्मुखमूलत्वं तत्सन्तान परम्परया मनुष्यादिरूपेणाधोलोकसम्बन्धः मनुष्यत्वावस्थायां संचितैः कर्मरूपमूलैः पुनरप्यधश्चोर्ध्वं च शाखोपशाखान्यायेन प्रसृतिरित्येवं विधं रूपं केनापि संसारस्य वैराग्येण विनाशप्रकारश्च नोपलभ्यते । आदिश्च - गुणफलसंगेनोत्पतिश्च । नोपलभ्यते । तथा । सम्प्रतिष्ठा च - स्थितिकारणं च, संसारमूलगुणफल संगस्यापि निदानं क्षेत्रादिस्थानीयमनात्मन्यात्मबुद्ध्यादिरूपमज्ञानमित्यर्थः ; तच्च । नोपलभ्यते । सर्वोपि संसारे मनुष्योऽहं देवदत्तपुत्रोहं, यज्ञदत्त पिता, अनुरूपभार्योऽहम् इत्येतावन्मात्रं जानति नातो धिकं संसार यथावस्थितरूपमिति भावः । अतस्सर्वदा दुर्विज्ञेय स्वभावत्वा

---

**विषय भोगों के लिए अनेक प्रकार के पापपुण्य रूप कर्मों का अनुष्ठान कर अपने उन कर्मों के अनुसार ऊर्ध्व देवादिलोक, नीचे मनुष्य, पशु, पक्षी, कीट, पतङ्ग आदिक योनियों में जन्म लेता रहता है ॥ २ ॥**

**इस संसार में कोई पुरुष इस संसाररूपी वृक्ष का पूर्वोक्त स्वरूप, जिस प्रकार से इसकी त्रिगुण सङ्ग से उत्पत्ति, जिस प्रकार से देहात्म बुद्धि से इसकी स्थिति एवं जिस प्रकार से वैराग्य होने पर इसका विनाश होता है, इसे यथार्थरूप से उपलब्ध नहीं कर पाता है। सुदृढ़ (मजबूत) मूल से युक्त इस संसार वृक्ष को असङ्गरूप**

**ततः पदं तत्परिमार्गितव्यं यस्मिन्गता न निवर्तन्ति भूयः ।**
**तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥**

यथाशास्त्रमेव तन्निवर्तनयत्नं कुर्यादित्याह (अश्वत्थमित्यादि) सुविरूढ़मूलं - सुविरूढ़ानि - सुष्ठु - अनादि, विविधेचरूढ़ानि, दुरुच्छेदानि विविधानि कायिकवाचिकमानसिकाभेदेन विहितनिषिद्धादिभेदेन च बहुविधं निरूढ़ानि, मूलानि - कर्मरूपाणि, यस्य तम् । एवं - पूर्वोक्तप्रकारम् । अश्वत्थं - संसार-वृक्षम् । दृढ़ेन - सम्यज्ज्ञानमूलत्वेनातिदृढेन । असंगशस्त्रेण - असंगः - गुणमयभोगेषु वैराग्यं, स एव शस्त्रं - कुठारः, तेन - छित्वा पृथक्कृत्य ॥३॥

ततः - असंगादेव । अस्मिन् - परिशुद्धात्मस्वरूपे । गताः - यत्स्वरूपं प्राप्ताः । भूयः - पुनरपि । न निवर्तन्ति - नावर्तन्ते । तत्पदं प्राप्य-स्वरूपम् । परिमार्गितव्यं - 'वेदानिमं च लोकममुं च परित्यज्यात्मान-मन्विच्छे' दिति श्रुत्युक्तरीत्याऽन्वेषणीयमित्यर्थः । ननु अनादि कालप्रवृत्तो भोगसंगः तन्मूलविपरीतज्ञानं च कथं निवर्तेत इत्यत्राह (तमेवेति) आद्यं - मयाऽध्यक्षेणप्रकृतिरित्याद्युक्तप्रकारेण जगत्कारणभूतम् । तमेव च - पूर्व षट्कप्रतिपादितं परमात्मानमेव । प्रपद्य शरणमुपगम्य । अत्रैवकारेण यदा-ज्ञोल्लंघिता, स एवप्रसादद्वारा बन्धनिवर्तनाय शरणतया वरणीयइति सूच्यते । तथैव प्राचीनाचारमाह ( इयतइति ) इयतः - अज्ञाननिवृत्त्यादेः कृत्स्नस्य सम्बन्धिनी, तत्साधनभूतेत्यर्थः । प्रवृत्तिः । पुराणी - चिरन्तनीसती । प्रसृता - अनुस्यूता । पुरातना हि मुमुक्षवः 'तेषामेवानुकम्पार्थमहमज्ञान जन्तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वते' त्याद्युक्तरीत्या मच्छ-रणागतेरेवाज्ञाननिवृत्त्यादि हेतुत्वमवगम्य तेनैव मार्गेण निवृत्ताज्ञाना विनि-र्मुक्तबन्धा जाता इत्यर्थः । अनेनशिष्टाचारः प्रदर्शितः । प्रपद्येद्यतः प्रवृत्ति-रिति पाठेतु, यतः - यस्मात्परमपुरुषात् । प्रवृत्तिः - गुणमयभोगसंगप्रवृत्तिः । पुराणी - पुरातनीसती । प्रसृता । आद्यं तमेव च, शरणम् । प्रपद्येत् - प्रप-द्येतेत्यर्थः । प्रपद्येदिति परस्मैपदंछान्दसम् । "दैवीह्येषागुणमयी मम माया

**अर्थात् वैराग्यरूप दृढ़ कुठार से काटकर तब जिस विशुद्ध आत्मवस्तु के प्राप्त होने पर संसार में आसक्ति नहीं होती, उस प्राप्य आत्मावस्तु की खोज करना कर्तव्य है अर्थात् वैराग्य रूप कुठार से एवं अज्ञान निवृत्ति से जगत् कारणभूत परमात्मा का सतत स्मरण करना कर्तव्य है । पूर्वकाल से मुमुक्षुजन इस प्रकार का ही आचरण करते आ रहे हैं ॥ ३-४ ॥**





**निर्मानमोहा जितसंगदोषा अध्यात्मनित्या विनिवृत्तकामाः ।**
**द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ५ ॥**

दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतान्तरन्ति ते ॥' इत्याद्युक्तरीत्या, गुण-मयभोगसंगप्रवृत्तिमूलकारणं तमेव पुरुषमाद्यन्तन्निवृत्तयेपि शरणमुपग-च्छेत्, नान्योस्ति कश्चिदुपाय इति भावः ॥ ४ ॥

तमेवार्थं प्रपंचयति—

निर्मानमोहाः - निर्गतः - मच्छरणागत्या निवृत्तः, मानः - देहात्माभि-मानः, तद्रूपः - मोहः - येभ्यस्ते । अतएव । जितसंगदोषाः - जितः - संगः - गुणमयभोगासक्तिरेव, दोषः - यैस्ते । अतएव । अध्यात्मनित्याः - अध्या-त्मं - आत्मनि वर्तमानं ज्ञानमित्यर्थः, तत्र, नित्याः - निरताः । अतएव । विनिवृत्तकामाः - विनिवृत्तः - विशेषेणनिवृत्तः, कामः - तदितरविषयासंगः, येषान्ते । अतएव । सुखदुःखसंज्ञैः - सुखदुःखे इतिसंज्ञा येषान्तैः, अनुकूलप्रति-कूलस्वभावैरित्यर्थः । द्वन्द्वैः - शीतोष्णादिभिः । विमुक्ताः । अमूढ़ाः - आत्मानात्मतत्त्वज्ञतया - सर्वभ्रमरहिताः । योगिनः । अव्ययं - ज्ञान संको-चरहितम् । तत् । पदं - अविच्छिन्नज्ञानैकाकारमात्मानम् । गच्छन्ति - प्राप्नुवन्ति । मच्छरणागतानामेव तास्सर्वाः प्रवृत्तय स्सुशका स्सिद्धिपर्य-न्ताश्च भवन्तीत्यर्थः ॥ ५ ॥

तदेव पदं विशिनष्टि—

तत् - प्रकाशरूपमात्मस्वरूपम् । सूर्यः । न भासयते - न प्रकाशयति । शशांकः - चन्द्रश्च । न भासयते । पावकः - अग्निश्च । न भासयते । किन्तु योग एवावभासयतीति भावः । आदित्यादयोहि जडान् भासयन्ति, तानपिज्ञानमेव भासयति, आत्मानं तु योगएव भासयतीति भावः । संसा-रिणां त्वनादिकर्मयोगविरोधि, तद्विरोधि च मच्छरणागतिमूलकमसंगा-दिकमितिभावः । यत् - परिशुद्धात्मस्वरूपम् । गत्वा - प्राप्य । न निव-

**इस प्रकार जो पुरुष मेरी शरण ग्रहण करते हैं, वे देह ही आत्मा है, इस अभिमानरूप मोह से रहित होकर, उससे भोग्य विषयों में आसक्ति शून्य होकर, आत्म मननशील और आत्मा से अतिरिक्त भिन्न वस्तुओं में कामना रहित होकर, अनुकूल-प्रतिकूल सुख दुःख रूप विपरीत द्वन्द्वों से अतीत, भ्रम-प्रमाद शून्य होकर अव्यय निरवच्छिन्न ज्ञानाकार आत्मवस्तु प्राप्त करते हैं, अर्थात् आत्म दर्शन प्राप्त करते हैं ॥ ५ ॥**

**न तद्भासते सूर्यो न शशांको न पावकः ।**
**यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६ ॥**
**ममैवांशो जीवलोके जीवभूतः सनातनः ।**
**मनः षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥**

---

र्तन्ते - न पुनरावर्तन्ते । धाम - प्रकाशरूपम् । परमं - आदित्यादीनापि भासकम् । तत् - वस्तु । मम - मत्सम्बन्धिविशेषणतया मदंशः । मरमसाम्या पत्तिदशायापि मच्छेषभूतमेवेति भावः ॥ ६ ॥

ननु यदि जीवास्त्वदंशाः - तर्हि नित्यसूरिवर्गवत्सर्वेषां परिशुद्धाकारयोगः किं न स्यादित्यत्राह—

सनातनः - पूर्वोक्तरीत्या ऽनादिरनन्तः । मम । अंशएव - चिदचिद्विशिष्टे मयि विशेषणतयैकदेशश्चिदंश एव । जीवलोके - संसारे । जीवभूतः - अनादिकर्मरूपाविद्यावेष्टनेन जीवभावं प्राप्तस्सन् । प्रकृतिस्थानि - शरीरात्मकप्रकृतिनिष्ठानि । मनष्षष्ठानि - मनः - षष्ठं - येषान्तानि । इन्द्रियाणि । कर्षति । कश्चिदुक्तेन मार्गेणाविद्यायामुक्तः स्वरूपेणा वतिष्ठते, कश्चित्त्वनादिकर्मवेष्टितश्शरीरेन्द्रियाद्यधिष्ठाता कर्मानुगुणं शरीरेन्द्रियादिकं स्वभोगार्थं प्रेरयतीत्यर्थः ॥ ७ ॥

एवं परिशुद्धस्वरूपस्यात्मनो ऽनाद्यविद्यावेष्टनेन बन्धमुक्त्वा शरीरोत्क्रान्ति शरीरान्तरगतिप्रवाहक्लेशसन्तर्तिं सूचयन्नुत्क्रांत्यादिप्रकारमाह—

---

**अब दो श्लोकों में आत्मवस्तु के विलक्षण लक्षण बताते हैं—**

**सूर्य, चन्द्रमा एवं अग्नि उस स्वप्रकाश आत्म स्वरूप को प्रकाशित नहीं कर पाते । जिस विशुद्ध आत्मस्वरूप को प्राप्त होने पर फिर उसका संसार में लौटना नहीं होता । प्रकाश स्वरूप उत्कृष्ट वह आत्मस्वरूप मेरा है, अर्थात् मेरी विभूति रूप अंश अर्थात् मेरा शरीर है ।**

**जीवात्मा श्रीभगवान् का अंश होने पर भी वह किस कारण से विशुद्ध ज्ञानाकार युक्तरूप से प्रतीत नहीं होता, अब इसे बताते हैं—**

**अनादि काल से जीव मेरा (ईश्वर का) अंश, ऐसा होने पर भी वह अपने अपने कर्मानुसार अपने कर्मों का फल भोगने के लिए प्राकृत शरीर प्राप्त करके इस संसार रूप जीवलोक में जीवरूप से जन्म ग्रहण करता है । तब मन और ज्ञानेन्द्रियाँ उस देह धारण करने वाले जीव को भोगों को भोगने की प्रेरणा देते हैं ॥ ६-७ ॥**





**शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।**
**गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ ८ ॥**
**श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।**
**अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥**

---

ईश्वरः - शरीरेन्द्रियाधिष्ठाता जीवः । यत् - यदा । शरीरं - देहान्तरं । अवाप्नोति । यच्च - यदा च । उत्क्रामति - एकस्माच्छरीरादुत्तिष्ठति । तदा । वायुः । आशयात् - कस्तूरिकाकुंकुमचन्दनादिस्थानात् । गन्धानिव - साश्रयान् गन्धानिव । एतानि - मनः प्रभृतीनीन्द्रियाणि साश्रयाणि । गृहीत्वा संयाति । यथा पुष्पादिकान्निष्क्रान्तो वायुः पेटिकां विहायातिसूक्ष्मान् पुष्पाद्यवयवानादाय गच्छति - एवमेव शरीरं विहायातिसूक्ष्मभूतसूक्ष्मेन्द्रियादि सम्परिष्वक्त एव शरीरान्तराणि प्रविशतीत्यर्थः ॥ ८ ॥

कानि पुनस्तानीन्द्रियाणि, यदर्थं च तत्संग्रहः, तदाकिमित्यत्राह—

श्रोत्रं, चक्षुः, स्पर्शनं च - त्वगिन्द्रियं च, रसनं, घ्राणमेव च - घ्राणेन्द्रियं च, मनश्च, एतानीन्द्रियाणि । अधिष्ठाय - स्वस्वविषयोन्मुखानि कृत्वा । अयं - जनः । विषयान् - शब्दादीनेव । उपसेवते - उपभुङ्क्ते । न कदाचिदात्मानमित्यर्थः ॥ ९ ॥

अत्र हेतुमाह—

विमूढाः - देहात्माभिमानिनः । गुणान्वितं - गुणपरिणामशरीरसंसृष्टम् । स्थितं वापि - कर्मनिगलबद्धतया कलेबराकारकारागृहावस्थितं

---

**इन्द्रियों का ईश्वर अर्थात् नियामक और कर्ता जीवात्मा जब देह त्याग करके दूसरे अन्य देह को प्राप्त करता है, तब वायु जैसे पुष्प, चन्दन आदि वस्तुओं से गन्ध ग्रहण करके साथ ले जाता है, उसी प्रकार यह देहधारी जीवात्मा भी सूक्ष्म शरीर के साथ मन आदिक मुख्य इन्द्रियों को लेकर जाता है ॥ ८ ।**

**वे इन्द्रियाँ कौन-कौन सी हैं, बताते हैं—**

**(जीवात्मा) चक्षु, कर्ण, नासिका, जिह्वा, त्वक् इन पाँच ज्ञानेन्द्रिय एवं इन्द्रियों के राजा मन इन सबके भीतर अधिष्ठित होकर अर्थात् इन इन्द्रिय गणों को अपनी अपनी प्रवृत्ति के अनुसार विभिन्न विषय भोगों को अनुकूल करके उन-उन रूप, रस, शब्द आदि विषयों का उपभोग करता है ॥ ९ ॥**

उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितं ।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥१०॥
यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥११॥

वापि। अतएव। उत्क्रामन्तं - प्रारब्धक्षये तस्माच्छरीरान्निष्क्रामन्तं, तच्छरीरोत्क्रांतिशरीरान्तरप्रवेशक्लेशाननुभवन्तमित्यर्थः। भुञ्जानं - विषसंसृष्ट मधुवच्छब्दादिविषया ननु भवन्तं वा। नानुपश्यन्ति - कस्यांचिदप्यवस्थायां ज्ञानैकाकारतया ऽऽत्मानं नानुभवन्ति। स्वात्मानमपह्रन्तीति यांवत्। अत्र विमूढानानुपश्यन्तीति - स्वरूपतो मत्समानानपि मन्मायामोहयतीति भगवतस्सानुक्रोशवचनम्। ननुचेतनानां सर्वावस्था स्वनुपलब्धस्या सद्भाव एवेत्यत्राह (पश्यन्तीति) ज्ञानचक्षुषः - ज्ञानं - आत्मानात्मविवेकः, तदेवचक्षुर्येषां ते, तेतु ज्ञानचक्षुषः। पश्यन्ति - सर्वावस्थासु ज्ञानैकाकारमात्मानं साक्षात्कुर्वन्त्येव। अत आत्मविषये जात्यन्धानां देहात्माभिमानिनामनुपलब्धस्य तावन्मात्रेण नासद्भाव एवांगीकार्य इति भावः॥ १० ॥

ननु परिशुद्धात्मविषये जात्यंधानां संसारिणां कथं भगवल्लाभ इत्याशंक्य - नमे वचाद्यं पुरुषं प्रपद्येति पूर्वोक्तमेवार्थमन्वयव्यतिरेकाभ्यां प्रपंचयति (यतन्तइति)।

यतन्तः - मत्प्रपत्तिपूर्वकं कर्मयोगाद्यनुतिष्ठन्तः। अतएव। योगिनः -

अज्ञानी अर्थात् देह को आत्मा मानने वाला संसारी जीव, सत्व आदिक त्रिगुणमय एवं प्राकृत (प्रकृति से बने) शरीर में आसक्त होकर रहता है, इसलिए देह से बाहर निकलने में सक्षम एवं देह के भीतर प्रवेश करने वाले प्राकृत विषयों के भोक्ता जीवात्मा के ज्ञानाकार यथार्थ स्वरूप का अनुभव नहीं कर पाता है। किन्तु बिवेकी ज्ञानी पुरुष इस जीवात्मा का वास्तविक स्वरूप अनुभव कर पाता है॥ १०॥

कर्मयोग आदि के अभ्यास से निर्मल अन्तःकरण होकर आत्मा के दर्शन करने में प्रवृत्त योगीजन शरीर में स्थित होने पर भी शरीर से भिन्न इस विशुद्ध आत्मस्वरूप के दर्शन करते हैं। कर्मयोगादि के अनुष्ठान द्वारा जिनका अन्तःकरण निर्मल नहीं हो पाता, अतएव जिनका मन उस विशुद्ध आत्मा के दर्शन करने के लिए उपयुक्त नहीं है, ऐसे पुरुष प्रयत्न करने पर भी देह से विलक्षण इस आत्मा का साक्षात्कार नहीं कर पाते हैं॥ ११॥





यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥१२॥
गामाविश्य च भूतानि धारयाम्यहमोजसा ।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥१३॥

निर्मलेन मनसा ऽऽत्मावलोकनं कुर्वन्तः पुमांसः। आत्मनि - देहे। अवस्थितमपि। एनम्। पश्यन्ति - तद्विविक्तं परिशुद्धात्मानं पश्यन्ति। एतदेव व्यतिरेकेण द्रढयति (यतन्तइति) यतन्तः - स्वातन्त्र्येण कर्माद्यनुतिष्ठन्तः। अतएव। अकृतात्मानः असंस्कृतमनसः। अतएव। अचेतसः - आत्मावलोकन समर्थचित्तरहिताः। पुमांसः। एनं - देहादिविविक्तमात्मानम्। न पश्यन्ति। अतो मत्प्रपत्तिपूर्वककर्मयोगांजनोन्मिषितयोगचक्षुषा विविक्तात्मा साक्षात्कर्तव्य इति भावः॥ ११ ॥

पूर्वं सूर्यादीनामपि भासकस्य ज्योतिरात्मनो मुक्तावस्थस्य बद्धावस्थस्य च विभूतित्वमुक्तम्॥ इदानीमचित्परिणामसूर्यादिगतमपि तेजस्स्वविभूतिरित्याह (यदिति)।

आदित्यगतं - सूर्यायत्तमित्यर्थः। यत्। तेजः। अखिलं - कृत्स्नम्। जगत्। भासयते - प्रकाशयति। तथा। चन्द्रमसि। यत्। तेजः। जगत्। भासयते। अग्नौ च। यत्। तेजः। जगत्। भासयते। तत्। तेजः। मामकं - मत्सम्बन्धि। विद्धि। सूर्यचन्द्राग्निभ्योऽपि मयैव दत्तं विद्धीत्यर्थः॥ १२ ॥

रसात्मकस्य सोमस्यौषधिपोषकत्वशक्तिरपि च भूतधारिण्याः पृथिव्या-आधारत्वशक्तिरपि मदीयैवेत्याह—

सूर्य का जो तेज चन्द्रमा का तेज, अग्नि का तेज, जो सम्पूर्ण जगत् को प्रकाशित करते हैं, वे सब तेज मुझ से दिये गये हैं इसलिए उन्हें मेरी ही विभूति रूप जानो॥ १२॥

मैं पृथ्वी में प्रविष्ट होकर अपने असाधारण सामर्थ्य से जीवों को धारण करके स्थित हूं। रसमय चन्द्र में अन्तर्यामी रूप से स्थित होकर तृण गुल्म आदिक समस्त औषधियों के परिवर्धित करके पुष्ट (मजबूत) बनाता हूं अर्थात् पृथिवी में धारकत्व शक्ति एवं चन्द्र में औषधि पोषकत्व शक्ति ये दो शक्तियाँ मेरे द्वारा प्रदत्त हैं, इसलिए उन्हें मेरी ही विभूति जानो॥ १३॥

**अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।**
**प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥१४॥**

अहम् । गां - भुवम् । आविश्य - अधिष्ठाय । ओजसा - अप्रतिहत-सामर्थ्येन । भूतानि । धारयामि । रसात्मकः - अमृतांशुः । सोमः भूत्वा - तच्छरीरो भूत्वा । सर्वाः । ओषधीः - तृणगुल्मलताप्रभृतीः । पुष्णामि च - वर्धयामि च ॥ १३ ॥

जाठराग्निगतपाकशक्तिरपि मदीयेत्याह—

अहम् । वैश्वानरः - जाठराग्निः, तच्छरीरः । भूत्वा । प्राणिनां प्राणभृताम् । देहं - शरीरम् । आश्रितः - शरीरस्यांतः प्रविष्टः । प्राणापान समायुक्तः - प्राणापानाभ्यां - जाठरोद्दीपकाभ्यां प्राणवृत्तिविशेषाभ्यां. समायुक्तः - सहितः । 'समन्वित स्समानेन सम्यक्चरति पावक' इतिशास्त्रानुसारात्समानवृत्तिसहितस्सन्नपीति बोध्यम् । चतुर्विधम् - खाद्यचोष्यलेह्यपेयादिकम् । अन्नम् । पचामि - पक्वं करोमि, रूपान्तरपरिणतं करोमीत्यर्थः ॥ १४ ॥

पूर्वं सोमजाठरयोः - सोमो भूत्वा - वैश्वानरो भूत्वेति - स्वविभूतित्वमुक्त्वा कृत्स्नस्यापि भूतजातस्याविशेषेण शरीरतया विभूतित्वमाह—

अहम् । सर्वस्य च - भूतजातस्य च । न केवलं सोमवैश्वानरयोः, अपितु सर्वस्यापि । हृदि - 'पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम् ॥' इति, 'यदिदमस्मिन् दहरं पुण्डरीकं वेश्म' इति च श्रुतिप्रतिपादिते सकलप्रवृत्ति-मूलज्ञानोदयदेशे । सन्निविष्टः - 'तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः' इति, 'दहरोऽस्मिन्नन्तर आकाशः' इतिचानन्तर वाक्यद्वये परमात्माकाश शब्दाभ्यां दहरं पुण्डरीकनिष्ठतया निर्दिष्टश्चाह मित्यर्थः । अतएव । मत्तः । स्मृतिः - पूर्वानुभूत वस्तुविषयकं पूर्वानुभवजनितसंस्कारमात्रजन्यं ज्ञानम् । अपोहनं च - अनेनैवं भविष्यतीत्यादि वस्तुस्वरूपयोग्यता पर्यालोचनं च । जायत इत्यर्थः । अत स्सोमाग्नीन्द्रादीनाम्मच्छरीरतया - तत्प्रतिपादकैः -

---

**मैं जठराग्नि होकर अर्थात् उसके अन्तर्यामी रूप से प्राणियों के शरीर में प्रविष्ट होकर और जठराग्नि के उद्दीप्त करने वाले प्राण वायु एवं अपानवायु के साथ संयुक्त होकर चर्व्य (चबाने योग्य) चोष्य (चूसने योग्य) लेह्य (चाटने योग्य) पेय (पीने योग्य) चार प्रकार की भोजन सामग्री का परिपाक करता हूँ (पकाता) हूँ ॥ १४ ॥**





**सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ।**
**वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥१५॥**
**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥१६॥**

'वायव्यं श्वेतमालभेते' त्यादिभिः सर्वैः वेदैश्च । अहमेव - सर्वान्तर्यामि भूतोऽहमेव । वेद्यः - ज्ञेयः । वेदान्तकृत् - वेदानां - इन्द्रं यजेत - वरुणं यजेतेत्यादीनाम्, अन्तः - फलम्, फलपर्यवसायिनो हि वेदाः, तत्करोतीति वेदान्तकृत् । 'यो यो यां यां तनुं भक्त' इत्यारभ्य 'लभते च ततः कामान् मयैव विहितान् हितानि' त्युक्तरीत्या फलप्रदाता चाहमेव । अहमेव च । वेदवित् - वेदतत्त्वार्थवित् । अतो मत्त एव वेदसारार्थो ज्ञातव्य इतिभाव ॥ १५ ॥

एवं बद्धमुक्तयो स्सप्रपंचं स्वविभूतित्वमुक्त्वा ताभ्यामप्यव्ययत्व व्यापन भरणनियमनैरतिविलक्षणतया पुरुषोत्तमत्वे स्थापयितुमुपक्रमते—

द्वौ - क्षरश्चाक्षरश्चेत्येवमुपाधिभ्यामेव द्वित्वसंख्या संख्यातौ, ननु-स्वरूपत एव द्वावितिभावः, बद्धानां 'नत्वं नेमे जनाधिपा' इत्यादौ, मुक्तानां च - 'बहवो ज्ञान तपसा पूतामद्भाव मागता' इत्यादौ च बहुत्वप्रतिपादनात् । एवंविधौ । पुरुषौ । लोके - लोक्यते सर्वमनेनेति लोकः - प्रमाणम्, तस्मिन् । क्षरश्च । अक्षरएव च । इतिप्रथितौ - प्रमाणसिद्धावित्यर्थः । तत्र ।

---

**मैं सम्पूर्ण प्राणियों के हृदय के मध्य में अन्तर्यामी परमात्मा रूप से स्थित रहता हूँ, इसलिये इन जीवों को सम्पूर्ण पदार्थों का यथार्थ ज्ञान, स्मरण और विस्मरण मुझ से ही होता है । सब वेदों से मैं ही वेद्य (जानने योग्य) अथवा ज्ञेय हूँ । वेदों में उक्त कर्मों का फल दाता मैं ही हूं । वेदों के यथार्थ तत्व को जानने वाला भी मैं ही हूँ ॥ १५ ॥**

**वेदों का यथार्थ ज्ञाता मैं ही हूं और मैं ही तुम्हें वेदों का सार बताता हूँ, सुनो —**

**पुरुष के क्षर और अक्षर ये दो प्रकार शास्त्र में प्रसिद्ध हैं । उनमें से 'क्षर' शब्द से अचित् वस्तु का परिणाम रूप जो देह उस देह में विशिष्ट ब्रह्मा से स्तम्ब पर्यन्त सतस्त बद्ध जीवों को कहा जाता है, एवं 'अक्षर' शब्द से कूटस्थ सदा एकरूप विकार रहित मुक्त पुरुष परमेश्वर कहा जाता है ॥ १६ ॥**

**उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।**
**यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥१७॥**

सर्वाणि । भूतानि - अचित्संसृष्टाब्रह्मादिस्तम्बपर्यन्तजीवाः । क्षरः - क्षरति - अचित्सम्बन्धेन स्वप्रकाशस्वभावाच्चयवत इति क्षर इति उच्यन्ते, क्षरशब्देनोच्यन्त इत्यर्थः । बद्धानां बहुत्वेऽप्यचित्सम्बन्धरूपैकोपाधिसम्बन्धवशात्क्षर इत्येकवचननिर्देशः । कूटस्थः - कूटवत्तिष्ठति निर्विकारतयेति कूटस्थः - मुक्तपुरुषः । अक्षरः - नक्षरति - स्वप्रकाशत्वादि स्वभावान्नच्यवत इत्यक्षरः । इति उच्यते - अक्षरशब्देनोच्यत इत्यर्थः । अत्रापि मुक्तानां बहुत्वेप्यचिद्वियोगरूपैकोपाधिसम्बन्धादक्षर इत्येकवचननिर्देशः ॥ १६ ॥

परमात्मेति - सर्वेषामात्मेति । उदाहृतः - सर्वान्तरात्मत्वेन श्रुतिस्मृत्यादिप्रसिद्धः । उत्तमः पुरुषस्तु । अन्यः - परमात्मत्वादुत्तमपुरुषत्वादेव च बद्धान्मुक्ताच्चार्थान्तरभूत इत्यर्थः । एतदेवार्थांतरत्वं हेतुगर्भविशेषणौ विशदयति (यइति) अव्ययः - स्वरूपान्यथाभाव स्वभावान्यथाभावादि व्ययरहितः । अनेन स्वरूपान्यथाभाववतो ऽचेतनात्तत्सम्बन्धेन तदनुसारिणो बद्धात्पूर्वं स्वभावान्यथाभावयोग्यान्मुक्ताच्चान्यत्वसिद्धिः । ईश्वरः - सर्वनयन्ता । अनेननियाम्यान्नियन्तुरन्यत्वसिद्धिः । एवं विधः, यः । लोकत्रयं - लोक्यन्ते - अवलोक्यंत इति लोकाः - अचेतनबद्धमुक्ताः, तेषाम् त्रयम् । आविश्य - अन्तरात्मतयाऽधिष्ठाय । बिभर्ति - धारयति । अनेन भर्तव्याद्भर्तु रन्यत्वसिद्धिः । अत्र यद्यपि बद्धमुक्तवैलक्षण्यमेव प्रकृतम्, तथापि समान न्यायतया बद्धविशेषणभूताया अचितोपि वैलक्षण्यमुक्तमिति मन्तव्यम् ॥ १७ ॥

एवमुत्तमं पुरुषं पराक्त्वेन निर्दिश्य तत्त्वार्थस्स्मारितः । पुरुषोत्तम समाख्यावलेन तत्सर्वं स्वस्मिन्पर्यवसाययति—

यस्मात् - अव्ययत्वादि हेतोः । अहम् । क्षरं - बद्धपुरुषम् । अतीतः -

**किन्तु समस्त वस्तुओं के आत्मारूपी, परमात्मा—इस नाम से प्रसिद्ध, क्षर एवं अक्षर इन दो प्रकार के बद्ध और मुक्त पुरुषों से अतिरिक्त, और एक उत्तम पुरुष (पुरुषोत्तम) है । अव्यय एवं ईश्वर अर्थात् सर्वनियन्ता इस प्रकार के गुणों से विशिष्ट जो है वही पुरुषोत्तम है, जड़ एवं बद्ध और मुक्त इन लोकत्रय अर्थात् तीन प्रकार से प्रसिद्ध वस्तुओं में अन्तर्यामी रूप से प्रविष्ट होकर, उनका भरण अर्थात् धारण करके स्थित रहता है ॥ १७ ॥**





**यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।**
**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥१८॥**
**यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।**
**स सर्वविद्भजति मां सर्वभावेन भारत ॥१९॥**

अतिकान्तः, अनाघ्रात तत्स्वभाव इत्यर्थः । तथा । अक्षरादपि च - मुक्तादपि च । उत्तमः । बद्धान्मुक्ताच्चोत्कृष्टतम इत्यर्थः । अतः - हेतोः । लोके - लोकयति - वेदार्थमालोकयतीति लोकः - स्मृतिः, तस्मिन् । वेदे च । पुरुषोत्तमः । प्रथितः । "परंज्योतिरुपसम्पद्य स्वेन रूपेणाभि निष्पद्यते स उत्तम" इति श्रुतौ, "अंशावतारं पुरुषोत्तमस्य ह्यनादिमध्यान्तमजस्य विष्णो" रित्यादि स्मृतिषु चेत्यर्थः ॥ १८ ॥

एवं पुरुषोत्तमशब्द निर्वचनं तथाऽनुसन्धानार्थमिति व्यञ्जयन् पुरुषोत्तमत्ववेदनं स्तौति—

हे भारत । यः - पुमान् । एवं - पूर्वोक्तप्रकारेण । पुरुषोत्तमम् माम् । असम्मूढः - क्षराक्षरपुरुषाभ्यां स्वभावतः एकीकृत्य मोहरहितः । अव्ययत्व स्वभाव व्यापननियमनादियोगेन बद्धमुक्ताभ्यामत्यन्तविलक्षणतयैव । जानाति - यथावज्जानाति । सः - पुमान् । सर्ववित् - मत्प्राप्त्युपायं सर्वं वेत्तीति सर्ववित् । सर्वभावेन - वासुदेवस्सर्वमित्युक्तरीत्या । माम् । भजति । मत्प्राप्तिसाधनसकलवेदनसकलभजनप्रकारज्ञ इत्यर्थः ॥ १९ ॥

तस्यै तस्य पुरुषोत्तमत्व वेदनस्य रहस्यतया गोपनीयतमत्वं पारमार्थिकत्वं फलप्रकर्षं च व्यंजयन् निगमयति—

हे - अनघ - निष्पापेत्युपदेशयोग्यताख्यापनं । गुह्यतमं - अतिरह-

**क्योंकि अव्ययत्व आदिक स्वरूप के कारण मैं बद्ध पुरुषों से अतीत या उत्तम एवं मुक्त पुरुषों से भी उत्कृष्ट हूँ, इसीलिए मैं वेद, स्मृति, इतिहास और पुराणों में पुरुषोत्तम इस नाम से प्रसिद्ध हूँ ॥ १८ ॥**

**हे भरतवंश में श्रेष्ठ अर्जुन ! जो पुरुष पूर्वोक्त प्रकार से बद्ध और मुक्त चेतनों से विलक्षण एवं सभी जड़ वस्तु के अन्तर्यामी रूप से अवस्थित होकर उनका भरण पोषण एवं नियामक रूप से मुझ पुरुषोत्तम को जानता है, वह सब प्रकार से मेरा भजन करता है ॥ १९ ॥**

**इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।**
**एतद्बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारत ॥२०॥**

॥ इति श्रीमद्भगवद्गीतायां पञ्चदशोऽध्यायः ॥ १५ ॥

स्यम् । इदं - पुरुषोत्तमत्ववेदन प्रतिपादकम् । शास्त्रम् । मया सख्या सर्वज्ञेन चेति भावः । इति - पूर्वोक्तप्रकारेण । उक्तं - स प्रपञ्चमुपदिष्टमित्यर्थः । हे भारत - भरतकुलावतंसेत्याभिजात्योक्तिः । एतत् - मत्पुरुषोत्तमत्व वेदनम् । बुद्धा - यथाशास्त्रं विज्ञाय । बुद्धिमान् - मोक्षसाधनज्ञानवान्सन् । कृतकृत्यश्च । स्यात् - भवेत् । पुरुषोत्तमत्व साक्षात्कारं करोति - तेनैक-शास्त्रजन्यज्ञानमात्रेण मोक्षसाधनचेतनकर्तव्य सर्वकृत्यकारी च भवतीति भावः ॥ २० ॥

इति श्रीमद्भगवद्गीताभाष्यार्थसंग्रहतात्पर्यदीपे श्रीवरवरमुनिविरचितायां बालबोधिन्यपराभिधानायां गीतार्थ-संग्रहदीपिकायां

पञ्चदशोऽध्यायः ॥ १५ ॥



हे निष्पाप अर्जुन ! तुम उपयुक्त अधिकारी हो ऐसा समझकर अत्यन्त रहस्ययुक्त, सबकी अपेक्षा गोपनीय (गुप्त रखने योग्य) 'पुरुषोत्तमत्व' ज्ञान के प्रतिपादक शास्त्र का मैंने तुम्हें उपदेश दिया । हे भरतकुल श्रेष्ठ ! इस पुरुषोत्तमत्व ज्ञान को यथार्थरूप से जान जाने पर जो पुरुष ज्ञानवान हो जाता है अर्थात् मुझे ही दृढ़ भाव से पुरुषोत्तम जानता है, वह उस ज्ञान से मेरे इस रूप का साक्षात्कार कर लेता है ॥ २० ॥

॥ श्रीमद् भगवद्गीता के हिन्दी अनुवाद का श्रीपुरुषोत्तम योग नामक पन्द्रहवां अध्याय समाप्त हुआ ॥



**श्रीरस्तु ।**

दैवासुरसम्पद् विभागयोग नाम

# अथ षोडशोऽध्यायः

श्रीभगवानुवाच—

**अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।**
**दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १ ॥**

पूर्वाध्यायत्रयेण प्रकृतिपुरुषयोम्संयोगदशायां विवेकदशायां च लक्षणं प्रकृतिपुरुषसंसर्गस्य च गुणफलसंग तद्विपर्यय हेतुकत्वं सर्वात्रस्थास्वपि प्रकृति पुरुषयोर्भगवद्विभूतित्वं तत्रापि विभूतिभूताभ्यां च ताभ्यां बद्धमुक्तरूपाभ्या-मव्ययत्वस्वभावव्यापनभरणनियमनैर्वैक्षण्येन पुरुषोत्तमत्वेन याथात्म्यं च वर्णितम् । इदानीमुक्तस्य कृत्स्नस्यार्थस्य शास्त्राधीनतया शास्त्रवश्यतामुप-देक्ष्यन् पूर्वाध्यायांते पाण्डवानधशब्दाभ्यां सूचिताधिकारि विशेषनिरूपणाय दैवासुरवर्गयो श्शास्त्रवश्य तद्विपरीतयो विभागं श्रीभगवानुवाच—

अभयं - आगामिदुःखसाधनदर्शनजं दुःखं भयं, तद्राहित्यमभयम् । सत्त्वसंशुद्धिः - सत्त्वस्य - सत्त्वाश्रयस्यान्तः करणस्य, संशुद्धिः - सम्यक्शुद्धिः,

## षोडश अध्याय

**अध्याय का अर्थसंग्रह**

**दैवासुरविभागोक्तिपूर्विका शास्त्रवश्यता ।**
**तत्वानुष्ठानविज्ञानस्थेम्ने षोडश उच्यते ॥**
**( गीतार्थसंग्रह २० )**

इस अध्याय में इससे पूर्व कथित ईश्वर विषयक तत्वज्ञान एवं इस ज्ञान से होने वाला अनुष्ठान जो वेदादि शास्त्र के अनुकूल उसका दृढ़ निश्चय करने के लिए शास्त्रानुसार दैवी सम्पद् का संक्षेप में उल्लेख करके शास्त्र के प्रतिकूल अंश आसुरी सम्पद् का विस्तार से वर्णन किया गया है ।

हे अर्जुन ! जो पुरुष दैवी अर्थात् सात्विक सम्पत्ति से युक्त होकर जन्म लेते हैं, वे आगे कहे गये छब्बीस गुणों वाले होते हैं अर्थात् जो भगवद् आज्ञा का पालन

**अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।**
**दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥ २ ॥**

---

रजस्तमोनिवृत्तिः, तत्कार्यं कामक्रोधवंचनादिनिवृत्तिरिति यावत् । ज्ञानयोगव्यवस्थितिः - ज्ञानं - प्रकृतिविविक्तात्मज्ञानं, तदेवयोगः, तस्मिन्, व्यवस्थितिः - निष्ठा । दानं न्यायार्जितधनस्य पात्रे प्रतिपादनम् । दमश्च - मनोनिग्रहश्च । फलाभिसन्धिरहितभगवदाराधनरूपनित्यनैमित्तिकानुष्ठानं च । स्वाध्यायः - आराध्यब्रह्मपरवेदाभ्यासनिष्ठा । तपः एकादश्युपवासादि भगवत्प्रीणनशास्त्रीयभोगसंकोचः । आर्जवं वाङ्मनः कायानामेकरूपता ॥ १ ॥

अहिंसा - परपीडावर्जनम् । सत्यं - यथार्थविषय भूतहितवचनम् । अक्रोधः - परबाधाहेतुचित्तविकाररहितत्वम् । त्यागः - आत्महित प्रत्यनीक परिग्रहाभावः । शान्तिः - बाह्येन्द्रिय निग्रहः । अपैशुनं - परानर्थासूचनम् । भूतेषु - सर्वप्राणिषु । दया - दुःखासहिष्णुत्वं । अलोलुप्त्वं - विषयेषु निस्पृत्वम् । मार्दवं - प्रवेशार्हत्वम्, साधुसंगार्हत्वमिति यावत् । ह्रीः - अकृत्यकरणे व्रीडा । अचापलं - विषयसन्निधावप्यचंचलत्वम् ॥ २ ॥

---

**करने वाला पुरुष है वह देव कहा जाता है । इस देव सम्बन्धी सम्पत्ति या स्वभाव को दैवी सम्पत् कहा जाता है । इस भगवद् आज्ञा के अनुसार आचरण एवं स्वभाव को लेकर जन्म लेने वाले पुरुष में ये गुण होते हैं—(१) अभय—इष्ट वस्तु के वियोग से होने वाला दुःख और अनिष्ट वस्तु की प्राप्ति से होने वाले क्लेश का नाम भय इससे निवृत्ति को अभय, (२) सत्वसंसुद्धि--अन्तःकरण का रज एवं तमोगुण रहित भाव, (३) ज्ञानयोग व्यवस्थिति—प्रकृतिसे बिविक्त आत्मस्वरूप के विवेचन की निष्ठा, (४) दान--न्याय से अर्जित धन का सत्पात्र में दान, (५) दम--मन के भोग्य विषयों में उन्मुख होने पर उनसे निवृत्त करना, (६) यज्ञ—फल की कामना से रहित भगवद् आराधना रूप महायज्ञों का अनुष्ठान, (७) स्वाध्याय-- सम्पूर्ण वेद विभूतियों सहित भगवान के प्रतिपादक एवं भगवद् आराधना प्रणाली के प्रतिपादक हैं ऐसा जानकर वेदों के पढ़ने में निष्ठा, (८) तप--भगवत् प्रसन्नता के कारणभूत कर्म करने की योग्यता प्राप्ति के लिए कृच्छ, चान्द्रायण एवं एकादशी व्रत आदिक कायक्लेश रूप व्रतानुष्ठान, (९) आर्जव -अन्य के प्रति व्यवहार करते समय शरीर मन वाणी की भावना में एकता, (१०) अहिंसा--दूसरे को मानसिक या शारीरिक क्लेश न देना, (११) सत्य—देख सुनकर जो बात यथार्थ मन को लगे उसी प्रकार हित के वचन**





**तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।**
**भवन्ति सम्पदं दैवीमभिजातस्य भारत ॥ ३ ॥**

---

तेजः : दुर्जनैरनभिभवनीयत्वम् । क्षमा - परैः पीडयमानस्यापितान् प्रत्यविकृतचित्तत्वम् । धृतिः - महत्यामप्यापदि कृत्यनिर्धारणम् । शौचं - बाह्यान्तरकरणानां - शास्त्रीयकर्मयोग्यता । अद्रोहः - बलात्कारेण परान् स्ववशीकृत्य निरोधाद्यभावः । नातिमानिता - अस्थाने गर्वरहितता । इत्येतेगुणाः । हे भारत ! दैवीं - देवसम्बन्धिनीम् । सम्पदं - 'सत्त्वं देवगुणं विद्यादितरावासुरौ मतावि' तिविभागात् परमसात्विकानां सम्बन्धिनीं भगवदाज्ञानुवर्तन रूपां सम्पदम् । अभिजातस्य - अभिमुखीकृत्य अभिलक्ष्य जातस्य । यदा दैवी सम्पद्भवति - तदोत्पन्नस्येत्यर्थः । भवन्ति - "जायमानं हि पुरुषं यं पश्येन्मधुसूदनः । सात्विकस्सतु विज्ञेयस्सवै मोक्षार्थचिन्तक" इति भगवदनुग्रहलब्धा एतेगुणा इति भावः ॥ ३ ॥

अथासुरान् गुणानाह—

दम्भः - धार्मिकत्वख्यापनाय धर्मानुष्ठानम् । दर्पः - कृत्याकृत्याविबे-

---

**बोलना, (१२) आक्रोध--दूसरे को क्लेशकारी चित्तविकार का नाम क्रोध, उसका अभाव ही अक्रोध है, (१३) त्याग—आत्म कल्याण के विरोधी का संग त्यागना, (१४) शान्ति—इन्द्रियों की विषयों के प्रति तृष्णा के निवारण का अभ्यास, (१५) अपैशुन्य--दूसरे के प्रति हानिकारक वाक्य का न कहना, (१६) भूतेषुदया--सम्पूर्ण जीवों पर दया, (१७) अलोलुपता--विषयों के प्रति निष्पृहता, (१८) मार्दव--साधुसंग-प्राप्ति के लायक हृदय की कोमलता, (१९) ह्री--न करने योग्य कार्य के प्रति लज्जा, (२०) अचापल्य-- चाहने योग्य भोग्य विषयों के उन्मुख उपस्थित होने पर भी मन का चंचल न होना, (२१) तेज--दुर्जन के द्वारा पराभव न प्राप्त करने की शक्ति, (२६) क्षमा--दूसरे से क्लेश पाकर भी उसके ऊपर चित्त विकार शून्य भाव, (२३) धृति--महान् विपत्ति के समय में भी कर्तव्य निश्चित करने की शक्ति, (२४) शौच--बाह्य इन्द्रिय (हाथ पैर) और अन्तर इन्द्रिय (नेत्र, कर्ण मन) आदिक की पवित्रता अर्थात् शास्त्र प्रतिपाद्य कर्म करने की योग्यता पैदा करना, (२५) अद्रोह--दूसरे से विरोध न करना अर्थात् दूसरे की स्वतन्त्रता में विघ्न पैदा न करना, (२६) नातिमानता--गुरुजनों के सामने गर्वरूप अभिमान शून्य होता, ये छब्बीस गुण दैवी सम्पत् हैं ॥ १ - २ - ३ ॥**

**दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।**
**अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम् ॥ ४ ॥**
**दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता ।**
**माशुचः स्सम्पदं दैवीमभिजातोऽसि पाण्डव ॥ ५ ॥**

---

काद्विषयानुभवजन्यो हर्षः । अतिमानश्च - स्वविद्यावंशाननु गुणाभिमानश्च । क्रोधः परपीडाहेतुश्चित्तविकारः । पारुष्यमेव च - साधनामुद्वेगकरस्वभावश्च । अज्ञानं - परावरतत्त्व कृत्याकृत्याविवेकश्च । इत्येतेस्वभावाः । अत्र भवन्तीति क्रियापदं पूर्वश्लोकादनुवर्तते । हे पार्थ ! आसुरीं - राजस तामस सम्बन्धिनीम् । सम्पदं - भगवदाज्ञोल्लंघनरूपाम् । अभिजातस्य - अभिमुखी कृत्योत्पन्नस्य - तदेक प्रयोजनतयोत्पन्नस्य । भवन्ति ॥ ४ ॥

दैवी - देवसम्बन्धिनी । सम्पत् - भगवदाज्ञानुरूपासंगकर्मानुष्ठानम् । विमोक्षाय - क्रमेणमत्प्राप्तये । मता - सम्मता भवतीत्यर्थः । आसुरी - असुरसम्बन्धिनी । सम्पत् - काम्यनिषिद्धानुष्ठानम् । निबन्धाय - नितरांबन्धाय, क्रमेणाधोगतय इत्यर्थः । मता । तच्छ्रुत्वा स्वस्वभावानिर्धारणादतिभावा-

---

**दम्भ—अपने धार्मिक होने की प्रसिद्धि के लिए किया धर्मानुष्ठान, दर्प—कृत्य (करने योग्य) अकृत्य (न करने योग्य) विषय ज्ञान के लिए हर्ष, अतिमान—विद्या, कुल, धन, जन आदि से होने वाला अभिमान, क्रोध—दूसरे को दुःख देने वाला चित्त विकार, पारुष्य—साधुजनों को उद्वेग पैदा करने वाला कठोर स्वभाव, अज्ञान—श्रेष्ठ का निकृष्ट तत्व का एवं करने योग्य अथवा न करने योग्य विषय के ज्ञान का अभाव, हे अर्जुन ! जो पुरुष इन आसुरी सम्पत्ति के साथ जन्म लेता है अर्थात् जो भगवद् आज्ञा का उल्लंघन करने को जन्म लेता है उनमें उपरोक्त स्वभाव वर्तमान रहता है । भगवद् आज्ञा का उल्लंघन करने वाला ही असुर कहा जाता है ॥ ४ ॥**

**इस अध्याय के प्रथम तीन श्लोकों में कही दैवी सम्पत् एवं उससे होने वाला भगवद् आज्ञा रूप निर्लिप्त कर्म का अनुष्ठान मोक्ष प्राप्ति का हेतु होता है । चौथे श्लोक में आसुरी सम्पत् एवं उससे होने वाला काम्यकर्म और निषिद्ध कर्मों का अनुष्ठान संसार में बन्धन का कारण होता है, यही ज्ञानी जनों का मत है । हे परम सात्विक पाण्डुनन्दन अर्जुन ! तुम भगवद् आज्ञा परिपालन रूप दैवी सम्पत् विशिष्ट होकर जन्मे हो इसलिए दुःख न करो ॥ ५ ॥**





**द्वौ भूतसर्गौ लोकेस्मिन् दैव असुर एव च ।**
**दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥ ६ ॥**
**प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।**
**न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ७ ॥**

---

यार्जुनायैवमाह (माशुच इति) हे पाण्डव ! परमसात्त्विकस्य पाण्डोस्तनय । नहि धार्मिकाग्रेसरस्य सुता असुरा भवन्तीति भावः । अतः । त्वम् । दैवीम्-सम्पत्ति - भगवदाज्ञानुवृत्तिमेव । अभिजातः । असि । तदेकप्रयोजनतयैव-जातः । अतः । माशुचः । शोकं माकृथाः ॥ ५ ॥

परम सात्त्विकानां विवेचनायातिहेयत्वाच्चासुरसर्गमपि समुच्चित्य निरूपयति—

हे पार्थ ! अस्मिन्लोके - कर्मलोके । दैवः - देवसम्बन्धी । आसुर एव च - असुरसम्बन्धीचेति । द्वौ । भूतसर्गौ - प्राणिसृष्टी । अत्र सर्गशब्द उत्पत्तिप्रभृतिस्वभाववैलक्षण्यमुभयोरिति ज्ञापनाय । दैवः - देवसर्गः । विस्तरशः - बहुविस्तृतम् । प्रोक्तः - उपदिष्टः । आसुरं - असुरसर्गम् । मे - मत्तः । शृणु - सावधानमाकर्णयेत्यर्थः । देवानाम्मदाज्ञानुवृत्तिशीलानामाचारः कर्मयोग ज्ञानयोग भक्तियोगरूपो बहुशः प्रतिपादितः, मदाज्ञोल्लङ्-घनशीलानामसुराणामाचारं च मत्सकाशाच्छृण्विति भावः ॥ ६ ॥

तमेवाह—

आसुराः - असुरप्रकृतयो जनाः । प्रवृत्तिं च - प्रवृत्तिलक्षणमभ्युदय-

---

**हे अर्जुन ! इस संसार में दैवी और आसुरी ये दो प्रकार के जीव (मनुष्य) पैदा होते हैं । उनमें से मेरी आज्ञा के अनुवर्तक दैवी गुण सम्पन्न जीवों का विषय एवं इस प्रकार जीव सृष्टि का कारणभूत सात्विक कर्मानुष्ठान का विषय कर्मयोग, ज्ञानयोग और भक्तियोग का पहले विस्तार से वर्णन किया जा चुका है । अब आसुरी गुण सम्पन्न जीव सृष्टि एवं उसका कारण जो मेरी आज्ञा का उल्लंघन रूप शास्त्र विरुद्ध पापों का आचरण यह सम्पूर्ण विषय मुझसे सुनो ॥ ६ ॥**

**अब श्लोक ७ से १८ पर्यन्त आसुरी प्रकृति वाले लोगों का विस्तार से वर्णन करते हैं—**

**आसुरी प्रकृति वाले लोग अपनी सांसारिक उन्नति के लिए प्रवृत्ति मार्ग के धर्म एवं मोक्ष साधनरूप निवृत्ति मार्ग के धर्म को नहीं जानते, उनके भीतर देह और मन की पवित्रता नहीं एवं सत्य निष्ठा भी नहीं होती है ॥ ७ ॥**

**असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।**
**अपरस्परसम्भूतं किमन्यत्कामहैतुकम् ॥ ८ ॥**

साधनं कर्म च। निवृत्तिं च - निवृत्तिलक्षणम्मोक्षसाधनभूतं कर्म च। न विदुः - यथावन्न जानन्ति। शौचं - वैदिककर्मयोग्यतापादिका बाह्यान्तरकरणशुद्धिश्च। तेषु। न विद्यते। आचारोऽपि च तद्धेतुसन्ध्यावन्दनादिश्च। तेषु। न विद्यते। सत्यं - भूतहितं यथार्थवचनं च। तेषु। न विद्यते ॥ ७ ॥

ते - आसुरप्रकृतयः पुरुषाः। जगत्। असत्यम् - 'तस्यहवा एतस्य ब्रह्मणो नाम सत्य' मिति 'तानिहवा एतानि त्रीण्यक्षराणि भवन्ति सत्य' मिति 'तद्यत्सदमृतं - यद्यत्तन्मर्त्यं - अथयद्यं - तेनोभौ नियच्छ' तीति निरुक्तेः, सत्यं ब्रह्म, कारणतया यस्य नास्ति - तदसत्यं - अब्रह्मकारणकमित्यर्थः। तथा। अप्रतिष्ठं - नास्ति प्रतिष्ठा - आदिकूर्मशेषादिस्थितिकारणं; यस्यतत् - अप्रतिष्ठम्। अनीश्वरं - न विद्यते ईश्वरः - नियन्ता, यस्य तत्तथाभूतं च। आहुः। 'अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तत' इत्युक्तरीतया - जगतो मदेकप्रभवत्वं मदेकनिष्ठत्वं मदेकनियाम्यत्वं च न जानन्तीत्यर्थः। अपरस्पर सम्भूतं - परस्परेण - योषित्पुरुषसंयोगमात्रेण, सम्भूतं - जन्यम्, अतथाभूतं च। किं अन्यत् अस्ति। इत्याहुः। सर्वं पशुमनुष्यादिकं हि परस्परसंयोगजन्यमुपलभ्यते, स्वेदजादिष्वपि मनुष्यादिदृष्टन्याय एवांगीकार्यः, स्वेदादिरपि सहकारिमात्रम्। अतः। सर्वं जगत्। कामहेतुकं - योषित्पुरुसमागमादिदृष्टमात्रकारणकम्। अतः पूर्वपूर्वनगरवृत्तान्तन्यायेन कल्पेकल्प ईश्वरशिल्पिनो जगन्नगरवृत्तान्त इति प्रद्वेषादपलपन्तीति भावः ॥ ८ ॥

अल्पबुद्धयः - अल्पा - निहीना, बुद्धिः येषान्ते; शरीरमहं जानामीत्यनुभवेपि घटादिवज्ज्ञेयं शरीरं ज्ञातारमात्मानं च विवेचयितुमशक्तबुद्धयः। अतएव। नष्टात्मानः - कदाचिदप्यदृष्टदेहातिरिक्तात्मानः पुमांसः। एनां- पूर्वोक्ताम्। दृष्टिं - आसुरीं बुद्धिं, विपरीतबुद्धिम्। अवष्टभ्य - अवलंब्य।

**वे आसुरी प्रकृति वाले लोग इस जगत् को मिथ्या, ब्रह्म में प्रतिप्ठित नहीं है, यह जगत् ईश्वर के द्वारा सृष्ट नहीं है इस प्रकार कहते रहते हैं। वे कहते हैं कि यह जगत् स्त्री-पुरुष संसर्ग के बिना और किस प्रकार उत्पन्न हो सकता है अतएव यह जगत् स्त्री पुरुष दोनों के द्वारा कामवासना जनित है ॥ ८ ॥**





**एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।**
**प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ ९ ॥**
**काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।**
**मोहाद्गृहीत्वासद्ग्राहान् प्रवर्तन्तेऽशुचिव्रताः ॥१०॥**
**चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।**
**कामोपभोगपरमा एतावदिति निश्चिताः ॥११॥**

उग्रकर्माणः - परेषां हिंसापराः ; अशुभाचाराः संसर्गिणामपि दोषावहा इति भावः। अतएव। अहिताः - शत्रवस्सन्तः। जगतः क्षयाय। प्रभवन्ति। देवान् भावयतानेनेति भगवदुक्तपरस्परभावनारहितस्वाचारेण परानपि मोहयन्त स्तापत्रयाभिभूततया कृत्स्नं जगन्नाशयन्तीति भावः ॥ ९ ॥

पूर्वं कामो जगद्धेतुरुक्तः, अतस्तदाश्रयांगभूतादम्भाद्यशुचिवृत्तान्ताश्च सम्पद्यन्त इत्याह—

दुष्पूरं - अतिदुर्लभविषयत्वात्पूरयितुमशक्यम्। कामं कामपुरुषार्थम्। आश्रित्य - जगत्कारणतया चावलंब्य। मोहात् - अज्ञानात्। असद्ग्राहान् - गृह्यन्ते - परिगृह्यन्ते कामपुरुषार्थं सिद्ध्यर्थमिति ग्राहाः - स्रक्चन्दनादयः, असंतः - अन्यायार्जिताश्च - ते ग्राहाश्च असद्ग्राहाः - तान्। गृहीत्वा - संगृह्य। दम्भमानमदान्विताः - दम्भः - महत्त्वाभिनयः, मानः - तत्कृतचित्तसमुन्नतिः, मदः - तत्कृतगर्वः, तैरन्विताः - युक्ताः। अतएव। अशुचि

**अल्पबुद्धि वाले अतएव नष्टात्मा, आत्मा के सम्बन्ध में अज्ञानी पुरुष, पूर्वोक्त आसुरी बुद्धि का अवलम्बन करके दूसरे से हिंसा करने वाले होते हैं, अतएव वे शत्रु होकर जगत् का नाश करने के लिए उत्पन्न होते हैं ॥ ९ ॥**

**दुर्लभ कामनाओं के वशीभूत होकर अज्ञानवश असत् उपायों से कमाये धन का संग्रह करके दम्भ, मान और मदयुक्त होकर एवं शास्त्र विरुद्ध आचार वले होकर विचरण करते रहते हैं ॥ १० ॥**

**ये कामोपभोग को ही परम प्रयोजन मानते हैं। इससे अधिक और कोई उपभोग्य विषय नहीं, ऐसा उनका दृढ़ निश्चय होता है। आज या कल मरना होगा, ऐसी अवस्था में भी असीम काल तक या प्रलय काल तक स्थायी भोग्य विषयों का चिन्तन करते हुए समय बिताते रहते हैं ॥ ११ ॥**

आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
ईहन्ते कामभोगार्थमन्यायेनार्थसंचयान् ॥१२॥
इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥१३॥

व्रताः - शास्त्राविहित व्रतयुक्तास्सन्तः । प्रवर्तन्ते - निर्भीकं संसरन्तीत्यर्थः ॥ १० ॥

एवं प्रवृत्त्यनन्तरविकारानाह—

कामोपभोगपरमाः - कामोपभोगएव - परमः - प्राप्यः पुरुषार्थः येषान्ते - तथाभूताः । एतावदिति - एतदेवफलं - नातोऽधिकम्फलं स्वर्गमोक्षादिकमस्तीति । निश्चिताः - सञ्जातनिश्चयाः । अपरिमेयां - असंख्यातविषयाम् । अतएव । प्रलयान्तां, प्रलयः प्राकृतप्रलयः, अन्तः - विषयसाधनावधिः, यस्या स्तां, चिन्तां च । उपाश्रिताः - उपागताः । अद्यश्वोवा मुमूर्षवोऽपि प्राकृतप्रलयपर्यन्तकालनिष्पाद्यविषयसिसाधयिषापरा इति भावः ॥ ११ ॥

आशापाशशतैः - आशाएवपाशाः - रज्जवः, तेषां शतैः । बद्धाः - नियमिताः । कामक्रोधपरायणाः - कामक्रोधैकनिष्ठास्सन्तः । कामभोगार्थं - कामपुरुषार्थानुभवार्थं । अन्यायेन । अर्थसंचयान्प्रति । ईहन्ते । कामभोगेच्छयाऽर्थसंचयानन्यायेनैवार्जयन्तीत्यर्थः ॥ १२ ॥

चिन्ताविषयानन्त्यमेवाह—

इदं - क्षेत्रपुत्रादिकम् । मया - मत्सामर्थ्येनैव । अद्य । लब्धं -

ऐसा पुरुष बहुत प्रकार की आशाओं की रस्सियों में जकड़ा हुआ एवं काम-क्रोध परायण हो, काम्य विषयों के उपभोग के लिए अन्याय पूर्वक धन का अर्जन (संग्रह) करने के लिए चेष्टा करता रहता है ॥ १२ ॥

ऐसा पुरुष अपने मनमें सोचता है कि घर, खेत, स्त्री पुत्र, परिजन आदि सब विषय मेरे सामर्थ्य से किये गये हैं और मेरे अपने सामर्थ्य से प्राप्त हुए हैं, मैं अपने मनोरथ को अपनी शक्ति से ही पूर्ण करूंगा, यह धन मैंने अपने पुरुषार्थ से पैदा किया है, पाया है। फिर से मैं इस धन को अपनी शक्ति अपने बल से अर्जित करूंगा। (किन्तु ये लोग यह नहीं सोचते हैं कि यह सब धन, जन, पुत्र, परिजन अपने पूर्व कर्मों के अनुसार अद्रष्ट या प्रारब्ध से होते हैं) ॥ १३ ॥





असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ॥१४॥
आढ्योऽभिजनवानस्मि कोऽन्योस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥१५॥

प्राप्तम् । नादृष्टादिना । तथा । इमम् । मनोरथम् । प्राप्स्ये - स्वसामर्थ्येनैव प्राप्तो भविष्यामि, नादृष्टादिना । इदम् । मत्सामर्थ्येनैव सिद्धं धनम् । अस्ति । इदमपि धनम् - अपरंधनमपि । पुनः । मे । भविष्यति । स्वसामर्थ्येनैव लभ्यतइति भावः ॥ १३ ॥

एवमिष्टप्राप्तेस्स्वसामर्थ्यमात्रसाध्यत्वमुक्त्वा अनिष्टनिवृत्तेरपि तथाभूतत्वमाह—

असौ शत्रुः । मया । हतः - मत्सामर्थ्येनैव हतः । अपरानपि च - हतशिष्टानपि शत्रून् । हनिष्ये - स्वबलेनैव संहरिष्ये । अतएव । अहम् । ईश्वरः - स्वतन्त्रस्सर्वेषामपि नियामकः । अहम् । भोगी - सकलविषयानुभवसमर्थः । सिद्धः - सिद्धसंकल्पः । बलवान् - स्वतस्सिद्धबलवान् । सुखी - स्वतः - पुत्रजन्मादिसुखसम्पन्नः, नतु धनजिघृक्षया वंचकपरिकल्पितेन परिकरेणेति भावः ॥ १४ ॥

आढ्यः - स्वतएव सकलैश्वर्यसम्पन्नः । अभिजनवान् सत्कुलप्रसूतश्च । अस्मि । मया । सदृशः । अन्यः । कः अस्ति - न कश्चिदप्यस्ति, किं त्वहमेव मत्सदृश इति भावः । यक्ष्ये दास्यामिविडम्बनार्थं यागदानादिकं करिष्ये । मोदिष्ये - यजमानत्वदातृत्वादिप्रसिद्ध्यचैव सन्तोष प्राप्स्यापि । इति -

(ऐसे लोग सोचते हैं कि मन्दबुद्धि या दुर्बल लोग अद्रष्ट की कल्पना करते हैं)।

यह बलवान् शत्रु मैंने मारा है, और अन्य शत्रुओं को भी मैं ही अपने बाहु-बल से मारूंगा। मैं स्वतन्त्र हूं और दूसरों का नियन्ता हूँ। मैं अपने सामर्थ्य से विषयों का भोग करता हूँ। मैंने अपनी शक्ति से सिद्धि प्राप्त की है। मैं स्वयं ही बलवान एवं सुखी हूं ॥ १४ ॥

मैं धनवान हूँ, मैं उत्तम कुल में जन्मा हूँ, मेरे समान अन्य कोई है? मैं अपनी सामर्थ्य से यज्ञ करूंगा, दान दूंगा एवं आनन्द प्राप्त करूंगा। आसुरी प्रकृति के लोग अज्ञान (शरीर एवं शरीर सम्बन्धी वस्तुओं को अपना मानना) से विमोहित होकर इस प्रकार अपने मन में सोचते हैं ॥ १५ ॥

**अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।**
**प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥१६॥**
**आत्मसम्भाविताः स्तब्धा धनमानमदान्विताः ।**
**यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥१७॥**

---

इत्थम् । अज्ञानविमोहिताः - ईश्वरानुग्रहनैरपेक्ष्येणलौकिकवैदिककर्मशक्ता इति मन्यन्त इत्यर्थः ॥ १५ ॥

अनेकचित्तविभ्रान्ताः - अनेकैः - बहुभिः, चित्तैः - इदं करिष्ये - एवं करिष्ये - इदं करिष्यामीत्यादि चिन्तावृत्तिभिः, विभ्रान्ताः विपरीतज्ञानवन्तः । मोहजालसमावृताः - मोहः - अज्ञानम्, स एव जालं - आनायः, तेन-समावृताः - वेष्टिताः । कामभोगेषु प्रसक्ताः - प्रकर्षेणासक्ताः । "न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूयएवाभिवर्धते" इति न्यायेनात्यासक्ता इति भावः । अशुचौ - पूयशोणितादिमयत्वादत्यन्ताशुद्धनरके । पतन्ति - इदं कृतमिदं कार्यमिदमन्यत्कृताकृतम । एवमीहासयुक्तं कृताकृत' मितिन्यायेन - अकृतसकलकर्तव्यमेवैनं कृतान्तो बलादाकृष्य तत्तत्कर्मानुगुणमेवापरिशुद्धे नरके निपातयतीति भावः ॥ १६ ॥

आत्मसम्भाविताः - स्वयमेवात्मना बहुमानं कुर्वन्त इत्यर्थः । स्तब्धाः - परिपूर्णाः - कृतकृत्यमात्मानम्मन्वाना इत्यर्थः । धनमानमदान्विताः - धनेन, मानेन - विद्याभिजनाभिमानेन च, यो मदः - तेनान्विताः - युक्ताः । अतएव । अहंकारम् - ईश्वरादृष्टनिरपेक्षमहमेव सर्वं करोमीत्येवं रूपं स्वस्वातन्त्र्य-

---

**ये आसुरी-प्रकृति के मनुष्य प्रारब्ध एवं ईश्वर का कर्तापन न मानकर अपनी शक्ति एवं बल से सब काम करने में स्वयं को सक्षम समझकर अहङ्कार युक्त होकर 'यह कार्य मैं इस प्रकार करूँगा' इस प्रकार बहुत से संकल्प विकल्प रूप चिन्ताओं से विभ्रान्त, अज्ञान और मोह जाल में बद्ध होकर काम्य विषयों के उपभोग में अत्यासक्त हो मरणोपरान्त घोर नरक में पड़ते हैं ॥ १६ ॥**

**वे स्वयं अपनी प्रशंसा करने में तत्पर रहते हैं, स्वयं को काम्यवस्तुओं से ही परिपूर्ण, कृतकृत्य मानकर धन, विद्या, परिजन आदि के अभिमान में मत्त हो 'ईश्वर और अदृष्ट के पराधीन न होकर मैं स्वयं ही सब कार्य कर लूँगा' इस अहङ्कार 'सम्पूर्ण कार्यों के सम्पादन में मेरी शक्ति ही पर्याप्त है' इस बल 'मेरे समान और कौन है' इस घमण्ड (दर्प) 'इच्छा मात्र से मेरी समस्त कामना पूर्ण होंगी' इस काम 'में अपने अनिष्टकारीकोमैं मार डालूँगा इस क्रोध आदिक आसुरी गुणोंके आधीनहोकर**





**अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ।**
**मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥१८॥**
**तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।**
**क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥१९॥**

---

भ्रमम् । बलं - कर्तुमकर्तुमन्यथाकर्तुं च पर्याप्तमित्यनुसन्धीयमानं स्वबलम् । दर्पं - निस्समाभ्यधिकोऽहमित्यौद्धत्यम् । कामं - एवं विधस्य मम संकल्पमात्रेणैव सर्वं सम्पत्स्यइति कामम् । क्रोधं च - मत्संकल्पप्रतिघातिनः स्वयमेवहनिष्यामीति चित्तविकृतिं च । एतानासुरसर्गगुणान् । संश्रिताः । अतएव । आत्मपरदेहेषु - आत्मनः - स्वस्य, परेषां च - देहेषु । मां - सर्वस्यचाहं हृदिसन्निविष्टो मत्त इत्याद्युक्तप्रकारेण नियामकत्वेनावस्थितम्माम् । अभ्यसूयकाः - मद्गुणेषु दोषानाविष्कुर्वन्तः । ईश्वर स्वातन्त्र्ये किङ्कर्मणा - कर्मणः फलसिद्धौ किमीश्वरेणेत्याद्यसूयापराः । प्रद्विषन्तः - असहिष्णुतया मदाज्ञोल्लंघनपरा इति भावः । ते - आसुराजनाः । दम्भेन - यष्टृत्वख्यापनारूपेण हेतुना । अविधिपूर्वकम् । नामयज्ञैः - सोमयाज्यादि नामप्रयोजनैर्यज्ञैः । यजन्ते - यज्ञादीननुतिष्ठन्तीत्यर्थः ॥ १७-१८ ॥

अहं - सर्वसमः । अशुभान् - न विद्यते, शुभं - कल्याणम्मद्गुणविभूत्यादि ज्ञानं,येषां तानशुभान् । नराधमान् - सामान्यतो ज्ञातेऽपि मत्स्वरूपरूपगुणविभूत्यादौ मदौन्मुख्यानर्हान् । क्रूरान् - मदौन्मुख्यरहितानां मत्स्वरूपादौ ज्ञातेति कूटयुक्तिभि स्तपलपत इत्यर्थः । द्विषतः - दृढमुत्पन्नेति मत्स्वरूपादि-

---

**कुबुद्धि से मुझ ईश्वर में दोष निकाल करके, अपने तथा दूसरों के शरीर में सब कार्यों के प्रवर्तक रूप से स्थित मुझ पुरुषोत्तम के प्रति असूया (निन्दा) एवं द्वेष करते हुए ऐसे आसुरी प्रकृति के लोग 'मैं प्रसिद्ध यज्ञ कर्ता हूँ' इस दम्भ से युक्त हो शास्त्रविधि उल्लंघन पूर्वक अपना नाम, प्रसिद्धि के लिए आडम्बर के साथ विभिन्न यज्ञों को करते हैं ॥ १७-१८ ॥**

**जो मेरी निन्दा या मुझसे द्वेष करता है ऐसे—**

**अशुभ आचार परायण क्रूर इन नराधम लोगों को मैं बार-बार जन्म, जरा (बुढ़ापा), मरण रूप संसार में, मेरे प्रतिकूल भावों से युक्त, आसुरी योनि में बारम्बार डालता ही रहता हूँ । अर्थात् ऐसी आसुरी योनि में उत्पन्न कर तदनुगुण कुबुद्धि एवं क्रूर बुद्धि भी मैं ही उन्हें प्रदान करता हूँ ॥ १९ ॥**

**आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।**
**मामप्राप्यैव कौन्तेय ततो यांत्यधमां गतिम् ॥२०॥**
**त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।**
**कामः क्रोधस्तथालोभस्तस्मादेतत्त्रयं त्यजेत् ॥२१॥**

---

ज्ञाने तेनैव मयि निरूढ़वैरान् । तान् - आसुरान् जनान् । संसारेषु - सम्यक् अविच्छिन्नतया सरन्ति - परिवर्तन्त इति संसाराः - जन्मजरामरणादिरूपेण परिवर्तमानास्सन्तानाः - संसरणादि परिवृत्तयइति यावत्, तेषु । तत्रापि । आसुरीषु - असुरसम्बन्धिनीषु । योनिष्वेव । अजस्रं - निरन्तरम् । क्षिपामि निपातयामि । 'एषएव साधुकर्मकारयति तं यमेभ्यो लोकेभ्य उन्निनीषति - एष एवासाधुकर्मकारयति तं यमधो निनीषती' ति श्रुत्युक्तरीत्या पूर्वपूर्व तत्तत्कर्मस्वभावानुगुणक्रूरबुद्धयादि प्रदानेनाधो नयामीत्यर्थः । अतो न वैषम्य नैर्घृण्यादिगन्धोऽपीति भावः ॥ १९ ॥

उत्तरोत्तरमपकर्षपरम्परामाह—

हे कौन्तेय ! आसुरीं - असुरसम्बन्धिनीम् । योनिं - मदानुकूल्य प्रत्यनीकं जन्म । आपन्नाः - प्राप्ताः पुमांसः । जन्मनि जन्मनि - पुनः पुनरपि प्रत्यासुरजन्म । मूढाः - मद्विषयविपरीतज्ञानास्सन्तः । माम् । अप्राप्यैव - मत्प्राप्तिहेतुं - अस्ति भगवान् सर्वेश्वरोवासुदेवः पुरुषोत्तम इति शास्त्रजन्यज्ञानमनवलम्ब्यैव । ततः - आसुरजन्मतः । अधमां नीचान्नीचतराम् । गतिं रौरवादिकां गतिं । यान्ति ॥ २० ॥

अवश्यपरिहरणीयस्यासुरस्वभावस्यापि मूलहेतुमाह—

कामः । क्रोधः । तथा । लोभः । इति । त्रिविधम् । इदं - वस्तुचक्रम् । आत्मनः नाशनम् - आत्मापहारकम् नरकस्य - आसुरस्वभावाख्यस्य

---

**हे अर्जुन ! इस प्रकार आसुरी योनि में उत्पन्न तथा प्रत्येक जन्म में मेरे विषय में ज्ञान प्राप्त करने में असमर्थ पुरुष मुझे एवं मेरा ज्ञान प्राप्त न करके फिर से अधिकतर अधम योनि को प्राप्त करता है ॥ २० ॥**

**आत्मनाशक इस असुर प्रकृति का मूल कारण बताते हैं—**

**काम, क्रोध एवं लोभ ये तीन बातें नरक के तीन द्वार हैं । ये आत्मस्वरूप का नाश करने वाले हैं, इसलिये इन्हें घोर नरक के हेतु जानकर इन तीनों को दूर से ही त्याग देना चाहिये ॥ २१ ॥**





**एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।**
**आचरत्यात्मानः श्रेयस्ततो याति परां गतिम् ॥२२॥**
**यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।**
**न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥२३॥**

---

महानरकस्य । द्वारं - प्रवेशोपायः । तस्मात् - महानर्थसाधनत्वात् । एतत्त्रयं - त्रीन् कामक्रोधलोभान् । त्यज । रौरवादयो हि स्वानुभवेन पापक्षयहेतवः । आसुरस्वभावस्तु पापनिदानतयाऽतिहेयइति तद्धेतवः काम क्रोधलोभा दूरतस्त्याज्याइति भावः ॥ २१ ॥

हे कौन्तेय ! तमोद्वारैः - तमसः - आसुरस्वभावस्य, द्वारैः - प्रवेशमार्गैः । एतैः । त्रिभिः - कामादिभिः । विमुक्तः । नरः । आत्मनः । श्रेयः मदानुकूल्यादिरूपम् । आचरति । ततः - मदानुकूल्याचरणादेव हेतोः । पराम् गतिम् - परमप्राप्यम्मामेव । याति - मदानुकूल्यमत्प्रीत्यादिद्वारा मां प्राप्नोतीत्यर्थः । ॥ २२ ॥

शास्त्रानादरोप्यस्य नरकस्य प्रधानहेतुरित्याह—

यः - पुमान् । शास्त्रविधिं - शास्त्रं - वेदः, तद्रूपं विधिम् - इदं कुरु इदं माकार्षीरित्याद्यनुशासनम् । उत्सृज्य - उल्लंध्य - कामकारतः - स्वेच्छानुसारात् । अथ केन प्रयुक्तोयमिति प्रश्नोत्तरभूतेन - कामएष क्रोधएष इति शास्त्रेण निर्दिष्टकामप्रयुक्तमार्गेणेत्यर्थः । वर्तते - प्रवर्तते । सः । सिद्धिं - स्वर्गादिविषयां सिद्धिम् । नात्राप्नोति । सुखं - ऐहिकमपि सुखम् । ना

---

**हे कुन्ती के पुत्र अर्जुन ! नरक के द्वार रूप एवं मुझसे वैर भाव उत्पन्न कराने में हेतु काम, क्रोध, लोभ इन तीन प्रकार के स्वभाव का परित्याग कर जो मनुष्य अपनी आत्मा का कल्याण करने वाला आचरण करता है अर्थात् मद्विषयक ज्ञान प्राप्त कर मेरी प्राप्ति के अनुकूल आचरण करता है, तब वह मेरी प्राप्तिरूप परागति प्राप्त करता है ॥ २२ ॥**

**शास्त्र के प्रति अवज्ञा ही इस नरक प्राप्ति का प्रधान कारण है, बताते हैं—**

**जो पुरुष वेदों में कहे गये विधि निषेध वाक्यों का उल्लङ्घन करके अपनी कामनाओं के परवश होकर अपनी इच्छा के अनुसार मार्ग पर चलते हैं वे किसी भी प्रकार से पारलौकिक सिद्धि नहीं कर पाते हैं न इस लोक में सुख प्राप्त करते है न मुझे ही प्राप्त कर पाते हैं ॥ २३ ।**

**तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।**
**ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥२४॥**

॥ इति श्रीमद्भगवद्गीतायां षोडशोऽध्यायः ॥ १६ ॥

---

वाप्नोति । अनाराधितगोविन्दास्ते नरा दुःखभागिन इति ह्युच्यते । पराम् । गतिं - मुक्तिम् । नावाप्नोति - सुतरां न प्राप्नोतीत्यर्थः ॥ २३ ॥

तस्मात् - अविधिपूर्वककर्मणो निष्फलत्वात् । कार्याकार्यव्यवस्थितौ कार्यं - शास्त्रवश्यकर्तव्यं भगवदाराधनरूपं कर्म, अकार्यं - शास्त्रवश्यस्याकर्तव्यं भगवदाज्ञोल्लंघनरूपं कर्म, तयोरवश्यज्ञेययोः, व्यवस्थितौ व्यवस्थायाम् । ते - तव । शास्त्रं - स्मृतीतिहासपुराणोपबृंहितवेदः । प्रमाणम् । तस्मात्कारणात् । शास्त्रविधानोक्तं - शास्त्रविहितं पुरुषोत्तमाख्यं तत्त्वं तत्प्रीणनं तदाराधनरूपं च कर्म । ज्ञात्वा - यथावद्विज्ञाय । कार्यं - उपादेयं कर्म पुरुषोत्तमाराधनाख्यम् । इह - अस्मिन्लोके । कर्तुं - आचरितुम् । अर्हसि । अयमर्थः - सर्वोत्तरेण सत्कुलप्रसूतेन त्वया पुरुषकौशलातिशयपरिग्राहितेन मोहनशास्त्रवश्यतां विहाय शब्दब्रह्मचोदितत्वात्तच्चोदित तदाराधनकर्मयोगज्ञानयोगभक्तियोगेभ्यः कदादिपि न प्रमदितव्यमिति ॥२४॥

इति श्रीमद्भगवद्गीताभाष्यार्थसंग्रहतात्पर्यदीपे श्रीवरवरमुनिविरचितायां
बालबोधिन्यपराभिधानायां गीतार्थ-
संग्रहदीपिकायां
षोडशोऽध्यायः ॥ १६ ॥

---

इसलिये अविधि पूर्वक अशास्त्रीय कर्म का अनुष्ठान निष्फल होता है इस शास्त्रीय करणीय कर्म एवं भगवत् आज्ञा उल्लङ्घन रूप कर्म का निर्धारण करने के लिये, वेद, इतिहास, पुराण शास्त्र ही प्रमाण हैं। इसलिये शास्त्रविहित कर्म का यथार्थ रूप जानकर इस संसार में उसके अनुरूप शास्त्रविहित कर्मों का अनुष्ठान करना तुम्हारा कर्तव्य है ॥ २४ ॥

॥ इति दैवासुरसम्पद्विभागयोगनामक षोडश अध्याय समाप्त ।



श्रीरस्तु

श्रद्धात्रयविभागयोग

# अथ सप्तदशोऽध्यायः

अर्जुन उवाच

**ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः ।**
**तेषां निष्ठा तु का कृष्ण सत्वमाहो रजस्तमः ॥ १ ॥**

---

पूर्वाध्याये भगवताऽधिकारिविशेषनिर्णयार्थं देवासुरविभागमर्थात्प्राप्यतत्त्वमुपायतत्त्वं च निरूप्य - अध्यायान्ते - यश्शास्त्रविधिमुत्सृज्येत्यत्र शास्त्रविहितस्य सफलत्वं शास्त्राविहितस्य निष्फलत्वं चोक्तम् । इदानीमशास्त्रविहितेष्वपि वेदबाह्यागममूलेषु श्रद्धाधर्माभिसन्धिपूर्वक प्रेक्षावद्वृद्ध परम्परागतेषु दृष्टफलरहितेषु बहुवित्तव्ययायाससाध्येषु यागतपोदानादिषु केवलशिष्टाचारमूलकधर्मेष्वेवादृष्टफलावश्यं भावं मन्वानस्तेषु गुणतः फलविशेष बुभुत्सयाऽर्जुन उवाच—

ये - पुमांसः । शास्त्रविधिं - शास्त्रानुशासनम् । उत्सृज्य - उल्लंघ्य । श्रद्धया - इदम्फलमनेनावश्यम्भवतीति फलपर्यन्तविश्वासेन । अन्विताः - युक्तास्सन्तः । यजन्ते - यागदानादिकं कुर्वन्ति । हे कृष्ण ! तेषां - श्रद्धावतां पुंसाम् । निष्ठातु - नितरान्तिष्ठन्त्यत्रेति निष्ठा - प्रतिष्ठातु, फलहेतुर्रति यावत् ।

---

## सप्तदश अध्याय

**अध्याय का अर्थ संग्रह**

अशास्त्रमासुरं कृत्स्नं शास्त्रीयं गुणतः पृथक् ।
लक्षणं शास्त्रसिद्धस्य त्रिधा सप्तदशोदितम् ॥
( गीतार्थसंग्रह–२१ )

शास्त्रविधि को छोड़कर जितने कार्य हैं सब आसुरी गुण सम्पन्न, शास्त्रविधि के अनुसार किये सभी कार्य सात्विक, राजसिक और तामसिक रूप से तीन प्रकार के गुणों से सम्पन्न होते हैं एवं वेद विहित शास्त्रसिद्ध जितने विषय हैं वे सब "ओम्"

श्रीभगवानुवाच

**त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।**
**सात्विकी राजसी चैव तामसी चेति तां शृणु ॥ २ ॥**

तु शब्देन शास्त्रविहितनिष्ठायाः कामकारस्य च व्यावृत्तिः । का - कीदृशी । तामेव विशषतः पृच्छति (सत्त्वमिति) अत्र स्त्रीलिङ्गान्तः किं शब्दः - नपुंसकलिंगत्वेन परिणतः किमित्यनुवर्तते । किं सत्त्वं - सत्त्वनिष्ठा । आहोस्वित् । किंरजः - रजोनिष्ठा । उत । किन्तमः - तमोनिष्ठा । अवेदमूलकस्यापि श्रद्धापूर्वकत्वात्सत्त्वकोटिशंका, शास्त्रोल्लंघनात्तमः कोटिशंका, श्रद्धाशास्त्रोल्लंघनाद्रजः कोटिशंकेति भावः । फलोद्देशेन बाह्यागमसिद्धयागानुष्ठातृणां को गुणः फलोपकारीति भावः ॥ १ ॥

एवं पृष्टो बाह्यागममूलकस्य कर्मणो निष्फलत्वादेतत्प्रश्नाविषयत्व म्मत्वा वैदिककर्मस्थल एवोत्तरं श्रीभगवानुवाच—

देहिनां गुणत्रय मय प्रकृति परिणामशरीरसंसृष्टानां चेतनानां । श्रद्धा इदमनेन भविष्यतीत्येव मादिफलपर्यन्त साधन विश्वासः । सात्त्विकी - सत्त्वमूला । राजसी चैव - रजोमूला च । तामसी च तमोमूला च । इति । त्रिविधा भवति । यद्यपि शुद्धस्वभावस्यात्मनः श्रद्धासम्बन्ध एव नास्ति, तथापि देहशब्दसूचितत्रिगुणमयशरीरसम्बन्धोपाधिकाः श्रद्धादयस्सम्भवन्तीति भावः । ननु सात्त्विक राजस तामस कर्मबोधकानां शास्त्राणां तदु-

---

"तत्" "सत" इन तीन लक्षणों वाले हैं—इन तीन विषयों का इस अध्याय में उपदेश दिया गया है ।

अर्जुन ने प्रश्न किया—हे श्रीकृष्ण ! जो पुरुष शास्त्र की आज्ञा का उल्लङ्घन कर श्रद्धा के साथ यज्ञादि कर्मों का अनुष्ठान करते हैं ऐसे श्रद्धालु पुरुषों की निष्ठा किस प्रकार की होती है ? इनकी यह निष्ठा सात्विक है या राजसिक है या तामसिक कही जायेगी ? ॥ १ ॥

अध्याय १६ के २३ श्लोक में अशास्त्रीय कर्मों की निष्फलता का वर्ण किया गया । यद्यपि यहाँ प्रथम श्लोक में अर्जुन ने शास्त्रनिषिद्ध कर्मफल के विषय में प्रश्न किया है तथापि श्रीभगवान् इस प्रश्न को इस समय इस प्रकार कहते हैं कि शास्त्रविधि के बाहर कर्म का विषय ही नहीं है यह मानकर शास्त्रीय यागादि कर्मों को त्रिविध श्रद्धा का विषय बताते हैं ।





**सत्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।**
**श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३ ॥**

चिकरार्थवादानां च साधारणत्वात्पुरुषविशेषनियत फलभेदनियतश्रद्धोत्पत्तौ किं नियामकमित्यत्राह ( सा-स्वभावजेति ) सा त्रिविधाश्रद्धा । स्वभावजास्त्वेषां - तत्तत्कर्मकर्तृणां, भावाः - असाधारणधर्माः, सात्त्विकादि श्रद्धाहेतु प्राचीन तत्तदुचयः, तेभ्योजाता । औषधविशेषलिप्तवन्हिसम्बन्धात्पार्थिवद्रव्ये शुक्लपीतनीलरूपादय इव उद्रिक्त तत्तद्गुणमय शरीरसम्बन्धात्सात्विक राजस तामस श्रद्धा आत्मनामुत्पद्यन्तइति भावः । ताम् शृणु - तादृश श्रद्धास्वभावमाकर्णयेत्यर्थः ॥ २ ॥

तत्तत्स्वभाव हेतुमाह—

हे भारत ! सर्वस्य - चेतनस्य । श्रद्धा । सत्त्वानुरूपा - सत्त्वं - अन्तःकरणम्, एतच्च देहेन्द्रियोपलक्षणम्, तदनुरूपा । भवति । अन्तःकरण शरीरेन्द्रियाणि यादृशगुणयुक्तानि तादृश तदुचित्त सात्त्विकादिकर्मविषयाभवतीत्यर्थः । अतः । अयम् । पुरुषः । श्रद्धामयः - श्रद्धापरिणामः, तद्गुणप्रयुक्तश्रद्धाविषयकर्मफलप्रधानं इत्यर्थः । अतएव । यः - पुमान् । यच्छ्रद्धः - यादृशी श्रद्धा यस्या सः, सः । स एव - तादृश श्रद्धाएव । भवति - तद्गुणप्रयुक्त श्रद्धाविषयफलभागेव भवतीत्यर्थः ॥ ३ ॥

---

श्रीभगवान ने कहा—जीवों का शरीर त्रिगुण विशिष्ट-प्रकृति का परिणाम रूप है । जीवात्मा स्वभावतः उक्त तीनों गुणों से रहित होने पर भी अपने-अपने पूर्व कर्मों के अनुरूप सात्विक आदि विभिन्न प्रकार की वासना और रुचि विशिष्ट प्राकृत देह प्राप्त करता है त्रिगुणमय यह प्राकृत देह विशिष्ट देही ( आत्मा ) जीव की स्वाभाविक (१) श्रद्धा या (२) रुचि, सात्विक, राजसिक, तामसिक भेद से तीन प्रकार की होती है इस स्वाभाविक श्रद्धा के विषय में सुनो ॥ २ ॥

हे अर्जुन ! सभी जीवों की श्रद्धा अपने-अपने देह इन्द्रिय एवं मन की सात्विक आदि प्रकृति के अनुरूप होती है अतएव यह (कर्ममय) पुरुष श्रद्धा का परिणाम विशेष है अर्थात् उक्त सात्विकादि गुणों से पैदा होने वाली श्रद्धा के अनुरूप कर्मप्रधान है इसलिए जो पुरुष जिस प्रकार की श्रद्धा से युक्त होता है वह उसी प्रकार की श्रद्धा के अनुरूप कर्म करके तदनुरूप कर्म-फल का भागी होता है ॥ ३ ॥

टिप्पणी (१) रुचि की घनीभूत अवस्था—श्रद्धा ।
(२) सूक्ष्म वासना की घनीभूत अवस्था— रुचि ।

**यजन्ते सात्विका देवान् यक्षरक्षांसि राजसाः ।**
**प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः ।। ४ ।।**
**अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।**
**दम्भाहंकारसंयुक्ताः कामरागबलान्विताः ।। ५ ।।**

फलविशेषाणां श्रद्धाविशेषप्रयुक्तत्वमेवोपपादयति—

सात्त्विकाः - सत्त्वगुणप्रचुराः । जनाः देवान् - सत्त्वप्रकृती निन्द्रादीनेव । यजन्ते । सात्त्विका स्सात्त्विक्या श्रद्धया सात्त्विकानेवाराध्य तत्सायुज्यं दुःखासम्भिन्नसुखरूपमनुभवन्तीत्यर्थः । राजसाः - रजः प्रचुराः जनाः । यक्षरक्षांसि - यक्षरक्षोजनान् । यजन्ते । पूर्वोक्तरीत्या राजसश्रद्धया राजसानेवाराध्य दुःखासम्भिन्नाल्पसुखरूपन्तत्सायुज्यमनुभवन्तीत्यर्थः । अन्ये । तामसाः । जनाः । प्रेतान् - पिशाचान् । भूतगणांश्च - रुद्रपारिषदांश्च । यजन्ते पूर्वोक्तरीत्या तामसश्रद्धया तामसानाराध्य दुःखमयात्यल्पसुखरूपं तत्सायुज्यं प्राप्नुवन्तीत्यर्थः ।। ४ ।।

अर्थान्निषिद्धमप्यशास्त्रीयकर्माणि गुणफलसम्बन्धं कण्ठोक्त्या निराचष्टे—

ये जनाः । दम्भाहंकारसंयुक्ताः - दम्भः - धार्मिकत्वख्यापनम्, अहंकारः - स्वातन्त्र्याभिमानः, ताभ्यां, संयुक्ताः - समन्विताः । कामरागबलान्विताः - कामः - विषयाभिलाषः, रागः - क्षेत्राद्यासक्तिः, बलं - कामाद्यनुकूलाशक्तिः, तैरन्विताः । शरीरस्थं - शरीरेतिष्ठति आरम्भकतयाऽनुवर्ततइति तथोक्तम् । भूतग्रामं - पृथिव्यादिसमुदायम् । अन्तश्शरीरस्थं - नियन्तृतया

**सात्विक प्रकृति के पुरुष इन्द्रादि देवों तथा उनके अन्तर्यामी नारायण का यजन पूजन करते हैं । राजसिक लोग यक्ष और राक्षसों की पूजा करते हैं । तामसिक प्रकृति वाले लोग प्रेत और भूत गणों का पूजन यजन करते हैं ।। ४ ।।**

**जो विवेकहीन पुरुष दम्भ और अहङ्कार से युक्त एवं विषयों की कामना, उनके प्रति अनुराग तथा उनकी प्राप्ति के अनुकूल सामर्थ्य युक्त होकर पाञ्चभौतिक शरीर एवं उसके भीतर स्थित मदात्मक अर्थात् मेरे शरीर रूपी जीवात्मा को कठिन उपवास आदि के द्वारा दुर्बल करते हुए, शास्त्र विधि के विपरीत कठोर तपस्या करते हैं, उन्हें आसुरी प्रकृति के पुरुष जानो । उनकी उस शास्त्र विपरीत तपस्या आदि को आसुरी निश्चय जानो ।। ५-६ ।।**





**कर्षयन्तः शरीरस्थं भूतग्राममचेतसः ।**
**मां चैवान्तः शरीरस्थं तान् विद्ध्यासुरनिश्चयान् ।।६।।**
**आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।**
**यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ।। ७ ।।**

शरीरान्तर्वर्तिनम् । मांचैव - मच्छरीरभूतं जीवं च । कर्षयन्तः - हठोपवासादिभिः कृषं कुर्वन्तः । अनेन शास्त्रविहित योगाद्यपेक्षया भगवच्छरीर पीडनापराधो महान् दोषस्तदनुमतइति भावः । अचेतसः - अविवेकिनश्चसन्तः । घोरं - तामसश्रद्धापूर्वकतया दारुणम् । तपः - बाह्यागममूलकं तपः । तप्यन्ते - कुर्वते । इदमुपलक्षणं, यागदानादिकमपि कुर्वते । तान्, आसुरनिश्चयान् - आसुरः असुरसम्बन्धी; निश्चयः येषांतथा भूतान् । विद्धि - जानीहि । असुराणां मदाज्ञा विपरीत कारिणां यागतिः सापतन्ति नरकेऽशुचावित्यादिना पूर्वमंवोक्ता । अतोबाह्यागम मूलक श्रद्धाकृतत्वमात्रेण न गुण फलसम्बन्धः इति भावः ।। ५-६ ।।

पूर्वप्रघट्टकेन श्रद्धानां श्रद्धावतां चेतनानां श्रद्धाविषयाणां च कर्मणां सात्त्किराजसतामसभेदेन सामान्यतस्त्रैविध्यंफलभेदश्चोक्तः । इदानींतदनुबन्ध्याहारभेदत्रैविध्यं निर्दिशन्नतत्सर्वं प्रपंचयति—

सर्वस्य - सात्त्विक राजस तामस भेदभिन्नस्य प्राणिवर्गस्य । आहारस्त्वपि - आहारोपि च । त्रिविधः - सात्त्विकादि भेदभिन्नस्सन्नेव । प्रियः । भवति । तथा पूर्वोक्तव्यवस्थयैव । यज्ञः तपः दानं च, सर्वं । त्रिविधं स देव । प्रियम्भवति । तेषां - आहार यज्ञ तपो दानानाम् । इमं - सत्त्वादि गुणभेदेन वक्ष्यमाणम् । भेदम् । शृणु मत्सकाशादाकर्णय ।। ७ ।।

तत्रादौ "आहारशुद्धौ सत्त्वशुद्धिः, सत्त्वशुद्धौ ध्रुवास्मृतिः" "स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष" इति मुक्तिसाधनीभूतध्रुवानुस्मृतिप्रयोजकान् सात्त्विकाहारप्रभृतीन् विवेचयति—

**अशास्त्रीय यागादि को अनर्थ का विषय बताकर अब शास्त्रीय यज्ञादि त्रिविध गुणों से होने वाले विभिन्न भेदों के विषय होते हैं, इसका विस्तार से वर्णन करते हैं—**

**सात्विक आदि भिन्न-भिन्न प्रकृति से युक्त जीवों का आहार भी सात्विक आदि विभेद से प्रिय होता है । इसी प्रकार यज्ञ, तप एवं दान भी सात्विक आदि भेदों से प्रिय होता है । उन आहार, यज्ञ, तप, दान का सात्विक, राजस, तामस भेद भी सुनो ।। ७ ।।**

**आयुः सत्वबलारोग्यसुखप्रीतिविवर्धनाः ।**
**रस्याः स्निग्धाः स्थिराहृद्या आहाराः सात्विकप्रियाः ॥८॥**
**कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।**
**आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९ ॥**

---

आयुस्सत्त्वबलारोग्यसुखप्रीतिविवर्धनाः - आयुः - जीवनस्य, सत्त्वस्य - ज्ञानहेतुसत्त्वगुणस्य, बलस्य - जाठराग्नचपचयरूपस्य, आरोग्यस्य - धातुसाम्यरूपरोगराहित्यस्य, सुखस्य - स्वपरिणामकालीनस्य सौख्यस्य, प्रीतेः - स्व परिणामकालीनहर्षस्य च, विवर्धनाः - वृद्धिहेतवः । आयुरादि विवर्धकत्वं शास्त्रावगम्यम्, सुखविवर्धकत्वं प्रत्यक्षसिद्धम्, प्रीति विवर्धकत्वं मादकद्रव्यसेवाया अन्नादिद्वारा लोकोद्वेगजनकत्ववत् सात्त्विकाहार सेवाया लोकानुकूल कर्मद्वारा प्रत्यक्षसिद्धं । रस्याः - आप्यायकमधुररसवन्तः । स्निग्धाः - स्नेहयुक्ताः । समधातुमयस्य कार्यकारण संघातस्य पिण्डीकरणहेतव इत्यर्थः । स्थिराः बलादिस्थिरपरिणामयुक्ताः - हृद्याः - दृष्टमात्राएव सन्तो मनोहराश्च । आहाराः - अन्नादयः । सात्त्विकप्रियाः - सात्त्विकानां - उपचितसत्त्वानां पुंसां; प्रियाः - प्रीतिविषयाः । उपचित सत्त्वविशिष्टाहाराणां स्वानुभववासनारुचिद्वारा सात्त्विकप्रीतिजनकत्वादिति भावः ॥ ८ ॥

---

**सात्विक गुण युक्त पुरुष को सात्विक आहार ही प्रिय होता है । यह सात्विक आहार आयुबर्द्धक, ज्ञान एवं बुद्धि बढ़ाने वाला होता है । 'यहाँ 'सत्व' शब्द का अर्थ अन्तःकरण है, उसका कार्य ज्ञान बताया जा रहा है । क्योंकि सत्व से ज्ञान उत्पन्न होता है ।' यही सात्विक आहार बल, आरोग्य, सुख एवं प्रीति वर्धक (अर्थात् प्रीति उत्पन्न करने वाले कर्मों का अनुष्ठान द्वारा)एवं खाये हुए अन्न का परिपाक (पचाने) के समय भी सुख बढ़ाने वाला, एवं मधुर रसयुक्त स्निग्ध अर्थात् घी से युक्त, पचने के बाद नियमित रूप से शारीरिक बलोत्पादक तथा रमणीय अर्थात् भोजन की वस्तु दर्शन मात्र से ही मनको सन्तोष देने वाला होता है । ८ ।**

**अत्यन्त कड़वे, अति अम्ल, अति नमक युक्त, अति उष्ण (गरम) अति तीखे (मिर्चयुक्त) अति रूखे, अत्यन्त तेज मसालों वाली भोजन सामग्री राजसिक लोगों को प्रिय होती है । यह भोज्य वस्तु भोजन करते समय दुःख प्रद, भोजन के बाद में शोक दायक एवं तत्पश्चात् अजीर्ण पैदा करके रोग प्रदान करने वाली होती है । इस प्रकार के भोज्य पदार्थ राजसिक व्यक्ति को प्रिय होते हैं ॥ ९ ॥**





**यातयामं गतरसं पूति पर्युषितं च यत् ।**
**उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥१०॥**

---

कट्वम्ल लवणात्युष्ण तीक्ष्ण रूक्ष विदाहिनः, अत्रैकोप्यतिशब्दो देहली दीपन्यायात्सर्वत्राप्यन्वेतीति मन्तव्यम् । अति कट्वः - अतितिक्तरसा निम्बादयः, अत्यम्लाः - तिन्त्रिण्यादयः, अतिलवणाः, अत्युष्णाः, अतितीक्ष्णाः - उपयोगाक्षमप्रकृतिप्रतिकूलामरीचादयः, अतिरूक्षाः - अतिशोषकाः हिंग्वादयः, विदाहिनः - तापकरास्सर्षपादयः । किंच - दुःखशोकामयप्रदाः - रजोमयत्वाद्दुःखं - धातुवैषम्यद्वारा शरीरव्यथाम् । शोकं - तत्परामर्शजपश्चात्तापादिद्वारा दैन्यं, आमयं - कालातिक्रमेण रोगं च, प्रददतीति तथाभूताः । आहाराः । राजसस्य - उपचितरजोगुणस्य । इष्टाः । भवन्तीत्यन्वयः ॥ ९ ॥

यातयामं - यातः - अतीतः, यामः - प्रहरः - यस्य; तत्तथाभूतं, चिरकालावस्थितम् । गतरसं - गतः - निवृत्तः, रसः सारः, यस्य तत्; निष्पीडितसारमित्यर्थः । पूति - दुर्गन्धयुक्तम् । पर्युषितं - दिनान्तरपक्वं, कालातिक्रमेण रसान्तरापन्नमिति यावत् । उच्छिष्टं - गुर्वादिभ्यो न्यभुक्तिशिष्टम् । अमेध्यं - अपरिशुद्धमपि च । अयज्ञशिष्टमित्यर्थः । भोजनं - भुज्यइति भोजनं, तमोमयाहारः । तासमप्रियं - तामसानां - उपचिततमोगुणानां, प्रियं - प्रीतिविषयः । भुक्तं तत्पुनस्तत्ताविवर्धनं च । अतो हितैषिभि रसात्त्विकाहारसेवैव कर्तव्येति भावः ॥ १० ॥

एवमाहारस्य त्रैविध्यमुक्त्वा यागत्रैविध्यमाह अफलाकांक्षिभिरित्यादिभिस्त्रिभिः —

अफलाकांक्षिभिः - फलाकांक्षारहितैः पुरुषैः । विधिदृष्टः - शास्त्रोक्तमन्त्रद्रव्याणि सम्पन्न इत्यर्थः । यष्टव्यमेवेति - भगवदाराधनतया यागः कर्तव्यएवेति । मनः । समाधाय - विहितकर्मानुष्ठानमेव स्वतः प्रयोजनमित्यनुसन्धायेत्यर्थः । यः - यज्ञः । इज्यते - क्रियते । सः - यज्ञः । सात्त्विकः ॥ ११ ॥

---

**एक प्रहर ( ३ घण्टा) से भी अधिक समय पूर्व तयार किया हुआ अत्यन्त ठण्डा, नीरस, दुर्गन्धवाला,वासी, जूँठा, और जो यज्ञादि में निवेदित नहीं किया जाता उसके अयोग्य इस प्रकार का अपवित्र भोजन तामसिक लोगों को प्रिय होता है ।१०।**

**अफलाकांक्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।**
**यष्टव्यमेवेति मनः समाधाय स सात्विकः ॥११॥**
**अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् ।**
**इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ १२ ॥**
**विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।**
**श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥१३॥**

हे भरतश्रेष्ठ। यः - यज्ञः। फलं - स्वर्गादिफलम्। अभिसंधायतु - उद्दिश्य च। दम्भार्थमपि चैव - धार्मिकत्वख्यापनाय च। इज्यते - क्रियते। तम् - यज्ञम्। राजसम्। विद्धि ॥ १२ ॥

विधिहीनं - विधिः - इमं धर्ममनुतिष्ठेति शिष्टानुशासनम्, तेन हीनम्। असृष्टान्नं - सृष्टं - न्यायसम्पादितं न भवतीत्यसृष्टं - शूद्रभिक्षालब्धं, अन्नं यस्यतम्। मन्त्रहीनं - मन्त्रभ्रष्टं। अदक्षिणं - यथोक्तदक्षिणारहितं। श्रद्धाविरहितं - श्रद्धा, आस्तिक्यबुद्धिः तयाऽविरहितं - शून्यम्। यज्ञम्। तामसम्। परिचक्षते - शिष्टाः कथयन्ति ॥ १३ ॥

अथ तपसोगुणतस्त्रैविध्यं वक्तुं तस्यकायवाङ्मनोनिष्पाद्यतया प्रथमतः कायादि भेदेन स्वरूपत स्त्रैविध्यं विवक्षित्वा प्रथमतः कायिकं तपआह—

**( क्योंकि इस प्रकार का भोजन तमोगुणी बुद्धि का कारण होता है। इसलिए अपना हित चाहने वाला पुरुष इस प्रकार भोजन न कर सात्विक भोजन ही करें )।**

**फल की आकांक्षा से रहित पुरुष द्वारा, मन्त्र, द्रव्य, क्रिया एवं दक्षिणायुक्त, शास्त्रविधि युक्त, भगवत् आराधना रूप एवं वर्ण, आश्रमोचित रूप से ज्ञान में निष्ठा वाला होकर जो यज्ञ किया जाता है वही सात्विक यज्ञ है ॥ ११ ॥**

**हे अर्जुन ! यश आदि फल के उद्देश्य से एवं दम्भ अर्थात् स्वयं की धार्मिकता की प्रसिद्धि के उद्देश्य से जो यज्ञ किया जाता है उसे राजसिक यज्ञ कहा जाता है, यह जानो ॥ १२ ॥**

**जो यज्ञ विधिहीन अर्थात् वेद विधि को जानने वाले सदाचारी ब्राह्मण के द्वारा यज्ञकर्ता को आदिष्ट नहीं होता, जो यज्ञ अन्याय से कमाये गये धन से किया जाता है तथा जो अनपयुक्त अन्नादि के द्वारा किया जाता है, शास्त्रीय मन्त्रों से हीन एवं श्रद्धारहित होता है वह यज्ञ तामसिक कहा जाता है ॥ १३ ॥**





**देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।**
**ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥**
**अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।**
**स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५ ॥**
**मनः प्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।**
**भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥**

देव द्विज गुरु प्राज्ञ पूजनं - देवानां, गुरूणां - ज्ञानोपदेष्टृणां - प्राज्ञानां स्वगुरुव्यतिरिक्तानां तत्त्वविदां च, पूजनं - आराधनम् शौचं तीर्थस्नानादि शोधन कर्म। आर्जवं। सान्तः करणशरीरवृत्तिः। ब्रह्मचर्यं - योषित्सुभोग्यताबुद्धिवर्जनं। अहिंसा च - परपीडावर्जनं च। इत्येतत्। शारीरं - शरीरनिष्पाद्यं। तपः। उच्यते। शास्त्रज्ञैः प्रतिपाद्यते ॥ १४ ॥

अथ वाचिकन्तपआह—

अनुद्वेगकरं - उद्वेगं - भयं, करोतीत्युद्वेगकरं, तन्नभवतीत्यनुद्वेगकरं; यस्य कस्याप्यभयंकरमित्यर्थः। सत्यं - यथार्थम्। प्रियहितं च - प्रियम् - श्रोतृणां श्रोत्रसुखम्, हितं च - परिणामसुखकरं च। यत् वाक्यं - यदेववचनम्। स्वाध्यायाभ्यसनं चैव - स्वाध्यायस्य - वेदस्य, पठनं च। यत् तत्। वाङ्मयम् - वाचिकम्। तप उच्यते ॥ १५ ॥

**अब तीन प्रकार के (कायिक वाचिक मानसिक) तप को बताते हैं—देवता ब्राह्मण गुरु एवं ज्ञानीजन का पूजन, शौच अर्थात् तीर्थस्नान आदिक शरीर शुद्धि. आर्जव अर्थात् शरीर मन वाणी की एक ही प्रकार की वृत्ति (सरलता), स्त्रियों के प्रति भोग्यबुद्धि युक्त न देखना, परिपीडा का त्याग यह सब शारीरिक तप नाम से कहा जाता है ॥ १४ ॥**

**दूसरों को उद्वेग (घबड़ाहट) पैदा करने वाले न हों, यथार्थ बात बताले वाले, सुनने में मधुर, परिणाम में सुखकर, जो बचन एवं वेदादि शास्त्र के अध्ययन से युक्त ऐसी वाचिक तपस्या कही जाती है ॥ १५ ॥**

**क्रोध आदि से रहित होकर सर्वदा मन का प्रसन्न भाव. दूसरों की उन्नति के अनुकूल मन की वृत्ति. वाणी पर संयम, चित्त की वृत्तियों का ध्येय विषय में स्थापन आत्मा से अतिरिक्त विषय में वैराग्य रूप चित्त की शुद्धि यह सब मानसिक तप कहा जाता है ॥ १६ ॥**

**श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ।**
**अफलाकांक्षिभिर्युक्तैः सात्विकं परिचक्षते ॥१७॥**
**सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।**
**क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥१८॥**

---

अथ मानसन्तप आह—

मनः प्रसादः - क्रोधादिकालुष्यराहित्यम् । सौम्यत्वं - परेषाम् - नुकूलस्वभावत्वम् । मौनम् - वाङ् नियमनम् । भावसंशुद्धिः - भावः - भावना - चिन्ता, तस्य संशुद्धिः - इतरविषयासंस्पर्शश्च । इत्येतत् । मानस - मनोनिष्पाद्यम् । तपः । उच्यते ॥ १६ ॥

इदानीं कायिक वाचिक मानसानां तपसां प्रत्येकं सात्त्विकादि भेदेन त्रैविध्यमाह––

अफलाकांक्षिभिः - फलाभिसन्धिरहितैः । युक्तैः - भगवद्ध्यानपरैः नरैः । परया । श्रद्धया । तप्तम् । तत् । पूर्वोक्तम् । त्रिविधं - शारीरादि त्रिप्रकारम् । तपः । सात्त्विकं । परिचक्षते - प्रवदन्तिं ॥ १७ ॥

अथ राजसन्तपआह—

यत् । तपः । दम्भेन - हेतुना । सत्कारमानपूजार्थं - सत्कारः - मानसिकादरविशेषः , मानः - वाचिकश्लाघा , पूजा - कायिको नमस्कारः , तदर्थं च - तत्सिद्धचर्थं च । शब्देन स्वर्गाद्यर्थं चेति द्योत्यते । एवमुभयार्थमेव । इह । क्रियते । चलं - चलयति स्वर्गादिपात भयेनचञ्चलं करोतीति चलम् । अध्रुवंक्षयि फलकत्वान्नश्वरम् । तत् - तपः । राजसं । प्रोक्तं - निर्णीतम् ॥ १८ ॥

---

परन्तु हे अर्जुन ! फल की आकांक्षा से रहित होकर निष्काम भाव से योगी पुरुषों द्वारा परम श्रद्धा के साथ किया गया उस पूर्वोक्त कायिक वाचिक मानसिक तप को सात्विक तप कहते हैं ॥ १७ ॥

दम्भ अर्थात् धार्मिक होने के यश-लोभ से, सत्कार, वाणी की प्रशंसा रूप मान एवं कायिक नमस्कार आदि रूप पूजा आदि इस त्रिविध फलों के लाभ के लिए पाखण्ड के लिए इस संसार में जो तप किया जाता है चञ्चल और अनित्य एवं विनाशशील स्वर्गादि फल को देने वाले इस प्रकार के तप को राजसिक कहा जाता है ॥ १८ ॥





**मूढग्राहेणात्मनो यत् पीडया क्रियते तपः ।**
**परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥१९॥**
**दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।**
**देशे काले च पात्रे च तद्दानं सात्विकं स्मृतम् ॥२०॥**
**यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।**
**दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥२१॥**

---

मूढाः - अविवेकिनः, तत्सम्बन्धिना, ग्राहेण - आत्मशक्त्यपर्यालोचनकृताभिनिवेशेनेत्यर्थः । आत्मनः - स्वस्य । पीडया - निवन्धेन । यत् - तपः । क्रियते । परस्य । उत्सादनार्थं च यत् । क्रियते । तत् - तपः । तामसमिति । उदाहृतं - धर्मशास्त्रोक्तमित्यर्थः ॥ १९ ॥

यत् । दानम् । दातव्यमिति - दानं कर्तव्यमिति विहितत्वबुद्ध्यैव । न तु फलाभिसन्धिनेतिभावः । देशे - दिव्यदेशे । काले च ग्रहणादिकाले च । पात्रे च - 'न विद्यया केवलया तपसा केवलेन तु । यत्रवृत्तं ह्युभे चैते तद्धिपात्रं प्रचक्षते' इति धर्मशास्त्रोक्त विद्यादिसम्पन्ने ब्राह्मणे च सति । तत्रापि । अनुपकारिणे - प्रत्युपकारासमर्थाय । दीयते - क्रियते । तत् । दानम् । सात्विकम् । स्मृतम् - धर्मशास्त्रसम्मतमित्यर्थः ॥ २० ॥

यत्तुपुनः - यद्दानन्तु पुनः । प्रत्युपकारार्थं - अनेनवाऽन्येन वाऽयं मम

---

और जो तप दुराग्रह (हठ) पूर्वक अज्ञ व्यक्ति के द्वारा मन वाणी शरीर आत्मा को क्लेश पहुँचाने के लिए तथा दूसरे को मारना आदि अनिष्ट पहुँचाने के लिए किया जाता है उसे तामसिक तप कहा जाता है ॥ १९ ॥

किसी भी प्रकार से फलाभिसन्धि रहित होकर केवल 'दान करना मेरा कर्तव्य है' इस बुद्धि से शास्त्रविहित उपयुक्त देश (तीर्थ स्थल) में उचित काल (ग्रहण आदि के समय) में उपयुक्त पात्र (ब्राह्मण, पण्डित और दुःखी जन) एवं प्रत्युपकार की सामर्थ्य से रहित व्यक्ति को जो दान दिया जाता है उसे सात्विक दान कहा जाता है ॥ २० ॥

किन्तु प्रत्युपकार की आशा से अथवा स्वर्गादि फल प्राप्ति की आशा से, दिये जाने वाले द्रव्य के प्रति आसक्तिवश होकर अथवा दानग्रहण करने वाले के प्रति अश्रद्धा आदि दोष से दुष्ट होकर जो दान किया जाता है उसे राजसिक दान कहा जाता है ॥ २१ ॥

**अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।**
**असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥२२॥**
**ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।**
**ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥२३॥**

प्रत्युपकरिष्यतीति बुद्ध्या । फलं - स्वर्गादिकम् । उद्दिश्य वा । परिक्लिष्टं च - मनः क्लेशयुक्तमशुचि द्रव्यकं च । दीयते - क्रियते । तत् - दानम् - राजसम् । उदाहृतम् - शास्त्रोक्तम् ॥ २१ ॥

यत् । दानम् । अदेशकाले - अशुचिदेशे अनुचितकाले च । अपात्रेभ्यश्च । दीयते, देशकालादि सम्पत्तावपि । असत्कृतं - पादप्रक्षालनादि सत्काररहितम् । अवज्ञातं - तिरस्कारयुक्तं च । यत् । दीयते । तत् - दानम् । तामसम् । उदाहृतं - कथितम् ॥ २२ ॥

अध्यायारम्भे पार्थपृष्टवाह्यागमनविषयविलक्षणानां वेदोक्त सात्विकराजस तामसिककर्मणां तदनुबन्धिनां कर्तॄणां वेदानां च लक्षणान्याह—

ॐ तत्सदिति । त्रिविधः । निर्देशः - नाम । ब्रह्मणः - वेदस्य तत्प्रतिपादित प्राकरणिककर्मणः सम्बन्धी । स्मृतः - तदन्वयितयाशिष्टैः कथित इत्यर्थः । कुतः । तेन - त्रिविधेन निर्देशेन । उपलक्षिताः । ब्राह्मणाः - वेदाध्यायिन स्त्रैवर्णिकाः । शकंध्वादितया स्वार्थिकाणन्ततया रूपसिद्धिर्द्रष्ट-

**शास्त्रविधि के ज्ञान से शून्य पुरुष द्वारा, अपवित्र स्थल में, अनुचित समय में एवं कुपात्र को, अनादर पूर्वक तिरस्कार सहित जो दान किया जाता है, शास्त्रों में उसे तामसिक दान कहा जाता है ॥ २२ ।**

**इस प्रकार वैदिक यज्ञ, तप, दान ये तीनों सत्वादि गुणभेद से तीन-तीन प्रकार के कहे गये हैं । अब वे ही यज्ञादि वैदिक कर्म ब्राह्मणादि कर्ता एवं उक्त कर्मों में वेद के ॐ, तत्, सत्, इन तीन शब्दों के व्यवहार से होने वाले वैशिष्टय को बताते हैं—**

**शास्त्र के जानकार शिष्टजन कहते हैं कि ॐ, तत्, सत्— ये तीन शब्द ब्रह्मरूप वेद एवं वैदिक कर्मों के साथ सम्बन्धित हैं । क्योंकि वेद के अधिकारी, यज्ञोपवीत सम्पन्न ब्राह्मणादि तीन वर्ण के लोग, वेद एवं यज्ञादि सम्पूर्ण वैदिक कर्म ॐ, तत्, सत्' इन तीन शब्दों के साथ अन्वित करके सृष्टि के आरम्भ समय में मेरे द्वारा ही रचे गये हैं ॥ २३ ।**





**तस्मादोमित्युदाहृत्य यज्ञदानतपः क्रियाः ।**
**प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥२४॥**

व्या । वेदाश्च - तदध्येतव्याश्श्रुतयश्च । यज्ञाश्चतत्प्रतिपाद्य सात्त्विक राजस तामस प्रभेद भिन्नानि तपोदानादीनि च । पुरा - सृष्टिकालएव । विहिताः - 'चातुर्वर्ण्यं मयासृष्टं गुणकर्मविभागशः' इत्युक्तरीत्या, तत्रापि 'धातायथा पूर्वमकल्पय' दिति श्रुत्युक्तरीत्या च मयैव सृष्टा इत्यर्थः ॥ २३ ॥

अथैतदेव चतुर्भिश्श्लोकैः प्रपंचयन्नादावोङ्कारस्य प्राथम्यात्कर्मानुष्ठानानुप्रवेशित्वाच्च तदन्वयमेव ब्राह्मण वेद यज्ञानामाह—

तस्मात् - त्रिविध निर्देशान्वयित्वेन मयासृष्टत्वादित्यर्थः । ब्रह्मवादिनां वेदाध्यायिनां त्रैवर्णिकानां सम्बन्धिन्यः । विधानोक्ताः - विधीयन्त एभिरिति विधानानि - विधायकवाक्यानि, तेषूक्ताः । यज्ञ दान तपः क्रियाः - पूर्वोक्ताः सात्त्विक राजस तामसरूपा स्त्रिविधा अपि सर्वक्रियाः । ओमिति । उदाहृत्य - उच्चार्य । प्रवर्तन्ते - प्रकर्षेणवर्तन्ते । स सम्बन्धिकं प्रणवप्रयुक्ता एता आरभ्यन्त इति यावत् । तासामोङ्कारपूर्वकतयाऽऽरम्भस्सुप्रसिद्धः, कर्मणामप्योङ्कार पूर्वक तयैवानुष्ठानं च सिद्धम्, कर्तॄणां त्रैवर्णिकानामपि तादृशवेदोच्चारयितृत्वात्तादृशकर्मणां च - ओङ्कारान्वयोऽस्तीतित्रयाणां तदन्वयस्सिद्ध इति भावः । अत्रादावोङ्कारोच्चारणं वेदान्तव्युत्पत्तिमतां सर्वान्तरात्मसमाराधनत्वाभिसंधिनाऽव्युत्पन्नानां मांगलिकतया त्रिवर्गसिद्ध्यर्थं चेतिद्रष्टव्यम् । अनेनोङ्कारो बुभुक्षु मुमुक्षु साधारण इत्युक्तं भवति ॥ २४ ॥

अथ मुमुक्षु मात्रार्थतया त्रायाणां ब्राह्मणवेदयज्ञानां तदिति निर्देशान्वयं दर्शयति—

मोक्षकांक्षिभिः - मुमुक्षुभिः । विविधाः सात्विकराजसतामसरूपाः । यज्ञतपः क्रियाः - यज्ञरूपास्तपोरूपाः क्रियाः । दानक्रियाश्च - दानरूपाः क्रियाश्च । च शब्देन पूर्वश्लोकोक्तावेदाध्ययन क्रियाश्च, एताः । तत् -

**अब चार श्लोकों में ॐ, तत्, सत् ये तीन शब्द वैदिक यज्ञादि कर्मों के साथ किस प्रकार से संयुक्त होते हैं यह बताते हैं । इस श्लोक में 'ॐ' शब्द का प्रयोग है—**

**ब्राह्मण, वेद एवं यज्ञादि वैदिक कर्म 'ॐ, तत्, सत्, इन तीन शब्दों के साथ सम्बद्ध होकर सृष्टि के आरम्भ में मेरे द्वारा रचे होने से वेद के यथार्थ ज्ञाता तीन वर्णों के पुरुषों के शास्त्र सम्मत यज्ञ, दान, तप आदिक समस्त अनुष्ठान 'ॐ' इस शब्द के प्रथम उच्चारण के साथ आरम्भ होते हैं ॥ २४ ॥**

**तदित्यनभिसन्धाय फलं यज्ञतपः क्रियाः ।**
**दानक्रियाश्च विविधाः क्रियन्ते मोक्षकांक्षिभिः ॥२५॥**
**सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।**
**प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥२६॥**

---

भगवदाराधनम् । यत्तत्पदमनुत्तममित्यस्य भगवन्नामसहस्रपाठाद्भगवद्वाचकतया तत्समाराधनं लक्ष्यते । तथा च, तदिति - भगवदाराधनमिति बुद्ध्या । फलं - स्वर्गादिकम् । अनभिसन्धाय । क्रियते - अनुष्ठीयते । अनेन यज्ञादीनां भगवत्समाराधनतया तच्छब्दान्वयः, अध्येतव्यवेदस्यापि तत्प्रतिपादकतया मोक्षसाधनत्वाच्च तच्छब्दान्वयः, त्रैवर्णिकानामपि तादृशक्रियानुष्ठानात्तादृश वेदाध्ययनाच्च तच्छब्दान्वय उक्त इति द्रष्टव्यम् ॥ २५ ॥

इदानीमेतेषामेव त्रयाणां सच्छब्दान्वयं वक्तुं सच्छब्द प्रवृत्तिऽनिमित्त लोकसिद्धमहं (सद्भावइति) ।

हे पार्थ ! सदित्येतत् - पदम् । सद्भावे - देवदत्तस्सन्नित्यादि प्रयोग दर्शनाद - विद्यम् न तायां । साधुभावे - स्वर्गसाधन सत्कर्मविषय प्रयोगात्पुण्यरूपत्वे च । प्रयुज्यते । तथा । प्रशस्ते - कल्याणे लौकिके कर्मणि । युज्यते - सत्कर्मानेन कल्पितमिति प्रयोगदर्शनात् - प्रयुज्यत इत्यर्थः । एवं च बुभुक्ष्वपेक्षित त्रिवर्गसाधनप्रवृत्तिनिमित्तयोगात्सच्छब्द स्सर्वत्रापि प्रयुज्यत इति भावः ॥ २६ ॥

---

**अब प्रस्तुत श्लोक में 'तत्' शब्द की प्रयोगविधि वर्णित है—**

**मोक्ष की अभिलाषा करने वाले पुरुष विभिन्न यज्ञ, तप, दान रूप सम्पूर्ण कर्मों का अनुष्ठान भगवान की आराधना बुद्धि से स्वर्गादि फल की आकांक्षा न करते हुए करते हैं। (यहाँ 'तत्' यह शब्द ब्रह्म अथवा श्रीभगवान इस विशेष अर्थ का बोधक है) ॥ २५ ॥**

**अब दो श्लोकों में 'सत्' शब्द की प्रयोगविधि बताते हैं—**

**सद्भाव अर्थात् किसी भी वस्तु की सत्ता या विद्यमान होना एवं साधुभाव अर्थात् वह वस्तु कल्याणप्रद है यह ज्ञात कराने के लिए लौकिक अर्थात् संसार में प्रसिद्ध और वैदिक अर्थात् वेद में प्रसिद्ध समस्त वस्तुओं के विषय में 'सत्' इसी शब्द का प्रयोग होता है। तथा किसी पुरुष के द्वारा रचे गये या आचरित लौकिक सम्पूर्ण कल्याणकारी कर्म या सत् कर्म, शुभ कर्म आदि हैं उन्हें समझाने के लिए भी 'सत्' शब्द का प्रयोग होता है ॥ २६ ॥**





**यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।**
**कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥२७॥**

---

सच्छब्दं व्युत्पाद्य प्रस्तुते ब्राह्मणादित्रिके तदन्वयं दर्शयति त्वं यज्ञे तपसि दाने च - पूर्वोक्तत्रिविधभेदभिन्न यज्ञदानतपः कर्मसु । स्थितिश्च - श्रद्धयाऽवस्थानम् । सदिति । उच्यते । च शब्देन त्रैवर्णिकाः - वैदिककर्माणि तत्प्रतिपादका वेदाश्च समुच्चीयन्ते । तदर्थीयं - तेषां - त्रैवर्णिकानाम्, अर्थीयं त्रिवर्गरूपार्थसाधनम् । कर्म चैव - यज्ञदानादिकर्म च । सदित्येवाभिधीयते - सदिति निर्देशेनैवोच्यते, वेदावैदिकर्माणि त्रैवर्णिकाश्च बुभुक्षवस्सच्छब्दान्विता एवेति भावः ॥ २७ ॥

अध्यायारम्भे 'यश्शास्त्रविधिमुत्सृज्ये' त्यादि प्रश्नोत्तरसन्दर्भेण श्रद्धापूर्वकस्याप्यागमसिद्धस्याऽसुरत्वेनासत्त्वमुक्तम्, इदानीं श्रद्धापूर्वकवेदमूल त्रिविध यज्ञादीनां सच्छब्दान्वयसिद्धयर्थं वेदमूलकस्याप्यश्रद्धापूर्वकत्वेऽसत्त्वमाह—

हे पार्थ ! अश्रद्धया कृतम् । यत् । हुत - होमः । दत्तम् - दानम् । तप्तम् - तपश्च । तत् सर्वम् । असदिति - उच्यते - सच्छब्दानन्वयादसदित्युच्यते । कुतइत्यत्राह । तत् - अश्रद्धयाकृतहोमादिकम् । इह - संसारदशायाम् । नो - उपकारकं न भवति, त्रिवर्ग साधनं न भवतीत्यर्थः । प्रेत्य च - मुक्तिदशायां चेति यावत् । नो - उपकारकं - न भवति, मोक्षसाधनमपि न भवतीत्यर्थः । किन्तु वेदोक्तमपि श्रद्धायुक्तमेवैहिकामुष्मिकफलसाधनत्वा

---

**पूर्वोक्त विवेचन के अनुसार ब्राह्मण क्षत्रिय वैश्य इन त्रैवर्णिकों द्वारा फलाभिसन्धि रहित भगवद् आराधना रूप वैदिक यज्ञ, तप, दान रूप कर्म में स्थिति अर्थात् श्रद्धा के साथ निष्ठा कल्याण करने वाली है अतः इसे 'सत्' शब्द से कहा जाता है और इन वर्ण वालों के ये सम्पूर्ण कर्म भी 'सत्' नाम से कहे जाते हैं।**

**इससे समझना चाहिए कि समस्त वेद एवं वैदिक कर्मों को एवं ब्राह्मणादि त्रैवर्णिकों को 'ॐ, तत्, सत्' इन तीन शब्दों के साथ संयुक्त करके, वेदबाह्य शास्त्र अवैदिक कर्म एवं वेद के अनधिकारी त्रैवर्णिकों से इतर (भिन्न) पुरुषों से इन्हें पृथक् किया गया है ॥ २७ ॥**

**हे अर्जुन ! अश्रद्धा के साथ किया गया होम, दान एवं तप आदि सब कुछ 'असत्' कहा जाता है, क्योंकि अश्रद्धा के साथ किया यह कर्मलोक में उपकारक नहीं**

**अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।**
**असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥२८॥**

॥ इति श्रीभगवद्गीतायां सप्तदशोऽध्यायः ॥ १७ ॥

त्सच्छब्दान्वितमिति - अशास्त्रीयं श्रद्धायुक्तम् प्यसत्त्वान्नानुष्ठेयमिति श्रद्धाक्तमेववैदिकं कर्म सत्त्वादनुष्ठेयमिति चाध्यायसारार्थ इति भावः ॥ २८ ॥

इति श्रीभगवद्गीताभाष्यार्थसंग्रहतात्पर्यदीपे श्रीवरवरमुनिविरचितायां बालबोधिन्यपराभिधानायां गीतार्थसंग्रहदीपिकायां ।
सप्तदशोध्यायः ॥ १७ ॥



होता अर्थात् स्वर्गादि काम्यवस्तु प्रदान नहीं कर पाता और मरणोपरान्त भी मोक्षरूपी फल को सिद्ध करने वाला नहीं होता।

इस प्रकार इस अध्याय के प्रारम्भ में बताया कि जो कर्म शास्त्र विधि का उल्लंघन करके किये जाते हैं वे श्रद्धा पूर्वक किये जाने पर भी फल देने वाले नहीं होते। इसी अध्याय के अन्त में बताते हैं कि सम्पूर्ण वैदिक कर्म शास्त्र विधि से किये जाने पर भी यदि वे अश्रद्धा के साथ अनुष्ठित होते हैं तो वे भी असत् या आसुरिक कहे जाते हैं, वे भी फल दायक नहीं होते हैं ॥ २८ ॥

इति श्रीमद्भगवद्गीता के हिन्दी अनुवाद का श्रद्धात्रय विभागयोग नामक सत्रहवाँ अध्याय समाप्त हुआ ॥ १७ ॥



श्रीरस्तु

मोक्षसंन्यासयोग नामक

# अथ अष्टादशोध्यायः

अर्जुन उवाच—

**सन्न्यासस्य महाबाहो तत्वमिच्छामि वेदितुम् ।**
**त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ॥ १ ॥**

पूर्वाध्यायद्वये देवासुरविभागाद्युक्तिमुखेन हेयोपादेयविभागः। उपादेयस्यासंगकर्मणस्सात्विकाहारसेवाद्युपचितसत्त्ववृद्धयाऽऽरम्भः, तस्य च सच्छब्दान्वयो लक्षणं बाह्यागमविषय त्रिवर्गसाधनकर्मण ओन्तत्सच्छाब्दनन्वयो लक्षणं - चतुवर्गसाधन कृत्स्नवैदिक कर्मणो लक्षणं प्रणवान्वयः भगवत्प्राप्तिसाधन कर्मणोलक्षणं च सच्छब्दान्वयः अश्रद्धाकृतस्य वैदिकस्याप्यसच्छब्दान्वय इति चोक्तम्। इदानीमपवर्गसाधनस्यासंगकर्मणएव मोक्षसाधनतयोपयोगित्वविशेष उच्यते। तत्र तावत्त्याग संन्यासयोर्मोक्षसाधनतया तत्र तत्र निर्देशदर्शनात्तयोः पृथक्त्वैकत्व निर्णयाय स्वरूपनिर्णयाय चार्जुनः पृच्छति (संन्यासस्येति)।

हे महाबाहो ! सन्न्यासस्य - 'वेदान्तविज्ञान सुनिश्चितार्था स्सन्न्यासयोगाद्यतयश्शुद्धसत्वाः, ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति-

## अष्टादश अध्याय

मोक्ष संन्यास योग अध्याय का अर्थ संग्रह

**ईश्वरे कर्तृताबुद्धिः सत्वोपादेयतान्तिमे ।**
**स्वकर्मपरिणामश्च शास्त्रसारार्थ उच्यते ।**
( गीतार्थ संग्रह २२ )

प्रत्येक कर्म में कर्तृत्व (कर्तापन) का प्रधान कारण अन्तर्यामी परमात्मा है, सात्विक गुणों की उपादेयता, स्व (अपने में, जीवात्मा में) कर्तृत्व, फल और आसक्ति से रहित एवं 'ईश्वर में कर्तृत्व है' इस दृढ़ बुद्धि से युक्त हो अपने वर्ण एवं आश्रय के

श्रीभगवानुवाच—

**काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।**
**सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ।। २ ।।**

सर्वे' इति श्रुतौ सन्नचासविशिष्टकर्मयोगशुद्धान्तःकरणा यतयःपरिमुच्यन्तइति मोक्षसाधनतयोक्तस्य सन्नचासस्य । त्यागस्य च - "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" इति श्रुतौ मोक्षसाधनतयोक्तस्य त्यागस्य च । तत्वं - याथात्म्यम् । वेदितुं - ज्ञातुम् । इच्छामि । हे केशिनिषूदन । हृषीकेश । पृथक् - भिन्नरूपम् । तत्त्वं च । वेदितुम् इच्छामीत्यनुषंगः । अयं भावः - कर्मस्वरूपमात्रस्य त्रिवर्गापवर्ग साधारणतया मोक्षासाधारण-तयोक्तयो स्तद्विषययो स्संन्यासत्यागयोः - त्यक्तं - संन्यस्तमिति पर्याय प्रति-पाद्यत्वदर्शनेन तयोरभिन्नत्वे तत्स्वरूपज्ञातव्यं - सन्नचासशब्दस्य चतुर्थाश्रमेऽ-पि रूढ़े स्सन्नचासत्यागयोर्भेदेपि तत्स्वरूपमवश्यं ज्ञातव्यमिति ।। १ ।।

अथ मोक्षोपयोगिनो स्सन्नचासत्यागयोरेकमेव स्वरूपं - तच्चेदृशमिति निर्णेष्यन् भगवानुवाच—

कवयः - सन्नचासतत्त्ववेदिनः । सन्नचासं - मोक्षशास्त्रस्य सन्नचास-शब्दवाच्यम् । काम्यानां - स्वर्गादित्रिवर्गमात्रफलकानां कर्मणाम् । न्यासं-स्वरूपत्यागम् । विदुः - वदन्ति । अयंभावः - मुमुक्षुभिः काम्यकर्माणि न कर्तव्यानि - नित्यनैमित्तिक कर्मणामिव तेषामकरणे प्रत्यवायाभवात् । प्रत्युत तत्फलस्य त्रिवर्गस्य—"वासुदेवमनो यस्य जपहोमार्चनादिषु । तस्यान्तरायो

**उचित किया गया नित्य कर्म में 'ईश्वर की सेवा है' इस भावना से किये जाने पर उसका फल धर्म, अर्थ, काम, मोक्ष के साथ परमेश्वर श्रीमन्नारायण की प्राप्ति पर्यन्त है । सम्पूर्ण गीता शास्त्र का सारार्थ-उपदेश ये चार विषय अठारहवें अध्याय में उपदिष्ट हुये हैं ।**

**अर्जुन ने कहा—हे महाबाहो ! हे हृषीकेश, हे केशीदैत्य का विनाश करने वाले प्रभो ! संन्यास एवं त्याग के यथार्थ सार स्वरूप को मैं पृथक् पृथक् रूप से जानना चाहता हूँ ।। १ ।।**

**श्रीभगवान् कृष्ण अर्जुन के प्रश्न का उत्तर देते हुए बोले—'संन्यास'—तत्व को जानने वाले पुरुष लौकिक काम्य (कामना लेकर किये जाने वाले) कर्मों का स्वरूपतः त्याग करने को 'संन्यास' कहकर विवेचना करते हैं और नित्यनैमित्तिक समस्त काम्य कर्मों के फल की आकांक्षा एवं वासना तक के त्याग को 'त्याग' नाम**





**त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।**
**यज्ञदानतपः कर्म न त्याज्यमिति चापरे ।। ३ ।।**

मैत्रेय देवेन्द्रत्वादिकं फलम्" इत्युक्तरीत्या मुक्तिफलप्रतिबन्धात्मकत्वाच्च । अतः काम्यकर्मस्वरूपत्यागएव सन्नचास शब्दार्थइति । विचक्षणाः - पण्डिताः । त्यागं - मोक्षशास्त्रस्थत्यागशब्दोक्तं तमेव सन्नचासं । सर्वकर्मफलत्यागं - सर्वेषां - नित्यनैमित्तिककाम्यरूपाणां कर्मणा, यानि फलानि, तेषां, त्यागं - वर्जनम् । प्राहुः । अयम्भावः - यदि मुमुक्षूणां स्वफलविरोधा त्काम्यकर्म स्वरूपत्याग एवोच्यते तर्हि विरुद्धं फलमात्रमेव त्यज्यताम्, नत्वविरुद्धं कर्म-स्वरूपमपि; नच तदनुष्ठाने प्रयोजनाभावः, नित्यनैमित्तिकेष्विव भगवत्प्रीतेरेव फलत्वात् । नच नित्यनैमित्तिकेषु "स्वकर्मणा तमभ्यर्च्यसिद्धिंविन्दति मानवः । इत्यादिवत् - काम्यानां भगवत्प्रीतिसाधनत्वे मानाभावः, "योहवै तदक्षरं गार्ग्यविदित्वाऽस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षशतान्यन्तवदे-वास्य तद्भवती' ति श्रुत्या याग होम तपो दानादीनां भगवद्वेदनपूर्वकत्वेन तदभावेन च नित्यानित्य फलकत्व प्रतीत्या नित्यनैमित्तिकवदेव भगवत्समा-राधनत्वसिद्धेः, अतएव - 'सर्व कर्म फलत्याग' मित्यनेन नित्यनैमित्तिकवदेव काम्यस्यापिफलत्यागएवत्यागः - न स्वरूपत्याग इति भगवतैवोपबृंहितेयं श्रुतिः; अन्यथा सर्वशब्दवैयर्थ्यप्रसंगादिति । अतो मोक्षशास्त्रस्थ सन्नचास-त्याग शब्दार्थस्य काम्यकर्म स्वरूपत्याग सर्वकर्मफलत्यागात्मकत्वविषयेयं वादिविप्रतिपत्तिरितिभावः । अन्न संन्यासत्यागयो रेकत्व मंगीकृत्यैव भग-वतोत्तरं दत्तम्, उभयोर्भेदांगीकारेणैव व्याख्यानाविरोधस्तूत्तरत्र स्पष्टयिष्यते ।। २ ।।

पूर्वं फलविरोधतदभावाभ्यां वादिविप्रतिपत्तिरुक्ता । इदानीं दोष-योग तदभावाभ्यां वाद्यन्तर विप्रतिपत्तिमाह—

एके - केचन । मनीषिणः - विद्वांसः, सांख्याः तन्मतानुसारिणो

**से कहते हैं, अर्थात् संन्यास एवं त्याग इन दोनों शब्दों का अर्थ एक ही है । मतों में मे विभिन्नता का कारण केवल विषय को लेकर है । अर्थात् कर्म का स्वरूप त्याग ही त्याग या संन्यास है अथवा कर्म का फल-त्याग त्याग या संन्यास है इस विषय को लेकर ही मतभेद या वाद-विवाद है ।। २ ।।**

**कोई-कोई पण्डित जन अर्थात् कपिल के सांख्यमतानुयायी वैदिक जन कहते हैं कि रागद्वेषादि दोषों के समान संसार बन्धन में डालने वाले यज्ञादि समस्त कर्म**

**निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।**
**त्यागो हि पुरुषव्याघ्र त्रिविधः सम्प्रकीर्तितः ॥ ४ ॥**

वैदिकाश्च । दोषवत् - रागहिंसादिदोषयुक्तम् । कर्म - सर्वं वैदिक कर्मेत्यर्थः ; नतु काम्यमात्रम्, प्रथमपक्षेण पौनरुक्त्यापत्तेः । अतः सर्वमपि । त्याज्यं - दोषवत्त्वेन मुक्तिप्रतिबन्धकत्वान्मुमुक्षूणां वर्जनीयम् । इति । प्राहुः । तदुक्तं सांख्यशास्त्रे - "दृष्टवदानुश्रविकस्सह्यविशुद्धिक्षयातिशययुक्त" इति । अपरे - अस्मन्मतानुसारिणः । यज्ञ दान तपः कर्म - यज्ञ दान तपोरूपं शास्त्र विहितं क्रियासामान्यम् । न त्याज्यं - हिंसाद्यन्वितमपि न वर्जनीयम् अपितु तथाभूतं लौकिकमेव त्याज्यम् । इति च प्राहुः ॥ ३ ॥

एवं वादिविप्रतिपत्तिमुपन्यस्य स्वसिद्धान्तमाह—

हे भरतसत्तम ! तत्र - पूर्वोक्तरीत्या सन्दिग्धे त्यागे विषये । निश्चयं - त्यागविषय संशयनिवर्तन क्षमं निर्धारणम् । मे - भ्रमादि दोषरहितात्सर्वज्ञादात्मनः । शृणु । पुरुषव्याघ्र । त्यागः - क्रियमाण वैदिक कर्मविषयः परित्यागः । त्रिविधः - कर्मजन्यस्वर्गादिफलं मे भूयादिति फलाभिसन्धित्यागएकः, मत्फलसाधनत्वान्मदीयमिदं कर्मेति ममताबुद्धित्यागरूपोऽपरः, अस्मिन्कर्मण्यहं कर्तेति बुद्धिं परित्यज्य सवश्वर कर्तृत्वाभि सन्धिरूप स्तृतीय इति । सम्प्रकीर्तितोहि-'मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा, निराशी निर्ममोभूत्वा युध्यस्वविगतज्वर' इति पूर्वमेवोक्तः खल्वित्यर्थः । अत्र सिद्धान्तकथने त्यागेनिश्चयं शृणिवत्युक्त्या सन्न्यासेनिश्चयंशृणिवत्यनुक्त्या च पूर्व प्रश्नोत्तर सन्दर्भस्यैकार्थं विषयत्वं स्पष्टम् ॥ ४ ॥

सर्वथा मोक्षशास्त्रोक्तत्यागो न कर्मस्वरूपविषय इत्याह—

यज्ञ दान तपः कर्म - यज्ञदानतपोरूपं वैदिकंकर्म सामान्यम् । न त्याज्यं - आत्म वेदनोत्पत्त्यनन्तरमपि न हेयम् । अपितु । तत् - यज्ञादिकं

मुमुक्षु पुरुषों के लिए वर्जनीय हैं । दूसरे पण्डित कहते हैं कि यज्ञादि कर्म त्यागने योग्य नहीं हैं ॥ ३ ॥

अब भगवान् इस विषय में अपना निर्णय बताते हैं—हे भरत कुलश्रेष्ठ अर्जुन ! पूर्वोक्त विवादयुक्त 'त्याग' के विषय में मेरा सिद्धान्त (निर्णय) सुनो । हे पुरुषसिंह ! इससे पहले 'त्याग' तीन प्रकार का मैंने तुम्हें बताया है—(कर्तृत्व, फल और संग अर्थात् आसक्ति या ममता बुद्धि का त्याग) ॥ ४ ॥





**यज्ञदान तपः कर्म न त्याज्यं कार्यमेव तत् ।**
**यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५ ॥**
**एतान्यपि तु कर्माणि संगं त्यक्त्वा फलानि च ।**
**कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६ ॥**

सर्वं कर्म । कार्यमेव, 'आप्रयाणात्तत्रापि हि दृष्ट' मित्यादि सूत्रोक्तरीत्या यावदायुष महरहः कर्तव्यमेवेत्यर्थः । यतः । यज्ञः दानं तपश्चैव, इत्येतानि । मनीषिणां - मननशीलानाम्, उपासकानामित्यर्थः । पावनानि - उपासनप्रतिबन्धक प्राचीन कर्मनिवर्तकानीत्यर्थः अनेन दोषवत्त्वाक्षेपो निरस्तो वेदितव्यः ॥ ५ ॥

निश्चयं शृण्वित्यत्रोक्तं निश्चयं तथैव दृढीकुर्वन्नुपसंहरति—

हे पार्थ ! एतान्यपि - यान्युपासकानामपि पावनानि-एतान्यपि कर्माणि । संगं - कर्तृत्व ममता बुद्धिम् । फलानि च - फलाभिसन्धिं च । त्यक्त्वा तु - परित्यज्य तु । कर्तव्यानि - अवश्यकार्याणि । इति । निश्चितं - निर्धारितम् । उत्तमं - सर्वातिशायि । मे - मम । मतम् । मत्सम्बन्धिसिद्धान्त इत्यर्थः ॥ ६ ॥

त्याज्यं दोषवदिति सांख्यमतं वेदबाह्यमततुल्यत्वान्निराकरोति—

नियतस्य - वर्णाश्रम नियत पंचमहायज्ञादि नित्य नैमित्तिकरूपस्य । कर्मणः । सन्न्यासः । नोपपद्यते - नैवयुज्यते । पंचमहायज्ञादिकर्मणः ।

मोक्ष शास्त्र में त्याग नाम से कर्म का स्वरूपतः त्याग नहीं है, और क्यों नहीं इसका कारण भी बताते हैं—

यज्ञ, दान तप आदिक वैदिक कर्म मुमुक्षु जनों को कभी भी नहीं त्यागने चाहिऐ; इन्हें मरणकाल तक प्रतिदिन करें । इसका कारण है कि ये यज्ञ, दान, तप आदिक स्ववर्णाश्रमोचित कर्म मननशील उपासनाशील जनों को पवित्र करते हैं । कर्तृत्व मेरापन एवं फलाभिसन्धि रहित उक्त वैदिक कर्म जीवन पर्यन्त उपासना करने वाले मुमुक्षुओं को उपासनासिद्धि में प्रतिबन्धक अन्य जन्मों के प्राचीन कर्मों से होने वाली वासना का बिनाश कर मन को निर्मल एवं पवित्र करते हैं ॥ ५ ॥

हे अर्जुन ! पूर्वोक्त यज्ञ तप आदिक सम्पूर्ण कर्म तो कर्तृत्व बुद्धि, ममता एवं फल की कामना रहित बुद्धि से अवश्य ही जीवन पर्यन्त करने योग्य है, यह मेरा निश्चय किया हुआ श्रेष्ठ मत है ॥ ६ ॥

**नियतस्य तु संन्यासः कर्मणो नोपपद्यते ।**
**मोहात्तस्य परित्याग स्तामसः परिकीर्तितः ॥ ७ ॥**
**दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ।**
**स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ८ ॥**

---

मोहात् । परित्यागः - सन्नयासः । तामसः - तमोगुणप्रभवः । परिकीर्तितः कथितः । अयंभावः - महायज्ञाद्यकरणे यज्ञशिष्टाशना लाभात् - 'आहारशुद्धौ-सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवास्मृतिः । स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष' इति मुक्तिसाधनतयोक्तशुद्धाहारालाभात्, 'ते त्वघं भुञ्जते पापाये पचन्त्यात्म-कारणात् ।' इत्युक्तरीत्या पापाशनप्रसक्त्यादि विपरीतज्ञान फलकः सर्वकर्म-फलत्याग स्तामस इति पूर्वमेवोक्तमिति । अत्रापि कर्मणस्संन्यासो नोपप-द्यत' इत्युपक्रम्य त्यागइति त्यागशब्देनानुवादात्तयो रेकार्थत्वं ज्ञायत इत्यर्थ भेदांगीकारेण व्याख्या नोचितेति भावः ॥ ७ ॥

कायक्लेशभयात् - कायस्य - शरीरस्य, क्लेशः - आयासः, तस्माद्य-द्भयं अवसादः, तस्माद्दुःखात् । अर्थार्जिनादि साध्यत्वाच्च । दुःखमित्येव नत्वधर्मत्व बुद्धचे ति भावः । कर्म - पंचमहायज्ञादि नित्यनैमित्तिकादि कर्म । यः । त्यजेत् - योगनिष्पत्तये ज्ञानाभ्यास मेवालम्ब्य नित्यनैमित्तिकादि कर्म-त्यागं कुर्यादितिभावः । सः । राजसं - रजोमूलम् । अयथावस्थित शास्त्रा-र्थरूपमित्यर्थः । त्यागं - नित्यादित्यागम् । कृत्वा । त्यागफलं - सात्विक-त्याग फलमात्म साक्षात्कारम् । नैवलभेत् - नैवप्राप्नुयात् । किन्तु कर्मणैव । नच कर्मणोदुःखरूपत्वान्मनः प्रसादाभावः - स्वाराधन प्रियत्वेन भगवतो मनःप्रसादन सम्पत्तेरिति भावः ॥ ८ ॥

---

**वर्णाश्रम धर्म का अङ्गस्वरूप नित्यनैमित्तिक कर्म का स्वरूप त्याग (संन्यास) किसी प्रकार से उचित नहीं है । ये सब कर्म दोषयुक्त हैं अतएव त्यागने योग्य हैं, इस मोह से सम्पूर्ण कर्मों का त्याग करना 'तामस' कहा जाता है ॥ ७ ॥**

**हमारे शरीर को क्लेश होगा, इस भय से या बड़ी कठिनाई से साध्य हैं इस बुद्धि से जो नित्यनैमित्तिक कर्मों का त्याग करते हैं, उनका यह त्याग राजसिक कहा जाता है । इस प्रकार के त्याग से वे लोग फल (सिद्धि) प्राप्त नहीं कर पाते हैं । (सात्विक त्याग का फल आत्म साक्षात्कार उसे वे प्राप्त नहीं कर पाते हैं) ॥ ८ ॥**





**कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।**
**संगं त्यक्त्वा फलं चैव स त्यागः सात्विको मतः ॥ ९ ॥**
**न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते ।**
**त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशय ॥१०॥**

---

आत्मसाक्षात्कारहेतुं सात्विकत्यागमाह—

हे अर्जुन ! नियतम् कर्म - पंचमहायज्ञादिकर्म । संगं - कर्मणि ममता कर्तृत्वाभिसन्धिम् । फलं चैव - स्वर्गाद्यभिसन्धिं च । त्यक्त्वा । कार्यमित्येव - मदाराधनत्वात्स्वयं प्रयोजनमित्येव । क्रियते यत् क्रियते चेत् । सः त्यागतः । सात्विकः सत्त्वमूलः । मतः - सम्मतः । यथावस्थित शास्त्रा-र्थज्ञानमूलक इत्यर्थः । सत्त्वं यथावस्थितज्ञान हेतुरिति पूर्वत्रोत्तरत्र च स्पष्टमिति भावः ॥ ९ ॥

सात्विकत्यागवतः - उदासीनवदासीन इत्याद्युक्तरीत्या विकारा भावो लक्षणमुच्यते—

सत्त्वसमाविष्टः प्रवृद्धसत्त्वगुणनिष्ठः । अतएव । मेधावी - यथावस्थित-वस्तुतत्त्वज्ञः । अतएव । छिन्नसंशयः - निश्शेषनिवृत्तसंशयः । त्यागी - त्रिविधत्यागनिष्ठः पुमान् । अकुशलं - प्रामादिकं निषिद्धकर्म । नद्वेष्टि । कुशले - कल्याणे स्वर्गादिसाधनेकर्मणि । नानुषज्जत - नात्यन्तप्रीतिमान् भवति । त्यक्तब्रह्मव्यतिरिक्तफलत्वात्कर्मणि ममतारहितत्वात्कर्तृत्वाभि सन्धिरहितत्वाच्च वासनावशात्प्रसक्तयो कुशलाकुशलयोः प्रीतिद्वेषरहित इत्यर्थः ॥ १० ॥

---

**हे अर्जुन ! प्रारब्ध से होने वाले नियत नित्यनैमित्तिक, वर्णाश्रमोचित यज्ञादि कर्मों में ममता एवं कर्तृत्व का अभिमान और स्वर्गादि फल की अभिलाषा का परित्याग पूर्वक जो भगवद् आराधना के लिये आवश्यक रूप कर्तव्य बुद्धि से अनुष्ठित त्याग होता है वही त्याग सात्विक गुणों का पैदा करने वाला है यह शास्त्रा-भिमत सिद्धान्त है ॥ ९ ॥**

**बढ़े हुए सत्वगुण से युक्त अतएव किसी भी वस्तु के यथार्थ रूप को जानने वाला, संशय रहित, त्यागी पुरुष अनिष्टकारक फल से युक्त कर्म के प्रति द्वेष नहीं करता एवं स्वर्गादि इष्ट फल से युक्त कर्म के प्रति अनुरक्त नहीं होता है ॥ १० ॥**

**न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।**
**यस्तु कर्मफलत्यागी स त्यागी त्यभिधीयते ॥११॥**

अथत्रिविधत्याग एव मोक्षशास्त्रोक्तत्यागः - न कर्मस्वरूपत्यागः - अशक्यत्वादित्याह— (नहीति)

देहभृता - देहधारिणा । अशेषतः - कात्स्न्र्येन । कर्माणि - अन्नपानादीनि तदनुबन्धीनि महायज्ञद्रव्यार्जनादीनि च । त्यक्तुं हातुम् । न शक्यं हि । किन्तु । यः । कर्मफलत्यागी - पंचमहायज्ञ फलकामनारहितः । अनेनैव कर्मणाम्ममता कर्तृता त्यागोप्यर्थसिद्धः, अत्र त्रिविधत्यागी य इत्यर्थः । सः । त्यागीति - 'संन्यासयोगाद्यतयश्शुद्धसत्त्वाः । त्यागेनैके अमृतत्वमानशुः ।' इत्यादि शास्त्रोक्तत्यागीति । अभिधीयते - तत्त्ववेदिभिः प्रोच्यत इत्यर्थः ॥ ११ ॥

ननु दर्शपूर्णमासज्योतिष्टोमादीनि फलसम्बन्धितयैव श्रूयन्ते, नित्यनैमित्तिकान्यपि - 'प्राजापत्यं गृहस्थाना' मित्यादिना तत्तत्फलसाधनतयैव स्मर्यन्ते, अतस्तत्तत्फलसाधनस्वभावतया लौकिककर्मवत्फलानभिसन्धानेपि फलावश्ययं भावादमृतत्वफलार्थिनो विषतरुबीजावापवन्मोक्षफलार्थिनः कर्मानुष्ठाने मोक्षविरुद्ध फलावाप्तिरवर्जनीया, अतस्तत्स्वरूपत्यागएव मोक्षशास्त्रार्थः, न फलत्याग इत्यत्राह —

अनिष्टं - नरकादि । इष्टं - स्वर्गादि । मिश्रं च - इष्टानिष्टरूप पशुपुत्रादि च । इति । त्रिविधं - त्रिप्रकारम् । फलम् । कर्मणः - वेदोक्तानिषिद्ध ज्योतिष्टोमादि पुत्रेष्ट्यादि कर्मजातात् । अत्यागिनांत्रिविधत्यागरहितानाम् । कर्तृत्वाद्यभिसन्धिमतामितियावत् । प्रेत्य मृत्वा, कर्मानुष्ठानोत्तरकालमित्यर्थः । भवति - उत्पद्यते । संन्यासिनां तु - त्रिविधत्यागिनां तु । क्वचित् - इहपरत्रवा । तत्फलम् । न भवतीत्यर्थः । अयं भावः - नहिबोजानापादि लौकिककर्मणामिव वैदिक कर्मणामप्यनुद्दिष्ट फलसाधनताग्राहकशास्त्रविरोधात्; शास्त्रं हि - स्वर्गकामो यजेतेत्यादि काम-

शरीरधारी जीवों (पुरुषों) के द्वारा देह धारण के लिए भोजन, जलपान, द्रव्यसंग्रह, धनार्जन आदिक कर्मों का त्याग किसी भी प्रकार से सम्भव नहीं है, किन्तु जो करने योग्य कर्मों का फल, उनके प्रति ममता एव आसक्ति का त्याग करता है, बुद्धिमान व्यक्ति द्वारा उसी को यथार्थ रूप से 'त्यागी' कहा जाता है ॥ ११ ।





**अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।**
**भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥१२॥**
**पंचैतानि महाबाहो कारणानि निबोध मे ।**
**सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥१३॥**

विषयस्यैव स्वर्गादेः फलत्वं यागादेश्च तत्साधनतां बोधयति; अतस्त्यागिनो मुमुक्षोरकाम्यतया तदनुष्ठितान्नित्यादिकर्मणो न स्वर्ग पश्वाद्युत्पत्तिः ; अपि तु — 'तमेतं वेदानुवचनेन ब्राह्मणाविविदिषन्ति यज्ञेन दानेन तपसा नाशकेने' त्यादि श्रुत्या कर्मणामिष्यमाणज्ञानसाधनत्वविधानादिच्छाविषयात्मसाक्षात्कारफलं सिद्धचतीति । एवम्मुमुक्षोः प्रामादिक निषिद्धकमण्यपि कर्तृत्वाद्यभिसन्धानादेव नानिष्टफलं जनयतीति ध्येयम् ॥ १२ ॥

पूर्वं कर्मस्वरूपत्यागस्य तामसत्वात्क्रियमाणेष्वेव कर्मसु फलममता कतृत्वाभिसन्धि त्याग एव शास्त्रसिद्धस्संन्यासः - स एव त्यागश्चेत्युक्तम् । इदानीमेतत्सिद्धचर्थमन्तर्यामिणि भगवति कर्तृत्वाभिसन्धिप्रकारमाह—

हे महाबाहो ! सर्वकर्मणाम् । सिद्धये निष्पत्तये । सांख्ये - वैदिक बुद्धया यथावस्थितवस्तुविषयया निष्पादिते । कृतान्ते - सिद्धान्ते । प्रोक्तानि । एतानि - वक्ष्यमाणानि । पंच । कारणानि । मे-मत्तः । निबोध अवगच्छ । अयंभावः - 'य आत्मनि तिष्ठन्नात्मनोन्तरो यमात्मा नवेद यस्यात्माशरीरं य आत्मानमन्तरो यमयति । अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा ।' इत्यादि श्रुतयः - शरीरेन्द्रिय मनः प्राणजीवात्मोपकरणं परमात्मानमेव कर्तारं निर्धारयन्ति । अत स्वशेषभूतै र्जीवकरणकलेवरादिभिश्च - लोकवत्तुलीलाकैवल्यमिति न्यायेन सिद्धस्वलीला प्रयोजनाय लौकिकं वैदिकं

कर्म के करने से अनिष्ट नरक आदि, इष्ट-स्वर्गादि एवं इष्टानिष्ट जैसे पुत्र पशु आदिक ये तीन प्रकार के फल उत्पन्न होते हैं। जो लोग कर्म का फल, उसका कर्तृत्व एव सङ्ग-आसक्ति आदि का त्याग नहीं कर पाते, ऐसे अत्यागी पुरुष मरने के बाद उक्त तीन प्रकार के फल प्राप्त करते हैं। किन्तु उक्त त्रिविध फलों के त्यागी संन्यासी पुरुषों को मोक्ष के विरोधी इस प्रकार के फलों का भोग नहीं करना होता होता है। यहाँ त्याग अर्थ में ही संन्यासी शब्द व्यवहृत हुआ है ।। १५ ।।

तत्व के विषय में सात्विक बुद्धि के विचार से अर्थात् वेदान्त के सिद्धान्त में सम्पूर्ण कर्मों की समाप्ति के लिए जो पाँच हेतु (कारण) निर्धारित हुए हैं, हे महाबाहो ! अर्जुन ! उन्हें तुम मुझ से सुनो ॥ १३ ।।

**अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।**
**विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥१४॥**

---

कर्मारभते । अतोजीव गत क्षुन्निवृत्त्यादि फलं तत्साधनकर्म च शुकाद्रिपोषणवत्परमपुरुषस्यैव प्रयोजनतया पर्यवस्यतीति सिद्धम् ॥ १३ ॥

तदेवाह (अधिष्ठानमिति) ।

न्याय्यं वा - धर्म्यं वा । विपरीतं वा - अधर्म्यं वा । शरीरवाङ्-मनोभिः शरीरेण - वाचा मनसा च । यत् । कर्म । नरः । प्रारभते - अनुतिष्ठति । तस्य - कर्मणः । एते । पंच । हेतवः - कारणानि । तान्येवाह 'अधिष्ठान' मित्यादिना । अधिष्ठानं - अधिष्ठीयते जीवात्मनीत्यधिष्ठानम्, भूतसंघातरूपं शरीरम् । तथा । कर्ता - जीवात्मा । पृथग्विधं - नाना-व्यापारयुक्तम् । कारणं च - समनस्कं कर्मेन्द्रिय पंचकं ज्ञानेन्द्रि पंचकं च । विविधा - प्राणापानादि बहुप्रकारा । पृथक्चेष्टा च - प्राणापानादि भेदेन पृथग्भूतस्यवायोश्चेष्टा च । अत्र - कर्महेतुकलापे । पंचमम् । दैवं चैव - अन्तर्यामीपरमात्मा च । इत्येते पंचहेतव इतिपूर्वेणान्वयः । ननु - अस्मिन्लोके कर्तृशब्देन जीवोनिर्दिष्टः, कर्ता च स्वतन्त्र इति तम्प्रति परमात्मनः करणकलेवरादिवद्गुणभूतत्वमायातीतिचेन्न; 'सर्वस्यचाहं हृदिसन्निविष्टो मत्तस्स्मृति र्ज्ञानमपोहनं चे'ति - ईश्वरस्सर्वभूताना'मिति च पूर्वोत्तरसंदर्भेण 'परात्तुतच्छ्रुते'रिति ब्रह्मसूत्रोक्तरीत्या-'एष एव साधुकर्म कारयति त' मिति श्रुत्या च जीवकर्तृत्वे परमात्मायत्तत्वस्य स्फुटमवगमेन जीवस्यैव भगवत्पारतन्त्र्य प्रसिद्धेः । ननु परमात्मना प्रेरितो जीवो यदि हितनिषिद्धयोः प्रवर्तेत तर्हि वायूदकादिप्रेरिततृणादिवन्नकार्यताबुध्येति कार्यताबुद्ध्याऽप्रवृत्तत्वाद्विधिनिषेधशास्त्रकिंकरो न स्यात् - कथं नुवा तर्हि तस्य प्रवृत्तिनिवृत्यो

---

शास्त्र से सम्बन्धित हो या शास्त्र से सम्बन्धित न हो, शरीर वाणी एवं मन के द्वारा जो कर्म मनुष्य आरम्भ करता है, उस कर्म के निम्नलिखित पांच कारण होते हैं—

शरीर, जीवात्मा विभिन्न करण, (अर्थात् पञ्च ज्ञानेन्द्रिय, पाँच कर्मेन्द्रिय, मन) प्राण अपान आदि विभिन्न प्रकार की वायु के कार्यरूप विभिन्न चेष्टायें एवं पाँचवां कारण परमात्मा कर्मानुष्ठान में ये पाँच हेतु होते हैं ।

(कर्मानुष्ठान में जीवांश, पूर्व जन्मों के कर्म, तदनुसारी वासना, उसके अनु-





**शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ।**
**न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥१५॥**
**तत्रैवं सति कर्तारमात्मानं केवलंतु यः ।**
**पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥१६॥**

---

र्विधिनिषेधशास्त्रार्थवत्वमितिचेन्न - अनाकलित वेदान्ताभिप्रायतानिबन्धनं ह्येतच्चोद्यम् । नहि परमात्मा वाय्वादिवद्बलात्प्रेरयति, अपितु परमकारुणिकतया जीवस्य करणकलेवरादीनि तेषां प्रवृत्तिनिवृत्त्यनुकूलां शक्ति भूतलादिवत्स्वरूपेण स्वसंकल्पेण च तेषां जीवस्य च दत्वा-उदासीनवदन्तर्यामिणि स्थिते स्वपूर्वकर्म वासनानुगुणेच्छया जीवः क्वचित्प्रवर्तते - तदप्रतिषेधात्मकानुमति मात्रेणान्तर्यामिणि स्थिते तन्निष्पादने च सत्युत्पन्नज्ञानचिकीर्षा प्रयत्नत्वलक्षणजीवकर्तृत्वलाभे परमात्मायत्तेऽनन्तरंचोदासीने तस्मिन् प्रथमं स्वतन्त्रप्रवृत्तिहेतुतायाजीवस्य सम्भवेन सर्वसामंजस्यमितिभावः ॥१४-१५

ननु विधिनिषेधशास्त्रार्थवत्त्वाय जीवस्य कर्तृत्वाभ्युपगमेऽकर्तृत्वानुसन्धानं भ्रम एव स्यादित्यत्राह—

एवंसति - जीवकर्तृत्वे परमात्मानुमति पूर्वकेसति । तत्र - तस्मिन् कर्मणि । आत्मानं केवलं - आत्मानमेव । कर्तारं । यस्तु पश्यति - अहमेव कर्तेति यस्तु मन्यत इत्यर्थः । सः - पुमान् । अकृतबुद्धित्वात् - अनिष्पन्नयथावस्थितबुद्धित्वात् । दुर्मतिः - विपरीतमतिस्सन् । न पश्यति - आत्मानं यथावस्थितं परतन्त्र कर्तारं न पश्यतीत्यर्थः । अतएव स्वतन्त्र कर्तृत्वधीरेव भ्रम इति भावः ॥ १६ ॥

---

सार कर्म करने में स्वेच्छा से किया गया प्रयत्न । परमात्मा के अंश जीव को इस प्रकार स्वेच्छा से किया गया प्रयत्नानुगुण अनुमति देना एवं उन-उन कार्यों में जीव को लगाना ) ॥ १४-१५ ॥

कर्म के करने में जीव का यह कर्तृत्व (कर्तापन) परमात्मा की अनुमति की अपेक्षा रखता है, इसलिए कर्म के करने में जो केवल आत्मा को ही अर्थात् स्वयं को ही कर्ता मानता या समझता है वह पुरुष यथार्थ रूप से शास्त्रीय बुद्धि वाला न होने के कारण कुबुद्धि युक्त होकर वास्तविक कर्ता को नहीं देख पाता है । (जीव में कर्तृत्व तो भगवत् संकल्पाधीन है, स्वतन्त्र रूप से नहीं, स्वतन्त्र कर्तापन की धारणा दुर्मति है) ॥ १६ ॥

**यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।**
**हत्वापि स इमाँल्लोकान्न हन्ति न निबध्यते ॥१७॥**
**ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।**
**करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥१८॥**

---

अकर्तृत्वानुसन्धानमेव विशदयति ॥—

यस्य - पुंसः । भावः - कर्तृत्वविषय मनोवृत्तिः । नाहंकृतः - नाहमभिमानकृतः । अहमेव स्वतन्त्रः करोमीत्यभिमानेन न कृत इत्यर्थः । अतएव । यस्य । बुद्धिः । न लिप्यते - न सज्यते । सफल ममतासक्ता न भवतीत्यर्थः । सः पुमान् । इमान् । लोकान् हत्वापि - हिंसित्वापि । न हन्ति- हननदोषभाङ् न भवति । न निबध्यते - तेन कर्मणा न निबध्यते । तत्फलं नानुभवतीत्यर्थः । अनेन कथं भीष्ममहं संख्ये - इत्यादिकमपि प्रतिक्षिप्तं भवतीति द्रष्टव्यम् ॥ १७ ॥

इयता प्रबन्धेन संन्यासशब्दार्थस्त्रिविधत्यागशशोधितः । अस्य च सर्वमिदमकर्तृत्वाद्यनुसन्धानं सत्त्वगुणवृद्धयै व भवतीति कर्मचोदनानुबन्धिनां ज्ञानादीनां सत्त्वादिगुणत्रैविध्येन त्रैविध्यं प्रपंचयिष्यन् कर्मचोदनां निरूपयति ॥—

ज्ञानं-कर्मविधिवाक्यजन्यं ज्ञानम् । इदं कर्म मया कर्तव्यमिति ज्ञानम् । ज्ञेयं - तज्ज्ञानविषयज्योतिष्टोमादिकर्म । परिज्ञाता - फलकामिनाममेदं

---

**जो पुरुष किसी कार्य को मैं स्वतन्त्र रूप से करता हूँ' इस प्रकार की बुद्धि वाला नहीं है, इसलिए जिसकी बुद्धि कर्म में ममता रहित एवं फलाभिसन्धि रहित है, ऐसे पुरुष द्वारा युद्ध में इस समस्त लोक के विनष्ट करने पर भी उसे हत्या से होने वाला पाप स्पर्श तक नहीं कर पाता, अतएव उसे इस हत्या कर्म का फल भी नहीं भोगना पड़ता ।। १७ ।।**

**'ज्ञान'–अर्थात् विधि निषेधात्मक कर्तव्यता अकर्तव्यता विषयक ज्ञान, 'ज्ञेय' उक्त ज्ञान का विषय विविध करने योग्य कर्म, 'परिज्ञाता' अर्थात् उक्त कर्म का ज्ञाता (जानने वाला) जीव ये तीन तत्व प्रत्येक कर्म के प्रयोजन (प्रेरक) हैं। अर्थात् ज्योतिष्टोम यज्ञ आदि विविध कर्म ज्ञान ज्ञेय एवं ज्ञाता इन तीन प्रकार की वस्तुओं से विशिष्ट होते हैं। उनमें से इस यज्ञ कर्म के विषय में धान्य, जौ, लकड़ी इत्यादि कर्म के साधनभूत विभिन्न द्रव्य, यज्ञादि विविध कर्म एवं उस कर्म का अनुष्ठाता (जीव) इन तीन वस्तुओं द्वारा कर्म सम्यक् रूप से अनुष्ठित होता है ॥ १८ ॥**





**ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ।**
**प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥१९॥**

---

कर्तव्यमिति कार्यबोद्धाचेतनः । इति त्रिविधा । कर्मचोदना - बोधबोद्धव्यबोद्धृयुक्तः कर्मविधिरित्यर्थः । तत्र बोद्धव्यमितिचोक्तं कर्मैव ससम्बन्धिकं विवृणोति (करणमिति) कर्मसंग्रहः-संगृह्यतेऽनुष्ठानार्थं संक्षिप्यत इति संग्रहः, कर्मचासौसंग्रहश्च कर्मसंग्रहः करणं व्रीहिभिर्यजेतेति विहितव्रीह्यादिद्रव्यम् । कर्म तन्निष्पाद्य योगादि । कर्ता तदनुष्ठाता च । इति । त्रिविधः । पूर्वं बोद्धुरेव कर्मानुष्ठानार्थं कर्तृत्वावस्थामापन्नत्वाद्गुणभूतेन कर्त्रा व्रीह्यादिद्रव्येण स्वस्वरूपेण च विप्रकारं कर्मेत्यर्थः ॥ १८ ॥

एवं कर्मचोदनां तद्विषयं कर्म च विविच्य चोदनानुबन्धिनां ज्ञानादीनां त्रैविध्यं गुणतो दर्शयितुं पूर्वश्लोकोक्तं निष्कृष्यानुवदिति (ज्ञानमिति) ज्ञानं - कर्तव्य कर्मविषयं ज्ञानं । कर्म च - अनुष्ठीयमानं ज्योतिष्टोमादि कर्म च । कर्ता च - अस्यानुष्ठाता च । गुणसंख्याने - गुणकार्यगणने । गुणभेदतः - सत्वादिगुणभेदात् । त्रिधैव । प्रोच्यते । तान्यपि - सत्वादिगुण भेद भिन्नानि ज्ञानादीन्यपि । यथावत् शृणु - सावधानतया यथावच्छ्रवणयोग्यो भवेत्यर्थः । अत्र पूर्वश्लोकोक्तस्य कार्यकर्मज्ञानस्य ज्ञानशब्देन - तादृशज्ञानाश्रयस्य कार्यकर्मबोद्धुः कर्तृशब्देन - करणनिष्पाद्यत्वेन निर्दिष्टस्य कर्मणः कर्मशब्देन चानुवाद इति द्रष्टव्यम् ॥ १९ ॥

एवंचोदनानुबन्धिनो निरूप्याद्यस्य गुणतस्त्रैविध्यं प्रतिपादयति "सर्वभूते" ष्वित्यादिभिस्त्रिभिः ।

विभक्तेषु-सितनीलादिरूपेण पृथग्भूतेषु सर्वभूतेषु - ब्राह्मणक्षत्रियादिवर्ण ब्रह्मचारि गृहस्थाश्रमादि नानाप्रकारेष्वचित्संसृष्टजीवेषु, अविभक्तं 'गवामनेकवर्णानां क्षीरस्य त्वेकरूपते'ति श्रुत्युक्तरीत्या ज्ञानैकाकारतया विभागरहितम् । अव्ययं - व्ययस्वभावेष्वपि ब्राह्मणादिशरीरेषु नाशरहितम् । एकं - ज्ञानैकाकारतयैकरूपम् । भावं - आत्मवस्तु । येन - कर्मकर्तव्यता ज्ञानेन । ईक्षते - पश्यति । कर्माधिकारवेलायां सर्वाधिकारिषु शुद्धात्मस्वरूपं विषयी-

---

**कर्तव्य कर्म के विषय में ज्ञान, किये जाने वाला कर्म, एवं कर्म का करने वाला (जीव) सात्विक, राजसिक, तामसिक गुणों के भेद से तीन प्रकार के कहे जाते हैं। विभिन्न गुणों के कार्यानुसार वे तीनों ज्ञान कर्म और कर्ता भी प्रत्येक तीन-तीन प्रकार के होते हैं। उनका यह त्रिविधपन मुझ से सुनो ॥ १९ ॥**

**सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।**
**अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्विकम् ॥२०॥**
**पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान् ।**
**वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥२१॥**

---

क्रियत इत्यर्थः । तज्ज्ञानम् - तादृशकर्मकर्तव्यताज्ञानम् । सात्विकं - सत्वमूलम् । विद्धि ॥ २० ॥

राजसं कर्मकर्तव्यता ज्ञानमाह (पृथक्त्वेनेति) यज्ज्ञानम् ।

सर्वेषु । भूतेषु - ब्राह्मणादिशरीरेषु । पृथक्त्वेन तु - ब्राह्मणत्वाद्याकारपृथक्त्वेन सितनीलादिभेदेन च । नानाभावान् - नानाभूतानात्मनः । राजसं - रजोमूलम् । विद्धि ॥ २१ ॥

तामसं कर्मकर्तव्यता ज्ञानमाह--

यत्तु कर्मकर्तव्यता ज्ञानम् । एकस्मिन् - एकफले कर्मणि प्रेतभूतगणाद्याराधने । कृत्स्नवत् - कृत्स्नफलसाधन इव । सक्तं - आसक्तम् । अहेतुकं - अत्यल्पसाधनतया कृत्स्नफलसंगहेतुरहितम् । अतत्त्वार्थवत् - राजसकर्तव्यताज्ञानवदेव - आत्मन्येकरूपेऽपि मिथ्याभूतपृकक्त्वविषयम् । अल्पं च - अल्पनिहीनाराधनविषयत्वात्स्वरूपः फलतश्चाल्पम् । तत् - ज्ञानम् । तामसं तमोमूलकम् । उदाहृतम् ॥ २२ ॥

एवं ममेदं कर्तव्यमिति कर्मकर्तव्यताज्ञानस्यानुष्ठानवेलायां स्वांशादिविषये गुणतस्त्रैविध्यमुक्त्वा कर्तव्यस्य कर्मणो गुणतस्त्रैविध्यमाह—

---

ब्राह्मण, क्षत्रिय, वैश्य, ब्रह्मचारी इत्यादि रूप से विभक्त समस्त जीवों में जिस ज्ञान के द्वारा समस्त आत्माओं को ज्ञानाकार स्वरूपतः एक, अविभक्त रूप में अर्थात् ब्राह्मणत्व प्रभृति अनेक आकारविशिष्ट विभिन्न मनुष्यों में एवं श्वेत नील, दीर्घ ह्रस्व पशु पक्षी आदि जीवों में स्थित ज्ञानाकार आत्मा को अभिन्न रूप में तथा नश्वर शरीरों में आत्मा को नाश रहित रूप में देखता है उसी ज्ञान को सात्विक जानो ।। २० ।

किन्तु समस्त जीवों में ब्राह्मणादि एवं श्वेत दीर्घ पशु आदिक पृथक् वर्ण और आकार विशिष्ट नाना शरीरों में स्थित कहकर उन-उन शरीरों में आत्मा को भी नाना रूप से अनेक प्रकार की अनेक वर्ण और आकार विशिष्ट जिस ज्ञान के आधार से मानते हैं उस ज्ञान को राजसिक ज्ञान जानो ॥ २१ ॥





**यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् ।**
**अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतं ॥२२॥**
**नियतं सङ्गरहितमरागद्वेषतः कृतं ।**
**अफलप्रेप्सुना कर्म यत्तत्सात्विकमुच्यते ॥२३॥**
**यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः ।**
**क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥२४॥**

---

नियतं - वर्णाश्रमनियतं । संगरहितं - कर्तृत्वादिसंगशून्यम् । अफलप्रेप्सुना - फलं - स्वर्गादि, प्राप्तुमिच्छतीति फलप्रेप्सुः, स नभवतीत्यफलप्रेप्सुः, तेनपुंसा । अरागद्वेषतः - कीर्तिरागापकीर्तिद्वेषाभ्यां विना, अदम्भेनेत्यर्थः । यत् । कर्म । कृतम् - भगवदाराधनतया स्वतः प्रयोजनमित्यनुष्ठितम् । तत् - कर्म । सात्त्विकं - सत्त्वमूलम् । उच्यते - सत्त्वगुणतत्त्वविद्भिः कथ्यत इत्यर्थः ॥ २३ ॥

राजसं कर्माह—

यत् कर्मतु । कामेप्सुना - फलकामिना । साहंकारेण वा पुनः - अत्र वा शब्दश्चार्थे - अहमेव करोमीत्यभिमानवता च पुंसेत्यर्थः । बहुलायासं - प्रवृत्तिस्वभाव रजोमूलकत्वाद्बहुवित्तव्ययाथासयुक्तं सत् । क्रियते । तत् - कर्म । राजसं - रजोमूलम् । उदाहृतं - उक्तम् ॥ २४ ॥

---

किन्तु कर्म विषयक जो ज्ञान, मात्र एक फल को देने वाले कार्य में सम्पूर्ण फल देने की भावना से जो उसमें आसक्त करता है । अल्प फल का साधक है अतएव निर्हेतुक, वृथा आसक्ति पैदा करने वाला है. आत्मा के विषय में यथार्थ रूप से प्रकाश डालने में असमर्थ अथवा मिथ्या अर्थ का प्रकाशक, स्वरूप से अल्प, ऐसा ज्ञान तामसिक कहा जाता है ।। २२ ।।

(अब तीन श्लोकों में गुणभेद से कर्तव्य कर्म की त्रिविधता बतलाते हैं) ।

शास्त्र विहित वर्णाश्रमोचित जो नियत कर्मों को श्रेयस्कर मानकर अनुराग एवं द्वेष बुद्धि से रहित होकर, फल की अभिलाषा से रहित बुद्धि से करने वाले पुरुष से किया गया, वर्ण आश्रमोचित एवं कर्तृत्व अर्थात् कर्तापन की आसक्ति से रहित जो कर्म है उसे सात्विक कर्म कहा जाता है ।। २३ ।।

और जो कर्म, उसके फल की आकांक्षा रखने वाले पुरुष के द्वारा कर्तृत्व अभिमान से युक्त होकर बहुत सी चेष्टायें एवं क्लेश के साथ किया जाता है, उस कर्म को राजसिक कहा जाता है अर्थात् 'अतिक्लेश से होने वाला अति प्रयत्नसाध्य यह कर्म मेरे ही द्वारा करना सम्भव है' ऐसे अभिमान या दम्भ के साथ जो कर्म किया जाता है वह राजसिक है ।। २४ ।।

**अनुबन्धं क्षयं हिंसामनवेक्ष्य च पौरुषम् ।**
**मोहादारभ्यते कर्म यत्तत्तामसच्यते ॥२५॥**
**मुक्तसंगोऽनहंवादी धृत्युत्साहसमन्वितः ।**
**सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्विक उच्यते ॥२६॥**

---

तामसकर्मस्वरूपमाह—

अनुबन्धं - अनुबध्यते कर्मणि क्रियमाणे पश्चात्सम्बध्यते इत्यनुबन्धः - दुःखं, तं । क्षयं - कर्मणिक्रियमाणेऽर्थनाशम् । हिंसां - तत्रैवप्राणिपीडाम् । पौरुषं च - आत्मनि कर्मसमापनसामथर्च्यं च । अनवेक्ष्य - अविमृश्य । मोहात् - परमात्मकर्तृत्वाद्यज्ञानात् । यत् । कर्म । आरभ्यते - उपक्रम्यते । तत् - कर्म । तामसं - तमोमूलम् । उच्यते ॥ २५ ॥

इदानीं सात्त्विकं कर्तारमाह—

मुक्तसंगः - त्यक्तफलसंगः । अनहंवादी - अहमेव कर्तेतिवदन् शील-रहितः । धृत्युत्साहसमन्वितः - धृतिः - आरब्धे कर्मणि तत्समाप्तिपर्यन्तानुषक्तावर्जनीयदुःखधारणम्, उत्साहः - मानसिकोद्योगशालित्वम्, ताभ्यां, समन्वितः सम्यग्युक्तः । सिद्ध्यसिद्ध्योः - आरब्धकर्म फलनिष्पत्त्यनिष्पत्त्योः । निर्विकारः - अविकृतचित्तः । कर्ता । सात्त्विकः - विवृद्धसत्त्वः । उच्यते । सत्त्वगुणयाथात्म्यविद्भिः कथ्यत इत्यर्थः ॥ २६ ॥

---

किसी कर्म के करने के उपरान्त सम्भाव्य भावीदुःख, धन का व्यय एवं प्राणियों को पीड़ा पहुँचाना तथा उस कर्म के करने में अपने सामर्थ्य आदि को बिना विचारे केवल मोह के वश में होकर अर्थात् 'परमात्मा ही सब कर्मों का करने वाला है' इस प्रकार के तत्वज्ञान से रहित होकर जो कर्मकर्ता अपने कर्म को करता है वह कर्म तामसिक कहा जाता है ॥ २५ ॥

कर्म के फल की आसक्ति से रहित एवं कर्तृत्व अभिमान से रहित धैर्य अर्थात् किसी कार्य के आरम्भ करने से लेकर समाप्ति पर्यन्त आवश्यक रूप से होने वाले दुःखों के सहने की शक्ति, उत्साह = कार्य के निष्पादन पर्यन्त चित्त में स्फूर्ति का बना रहना, इन दो गुणों से युक्त, विभिन्न कर्मों एवं उनके साधनों द्रव्य संग्रह की सिद्धि अथवा असिद्धि में विकार रहित चित्त वाला कर्ता—कार्य का करने वाला सात्विक कहा जाता है ॥ २६ ॥





**रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।**
**हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥२७॥**
**अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः ।**
**विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥२८॥**

---

राजसं कर्तारमाह—

रागी - यशोनुरागी । कर्मफलप्रेप्सुः - कर्मफलानि - स्वर्गादीनि, प्रेप्सुः - प्राप्तुमिच्छुः । लुब्धः - कर्मापेक्षितद्रव्यत्यागस्वभावरहितः । अतएव - हिंसात्मकः - हिंसास्वभावः, परान् पीडयित्वा तैः कर्मकुर्वाणः । अशुचिः - कर्मापेक्षित शुद्धिरहितः । हर्षशोकान्वितः - स्वकर्मसिद्ध्यसिद्धिजहर्षविषादयुक्तः । कर्ता । राजसः - विवृद्धरजोगुणः । परिकीर्तितः - रजस्तत्त्वज्ञैः कथित इत्यर्थः ॥ २७ ॥

तामसं कर्तारमाह—

अयुक्तः - अतिमात्रं शास्त्रीयकर्मायोग्यः । प्राकृतः - विवेकशून्यः । स्तब्धः - स्तिमितस्वभावः । अनारम्भक इति यावत् । शठः - गूढ़विप्रियकृत् । अभिचारादिकर्मरुचिरित्यर्थः । नैष्कृतिकः - वंचनशीलः । अलसः - आरब्धकर्मणोपि समापनाशक्तः । विषादी - अतिमात्रावसादशीलः । देशकालवैषम्य शोकवस्त्वनुस्मृत्याद्यनुरोधेन मनोदैन्यशील इत्यर्थः । दीर्घसूत्री -

---

रागी—यश चाहने वाला, किये हुए यज्ञादि कर्मों का स्वर्गादि फल चाहने वाला, किसी कर्म की सिद्धि के लिए अपेक्षित द्रव्य संग्रह करने में होने वाले व्यय में कृपणता दिखाने वाला, हिंसक प्रकृति अर्थात् यज्ञादि कर्मों में साथ काम करने वाले ऋत्विजों को पीड़ा देने वाला, वैदिक कर्मों में अपेक्षित पवित्रता से रहित, अपने द्वारा किये कर्म की सिद्धि, असिद्धि पर हर्ष और शोक करने वाला कर्ता राजसिक कहा जाता है ॥ २७ ॥

जो पुरुष अयुक्त—शास्त्रीय कर्मों के अयोग्य और निकृष्ट कर्मों में लगा हुआ, कर्म के आरम्भ में उत्साह शून्य खल प्रकृति का अर्थात् मारण उच्चाटन आदिक आभिचारिक कर्मों में आसक्त, प्रवञ्चक (ठग) या धूर्त, आलसी—किसी काम में उत्साह न बरतना, अत्यन्त दुःख मनाने वाला, कर्म करने की चिन्ता में बहुत समय तक लगा रहने वाला इस प्रकार के स्वभाव वाला कर्ता तामसिक कहा जाता है ॥ २८ ॥

**बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।**
**प्रोच्यमानमशेषेण पृथक्त्वेन धनंजय ।।२९।।**
**प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।**
**बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्विकी ।।३०।।**

दीर्घ - दीर्घकालवर्तियथातथा - सूत्रयितुं चिन्तयितुं शीलमस्येति दीर्घसूत्री च । अभिचारकर्म कुर्वन् परेषु दीर्घकालवर्त्यनर्थपर्यालोचनशीलश्चेत्यर्थः । एवंविधः । कर्ता । तामसः - विवृद्धतमोगुणः । उच्यते - तमस्तत्त्वविद्भिः कथ्यत इत्यर्थः ।। २८ ।।

एवं कर्मचोदनांशभूतानामनुष्ठानकालीन कर्मकर्तव्यताज्ञान कर्मकर्तृणां गुणतस्त्रैविध्यमुक्तम् । इदानीं तादृशज्ञानहेतुभूतशास्त्रजन्य सकलतत्त्वपुरुषार्थनिर्धारणरूपाया बुद्धेस्तद्दार्ढ्यरूपाया धृतेश्च गुणतस्त्रैविध्यमाह —

हे धनंजय ! बुद्धेः - विचारपूर्वक निर्धारणायाः । धृतेश्चैव विघ्नादिशंकायामप्यारब्धक्रियानिर्वाहकशक्तेश्च । गुणतः - सत्त्वादिगुणवशात् । त्रिविधं - त्रिप्रकारम् । भेदम् । पृथक्त्वेन - असंकीर्णरूपतया । प्रोच्यमानं - प्रकर्षेणाभिधीयमानं सन्तम् । अशेषेण कात्स्न्र्येन । यथावत् - संशयविपर्ययरहिततया यथोक्तरूपेण । शृणु ।। २९ ।।

इदानीं सात्त्विकीं बुद्धिमाह—

हे पार्थ ! या । बुद्धिः - विचारपूर्वकनिर्धारणा । प्रवृत्तिं च स्वर्गाद्यभ्युदयसाधनकर्म च । निवृत्तिं च - मोक्षसाधनं कर्म च । "प्रवृत्ति लक्षणं धर्मं प्रजापतिरथाब्रवीत् । निवृत्तिलक्षणं धर्ममृषिर्नारायणोऽब्रवीदि" त्यादि शास्त्रसिद्धं कर्मापीत्यर्थः । वेत्ति - यथावद्विषयीकरोति । मीमांसितशास्त्रप्रयुक्तोभयविधकर्मविषया निर्धारणा यस्य पुंसो जायत इत्यर्थः । तथा ।

हे अर्जुन ! बुद्धि एवं धैर्य भी सात्विक राजस तामस गुणों के भेद से तीन-प्रकार के होते हैं, उन्हें पृथक् - पृथक् रूप से मैं वर्णन करता हूँ, तुम सावधान होकर श्रवण करो ।। २९ ।।

हे अर्जुन ! जो बुद्धि प्रवृत्तिमार्ग एवं निवृत्तिमार्ग, करने योग्य कर्म, न करने योग्य कर्म, शास्त्र के विपरीत आचरण करने में भय और शास्त्र विहित आचरण करने में निर्भय एवं संसार बन्धन और संसार निवृत्ति रूप मोक्ष इन सब विषयों को यथार्थ रूप से जानती है वह बुद्धि सात्विक है ।। ३० ।।





**यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।**
**अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी ।।३१।।**

कार्याकार्ये - कार्यं - देशकालादि सामग्रीपर्यालोचनेन स्वतः प्रयोजनरूपतया च निवृत्तिलक्षणं निष्कामकर्मैव कर्तव्यम्, अकार्यं - प्रवृत्तिलक्षणं कर्माकर्तव्यं च । या बुद्धिः - वेत्ति - यथावद्विषयीकरोति पूर्वोक्तनिर्धारणाद्यस्यैवं ज्ञानमुत्पद्यत इत्यर्थः । तथा । भयाभये बिभेत्यस्माज्जन इति व्युत्पत्या भयं भयस्थानभूतकाम्यकर्मानुष्ठानम्, सर्वेश्वराज्ञाननुवर्तनम्, अभयं - अभयस्थानभूतसर्वेश्वराज्ञानुवर्तनं च । वेत्ति । बन्धं यथावदवगत प्रवृत्तिधर्मफलं संसारम् । मोक्षं च - यथावदवगतनिवृत्तिधर्मफलं संसारम् । मोक्षं च यथावदगतनिवृत्तिधर्मफलं संसारमोक्षं च । वेत्तिजानातीत्यर्थः । सा - बुद्धिः । सात्त्विकी - विवृद्धसत्त्वमूला । एवंविधबुद्धियुक्तः परमसात्त्विक इति ज्ञेय इति भावः ।। ३० ।।

राजसीं बुद्धिमाह—

हे पार्थ ! यया - बुद्धचा । धर्मं - प्रोक्तं द्विविधमपि धर्मम् । अधर्मं च । आगमोक्तं निष्फलकर्म च । कार्यं च - पूर्वोक्तरीत्या कर्तव्यं च । अकार्यमेव च - अनन्तर पूर्वाध्यायोक्तरीत्याऽकर्तव्यं च । अयथावत् - यथावस्थितरूपं न भवति - यथातथा । प्रजानाति - निवृत्तिलक्षणो धर्मोमोक्षसाधनतयाऽवश्यं कार्यः, प्रवृत्तिलक्षणस्तु धर्मोऽभ्युदयसाधनत्वेपि बन्धहेतुतया न कार्यः, आगमिकं कर्मतु निष्फलत्वात्प्रत्युतनिरयहेतुत्वाच्च सुतरामकार्यमिति यथावन्नजानाति, प्रत्युतागमिकमेव कर्म फलवत्कर्तव्यं - निवृत्तिलक्षणं

हे अर्जुन ! जिस बुद्धि के द्वारा पूर्व श्लोकोक्त प्रवृत्ति धर्म और निवृत्ति धर्म एवं निष्फल अवैदिक कर्मरूप अधर्म, देशकाल एवं अवस्था भेद से कर्तव्यकर्म और अकर्तव्यकर्म को भी यथार्थ रूप से नहीं जान पाती उस बुद्धि को राजसिक बुद्धि कहा जाता है ।

तात्पर्य यह कि—निष्काम कर्म रूप निवृत्तिधर्म मोक्ष साधक है इसलिए अवश्य करने योग्य है, प्रवृत्ति धर्म स्वर्गादि फल को देने वाला होने पर भी संसार में बन्धन का कारण होता है, एवं अवैदिक निष्फल कर्म नरक देने वाला होने के कारण अकर्तव्य है – जो बुद्धि इस प्रकार धारणा न करके यह सोचती है कि निवृत्ति मार्ग का कर्म निष्फल है इसलिए करने योग्य नहीं है और प्रवृत्ति मार्ग का स्वर्गादि फल देने वाला कर्म एवं अवैदिककर्म फल-साधक है इसलिए करने योग्य है ऐसी बुद्धि राजसिक होती है ।। ३१ ।।

**अधर्मं धर्ममिति या मन्यते तमसावृता ।**
**सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥३२॥**
**धृत्या यया धारयते मनः प्राणेन्द्रियक्रियाः ।**
**योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्विकी ॥३३॥**

निष्फलत्वान्न कर्तव्यमिति विषयीकरोतीत्यर्थः । सा - बुद्धिः । राजसी - रजोमूला । एवं विधबुद्धिमान् राजस इति भावः ॥ ३१ ॥

तामसीं बुद्धिमाह—

हे पार्थ ! या बुद्धिः । तमसा - तमोगुणेन । वृता - निरुद्धप्रसरा-सती । अधर्मं - आगमोक्तम् । धर्ममिति - धर्मरूपतया । मन्यते - विषयी-करोति । तथा । सर्वार्थान् - सिद्धसाध्यरूपानर्थान् । विपरीतांश्च - अस्वा-भाविकधर्माक्रान्तांश्च । शुक्ताविदं रजतमित्यादिवत् - धर्ममधर्मं - अधर्मं धर्मं - सन्तमसन्तं - असन्तं सन्तम् अपरं तत्त्वं परम् परंतत्त्वमपरं च । जानातीत्यर्थः । सा - बुद्धिः । तामसी - विवृद्धतमोमूला । पूर्वश्लोकोक्त राजसबुद्धिर्धर्ममात्रान्यथाभावावगाहिनी, एतच्छ्लोकोक्ता तामसी बुद्धिस्तु धर्मिधर्मान्यथाभावावगाहि नीतिभेदः । अनेन सतोजगतोऽसत्त्ववादिनः परतत्त्वस्यापरतत्त्वतावादिनश्च तामसा इति स्फुटं ज्ञायत इति भावः ॥ ३२ ॥

एवं त्रिविधां शास्त्रनिर्धारणात्मिकां बुद्धिं निरूप्य तदुपयोगिनीं तद्दा-ढर्च रूपां धृतिमाह—

हे पार्थ ! योगेन - स्वतः प्रयोजनभूतेन मोक्षसाधन भगवद्योगेन

---

**हे अर्जुन ! जो बुद्धि तमोगुण के द्वारा आवृत (ढकी) होकर अधर्म को धर्म, सत् को असत् एवं असत् को सत् उत्कृष्ट वस्तु को तुच्छ, निकृष्ट वस्तु को उत्कृष्ट, इस प्रकार सब वस्तुओं को विपरीत रूप से मानती है, वह बुद्धि तामसिक कही जाती है ॥ ३२ ॥**

**अब तीन प्रकार की धृति बताते हैं—**

**हे पार्थ ! मोक्ष का साधन भूत जो भगवान की उपासना रूप योग के उद्देश्य से प्रवृत्त मन प्राण और इन्द्रिय समूह की समस्त क्रियायें जिस अव्यभिचा-रिणी अर्थात् अचल और एकाग्र धृति के द्वारा नियमित होती रहती हैं, वह धृति (धैर्य) सात्विक कही जाती है ॥ ३३ ॥**





**यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन ।**
**प्रसंगेन फलाकांक्षी धृतिः सा पार्थ राजसी ॥३४॥**

अनुसंहितेन हेतुना । अव्यभिचारिण्या - फलांतरास्पर्शिन्या । यया । धृत्या-पूर्वोक्तबुद्धिदाढ़र्च रूपया । मनः प्राणेन्द्रियक्रियाः - योगोद्देशेन प्रवृत्ताः - मनसः प्राणस्येन्द्रियाणांच क्रियाः व्यापारान् । धारयते । सा । धृतिः । सात्त्विकी - प्रवृद्धसत्त्वमूला । मनः क्रियाया योगकरणत्वं मनसैवानुद्रष्ट-व्यमिति श्रुतिसिद्धम् । प्राणक्रियाया योगकरणत्वं - 'पुनर्वायुपथं प्राप्य-मनोगच्छति वायुवदि'ति शास्त्रोक्तरीतया यत्र मनः - तत्र वायुः - यत्र वायुः - तत्र मन इत्यनोन्य परिष्वंगान्मनःक्रिया तुल्यन्यायतयासिद्धम् । इन्द्रिय-क्रियाया योगकरणत्वं - "स्वाध्यायाद्योग मासीतयोगात्स्वाध्याय मेव च । स्वाध्याय योमसम्पत्त्या परमात्मा प्रकाशते" इति स्मृत्या योगांगनिषेवणरूप सर्वेन्द्रियव्यापारप्रत्याहरणरूपे प्रत्याहारे निरुध्यमाणरूपेण च द्रष्टव्यम् ॥३३॥

राजसीं धृतिमाह—

हे अर्जुन ! फलाकांक्षी - पूर्वत्रापवगार्थं धृतेरुक्तत्वादिह फल शब्द स्त्रिवर्गफलपरः, तदाकांक्षतीति फलाकांक्षी, धर्मार्थिकामी पुरुषः । यया धृत्यातु - राजसबुद्धिदाढ़र्च रूपया धृत्यातु । धर्मकामार्थान् - अत्र धर्म-कामार्थशब्दाः - तत्साधनक्षणया धर्मचिन्ताकामिनीजिज्ञासा धनप्रीत्यात्मक मनोव्यापार तदनुगुण प्राणेन्द्रियव्यापारपराः, तान् । प्रसंगेन प्रकृष्ट फल-संगेन, धारयते - पुरुषः - दृढ़ीकरोति । सा । धृतिः । हे पार्थ ! राजसी - विवृद्धरजोमूला ॥ ३४ ॥

तामसीं धृतिमाह—

हे पार्थ ! यया - धृत्या, तामसबुद्धिदाढ़र्च रूपया । स्वप्नं - तदुप-लक्षितां निद्राम् । मदमेव च - विषयानुभवजनितं मदं च । भयं बिभेत्य-स्माज्जन इति दुरभिमानकृतभयहेतुप्रबल तिरोशब्दरूपम् शोकं - शोचत्य-नेन जन इति क्रोधादि हेतुकं शोकहेतुबन्धुविरोधादिकम् । विषादं - विषी-

---

**हे अर्जुन ! फल की अभिलाषा रखने वाला पुरुष जिस धृति के द्वारा फल में अत्यधिक रूप से आसक्त होकर धर्म, अर्थ एवं काम रूप तीन वर्गों को धारण करता है, वह धृति राजसिक है । अर्थात् धर्म अर्थ एवं काम फलों को प्राप्त करने के लिए मन प्राण एवं इन्द्रियों की समस्त क्रियायें जिस धृति के द्वारा पुरुष धारण करता है वह धृति राजसिक है ॥ ३४ ॥**

**यया स्वप्नं भयं शोकं विषादं मदमेव च ।**
**न विमुंचति दुर्मेधा धृतिः सा पार्थ तामसी ।।३५।।**
**सुखं त्विदानीं त्रिविधं श्रृण मे भरतर्षभ ।**
**अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ।।३६।।**

---

दत्यनेन जन इति मनसोदुःखदायि बहु वित्तव्ययादिकम् । तद्धेतुभूत मनः प्राणेन्द्रिय क्रिया इत्यर्थः ताः । दुर्मेधाः - दुर्मतिः पुमान् । न विमुंचति - धारयते । अत्र धारयत इति वक्तव्ये न विमुंचतीत्युक्तिर्हि त्याज्यमपि नत्यजतीति तत्स्वभावद्योतनाय । सा । धृतिः । तामसी - विवृद्धतमोमूला । अत्रैकरूपतया निर्दिष्टेषु स्वप्नमदयो स्सुखानास्पदत्वेन योग्यफलाहेतुतया भयादीनां त्रयाणां हेयहेतुतया च तत्तदनुगुणसाहचर्येण योजना कृतेत्याकलनीयम् ।

पूर्वं साधनभेदानुक्त्वा - इदानीं तत्साध्यसुखभेदानाह—

इदानीं - शेषभूतज्ञानकर्त्रादिनिरूपणानन्तरम् । त्रिविधं - सत्त्वादि गुणभेदात्त्रिप्रकारम् । सुखं तु - तत्साध्यसुखभेदं तु । श्रृणु । यत्र - सौख्ये अभ्यासात् - चिरकालाभ्यासात् । रमते - क्रमेण निरतिशयरसं प्राप्नोति । दुःखान्तं च - दुःखस्य - निखिलसांसारिकदुःखस्य, अन्तं च - निश्शेषनिवृत्तिं च । निगच्छति नितरां गच्छति ।। ३६ ।।

---

हे पार्थ ! अर्जुन ! दुष्टबुद्धि पुरुष जिस धृति (धैर्य) के द्वारा निद्रा, विषयभाव जनित मद या मत्तता एवं भय, शोक और विषाद को नहीं परित्याग कर पाता अर्थात् निद्रा, मद, भय, शोक त्यागने योग्य होने पर भी जिसके (धृति के) द्वारा पकड़े रहता है उस धृति को तामसी कहते हैं।। ३५ ।।

हे भरतवंश में श्रेष्ठ अर्जुन ! अब तीन प्रकार के सुख की बात सुनो । सात्विक सुख के बारे में सुनो ।

जिस सुख में बहुत काल पर्यन्त अभ्यास के कारण क्रमशः अधिकतर आनन्द लाभ होता है एवं समस्त सांसारिक दुःखों से निःशेष रूप से निवृत्ति होती है । जो सुख (सुख को पैदा करने वाले निष्काम कर्म—हे अर्जुन ! जिस सुख में, लगातार जन्म-जन्मान्तर के भजन ध्यान सेवादि का अभ्यास के कारण, उत्तरोत्तर क्रमशः और अधिक आनन्द लाभ होता है एवं सम्पूर्ण सांसारिक दुःखों की निःशेष रूप से निवृत्ति हो जाती है ।। ३६ ।।





**यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।**
**तत्सुखं सात्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ।।३७।।**
**विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।**
**परिणामे विषमिव तत्सुखं राजसं स्मृतम् ।।३८।।**

---

एतदेव विवृण्वं स्तदेव विशिनष्टि—

तत् - श्रुतिप्रसिद्धम् । यत् - सुखम् । अग्रे - योगारम्भ दशायाम् । विषमिव - बहूवायास साध्यत्वा द्विविक्तस्वरूपस्या ननुभूतचरत्वाच्च प्रतिकूलमिव । मन्दमतीनां जिहासास्पदमिति भावः । परिणामे अभ्यासबलेन स्वरूपाविर्भाव रूपपरिपाके । अमृतापम् - जरामरण विराधित्वाद्ब्रह्मानन्दात्पृथक्त्वेन परमभोग्य त्वाच्चा मृततुल्यमित्यर्थः । आत्मबुद्धिप्रसादजं - आत्मबुद्धिः - आत्म विषयिणीबुद्धिः, तस्याः प्रसादः - इतरविषय स्पर्शरूप कालुष्य निवृत्तिः, तस्माज्जातम् । तत् । सुखं । सात्त्विकं - विवृद्धसत्त्वमूलम् । प्रोक्तं - तद्याथात्म्य विद्भिः कथितमित्यर्थः ।। ३७ ।।

राजसंसुखम् माह—

तत् - श्रुतिप्रसिद्धम् । यत् - वैषयिकम् सुखम् । अग्रे अनुभववलायम् । विषयेन्द्रियसंयोगात् - विषयाः - अन्नपानादि भोग्याः, इन्द्रियाणि - रसनादीनि, तेषां संयोगात् - सम्पर्कात् । अमृतोपमं - अमृतवत्परमभोग्यम् । परिणामे - अन्नपानादि विषय सुखतानिमित्त क्षुदादिनिवृत्तिरूप विपाकावस्थायाम् । विषमिव - परात्रपरदारोपभोगादिकं यौवनाद्यवस्थास्वेव सुख-

---

जो सुख, सुख पैदा करने वाले निष्काम कर्मरूप योग की आरम्भ दशा में वह बहुत क्लेश साध्य होने से विष के समान प्रतिकूल प्रतीत होता है लेकिन परिणाम अर्थात् उस कर्म में सिद्धि मिलने पर वह अमृत के समान परम उपभोग्य हो जाता है, आत्मविषयक अनुभव से पैदा होने वाले मन के आनन्द रूप उस सुख को सात्विक सुख कहा जाता है ।। ३७ ।।

जो वैषयिक सुख अनुभव काल में रूप रस आदि से युक्त विषयों के सहित चक्षुकर्ण आदि इन्द्रियों के साथ संयोग होने से होता है । वह यद्यपि भोगकाल में अमृत के समान उपभोग्य होता है लेकिन सोनित और अवैध होने से वह सुख भोगते समय शरीर और मन को पीड़ा प्रदान करता है एवं अन्त में नरक का कारण होता है अतः वह सुख राजसिक कहा जाता है ।। ३८ ।।

**यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।**
**निद्रालस्य प्रमादोत्थं तत्तामसमुदाहृतम् ॥३९॥**
**न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।**
**सत्त्वं प्रकृतिजैर्मुक्तं यदेभिस्स्यात्त्रिभिर्गुणैः ॥४०॥**

---

दायि, वार्धके च तदेव विषवत्परमानिष्टम्, अनन्तरं च निरयदायीति भावः ॥ तत् - सुखं । राजसं - विवृद्धरजोमूलं । स्मृतं - तत्तत्त्ववेदिभिः कथित - मित्यर्थः ॥ ३८ ॥

तामसं सुख माह—

यत् - सुखं । अग्रे च - अनुभववेलायां च । अनुबन्धे च - अनुबद्धचते-पश्चात्सम्बद्धचत इति अनुबन्धः परिपाकः, तस्मिंश्च । आत्मनः - जीवस्य । मोहनं - यथावस्थितवस्त्वप्रकाशरूपमोहकारणम् । निद्रालस्य प्रमादोत्थं निद्रा - सुषुप्त्यवस्था, आलस्यं - इन्द्रियव्यापारमांद्यं, प्रमादः - मनसोऽनव-धानम्, तेभ्यः - उत्पन्नम् निद्रायास्सुखहेतुत्वं लोकसिद्धम् । आलस्यस्य गात्रसंक्षोभवैधुर्यहेतुत्वात् प्रमादस्य च चित्तैकाग्रच प्रयासवैधुर्यहेतुत्वाच्च तद्द्रष्टव्यम् । त्रयाणाम्मोहहेतुत्वं च स्पष्टम् । अनेनसुखाभाशयाऽकालनिद्रा हेयेत्युक्तं भवति । यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते । इति हिस्मृति-रपीति भावः । तत् - सुखम् । तामसं - विवृद्धतमोमूलं उदाहृतम् - तत्त-त्त्वज्ञैः कथितम् ॥ ३९ ॥

प्राकृत गुणातीत शुद्धसत्त्वमय भगवत्प्राप्ति लक्षणमोक्षात्प्राङ्नियत-

---

**जो सुख अनुभव दशा में एवं अनुभव करने के बाद में जीवात्मा को मोह में डाल देता है अर्थात् किसी वस्तु के यथार्थज्ञान में अन्तराय पैदा कर देता है, एवं जो सुख निद्रा, आलस्य और प्रमाद या असावधानता इन तीन अवस्थाओं से उत्पन्न होता है, उसे तामस सुख कहा जाता है ॥ ३९ ॥**

**(इससे पूर्व सत्व आदि त्रिगुणों का कार्यभेद से ज्ञान कर्म आदिक विभिन्न विषयों का भी तीन-तीन प्रकार से होना बताया । प्रस्तुत श्लोक में सत्वादि त्रिगुणों के विवरण प्रकरण का समापन करते हैं । )**

**पृथ्वी पर मनुष्य आदि में, देवलोक में देवताओं में ब्रह्मा से लेकर स्थावर पर्यन्त प्राकृत देहयुक्त किसी भी प्राणी में प्राकृत सत्वादि मिश्रित इन तीन गुणों से मुक्त विशुद्ध सत्वमय गुण केवल मोक्ष की प्राप्ति होने पर ही प्राप्त होना सम्भव है ॥ ४० ॥**





**ब्राह्मण क्षत्रिय विशां शूद्राणां च परंतप ।**
**कर्माणि प्रविभक्तानि स्वभाव प्रभवैर्गुणैः ॥४१॥**

---

देशकाल फलभोगै रुच्चावचैस्त्वर्वैरपि क्षेत्रज्ञैरुक्तानां सत्त्वादीनां त्रयाणां दुस्त्यजत्वान्मुमुक्षुणा सावधानं रजस्तमसी अभिभूय सत्त्वमेवो पादेयमिति ज्ञापनपूर्वकं गुणकार्यप्रकरणं निगमयति—पृथिव्यां - भूलोकवर्तिमनुष्यादिषु । दिवि । देवेषु वापुनः । स्वर्गाद्यूर्ध्वलोक वर्तिषु चेत्यर्थः । प्रकृतिजैः - प्रकृ-तिसंभूतैः । त्रिभिः । एभिः । गुणैः - सत्त्वादिभिः । मुक्तम् । सत्त्वं - प्राणिवस्तु । यत् । तत् । नास्ति । असम्भावितमित्यर्थः । अतोगुणवश्य-त्वात्तत्कार्यानुषक्त स्सर्वइति भावः ॥ ४० ॥

अध्यायादौ मुक्तिसाधानतया श्रुत्युक्तस्संन्यास स्त्यागश्चैकः, स च कर्मसु क्रियमाणेष्वेव सर्वेश्वरे कर्तृत्वानुसन्धानेन स्वकर्तृत्व ममता फलत्याग-रूपः, स च सत्त्वमूलइति सत्त्वस्योपादेयत्वसिद्धयर्थं सत्त्व रजस्तमसां कार्य-भेदाश्चोक्ताः । इदानीमेवं भूतस्य कर्मणः परमपुरुषाराधनरूपतां तथाऽनु-ष्ठितस्य कर्मण स्तत्प्राप्तिलक्षणं फलं च प्रतिपादयितुं ब्राह्मणाद्यधिकारिणां स्व प्राचीन कर्मानुसारि गुणभेदभिन्नानि कर्माणि कृष्योदिवृत्त्या सह निरू-पयति—

हे परन्तप ! ब्राह्मणक्षत्रियविशां - द्विजत्वेन वेदाधिकारिणां ब्राह्मण-क्षत्रियवैश्यानाम् । शूद्राणाम् - वेदानधिकारिणां चतुर्थानाम् । स्वभाव-प्रभवैः - स्वेषां ब्राह्मणादीनाम्, भावाः - असाधारणधर्माः, ब्राह्मणजन्मादि-

---

**(वर्ण और आश्रम के अनुरूप विभिन्न कर्म आसक्ति रहित होकर केवल परमेश्वर की आराधना रूप से अनुष्ठित होने पर मोक्षफल को देने वाले होते हैं, यही प्रतिपादन करने के उद्देश्य से ब्राह्मणादि चारों वर्णों के अपने-अपने प्राचीन कर्म और वासना के अनुरूप स्वाभाविक सत्व आदि गुणभेद से होने वाले विभिन्न कर्म एवं प्रवृत्तियाँ शास्त्रों में जिस प्रकार विभिन्न प्रकार से कही गयीं हैं, अब उन्हीं का वर्णन करते हैं )**

**हे परन्तप अर्जुन ! द्विजाति अर्थात् वेद के अधिकारी ब्राह्मण, क्षत्रिय, वैश्य एवं वेद के अनधिकारी शूद्र आदिकों के पूर्वजन्मार्जित अपने अपने प्राचीन कर्म एवं कर्मानुसारी वासना के अनुरूप स्वभाव से होने वाले सत्व, रज, तम आदि गुण प्राप्त होते है । तदनुसार उनके द्वारा किये गये अपने-अपने कर्म एवं प्रवृत्तियाँ शास्त्र में प्रकृष्टरूप से विभिन्न प्रकार से कही गयी हैं । ४१ ॥**

**शमो दम स्तपः शौचं क्षांति रार्जव मेव च ।**
**ज्ञानं विज्ञान मास्तिक्यं ब्राह्मंकर्म स्वभावजम् ॥४२॥**

हेतु प्राचीन कर्मवासनाः; तत्प्रभवै - पूर्वकर्मानुगुण सत्त्वादिगुणवृद्धे रुक्तत्वा-त्तत्सूतैरित्यर्थः । गुणैः - सत्त्वादिभिस्सह । कर्माणि - वक्ष्यमाण शमदमादीनि कृषिगोरक्षादीनि च । प्रविभक्तानि - प्रकर्षेण विभज्य कथितानि । ब्राह्मणस्य स्वभाव प्रभवो गुणः - तमो रजोभिभवेन विवृद्धसत्त्वगुणः । एवं क्षत्रियस्य स्वभावप्रभवोगुणः सत्त्वतमोभिभवेन विवृद्धरजोगुणः । वैश्यस्य स्वभावप्रभवो गुणः सत्त्वरजोभिभवेनाल्पाद्रिक्त स्तमोगुणः । शूद्रस्यस्वभाव प्रवोगुणः - सत्त्वरजोभि भवेनोद्रिक्त स्तमोगुणः । इत्येव मेते गुणविशेषाः - असाधारण कर्माण्येतानि वृत्तयश्चैता इति सर्वमिदं मोक्षशास्त्रे संकीर्णं प्रतिपादित मित्यर्थः ॥ ४१ ॥

प्रथमतः - ब्राह्मणासाधारण कर्माण्याह ॥

शमः - बाह्ये न्द्रियनिग्रहः । दमः - अन्तरिन्द्रिय निग्रहः । तपः - शास्त्रीय भोगसंकोचरूपः कायक्लेशः । शौचं - शास्त्रीयकर्मयोग्यतात्मिका-शुद्धिः । क्षान्तिः - परैः पीड्यम नस्यापि चित्तविकारशून्यता । आर्जव-मेव च - मनोवाक्कायाना मेकरूपता च । ज्ञानम् - परारतत्त्व याथात्म्य-ज्ञानम् । विज्ञानं - तत्रापि परतत्त्वगतासाधारण विशेष ज्ञानम् । आस्तिक्यं अस्ति भगवान् वासुदेवः पुरुषोत्तमो जगदुदय विभवलय लील ग्सकलोपनि-षत्प्रतिपाद्यः - तदाराधनानि सकल वैदिक कर्माणि तदाराधितस्स सकल फलप्रदश्चेति निश्चय विशेषश्च । ब्राह्मं - ब्राह्मणासाधारणम् । स्वभावजं कर्म ॥ ४२ ॥

क्षत्रियासाधारण कर्माण्याह—

शौर्यं - युद्धं निर्भय प्रवेशसामर्थ्यम् । तेजः परैरतिरस्कार्यत्वम् । धृतिः - आरब्धे कर्माणि विघ्नोपनिपातेपि तत्समापनसामर्थ्यम् । दाक्ष्यं - कौशलम् । युद्धे चापि । अपलायनं - आत्ममरण निश्चयेप्यपराङ्मुखना ।

**शम-शान्ति, दम-इन्द्रियनिग्रह, तप-कायक्लेश, शौच-अन्तर्बाह्य पवित्रता, शान्ति, आर्जव-सरलता, ज्ञान-बुद्धि, विज्ञान-अनुभवात्मक ज्ञान, आस्तिकता वेदों को प्रमाण मानना ये ब्राह्मणों के स्वाभाविक कर्म एवं प्रवृत्ति है ॥ ४२ ॥**





**शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।**
**दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥४३॥**
**कृषि गौरक्ष वाणिज्यं वैश्यकर्म स्वभावजम् ।**
**परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥४४॥**

दानं - आत्मीयधनस्य परस्वत्वापादनम् । ईश्वरभावश्च स्वव्यतिरिक्तानां सर्वेषां नियमनसामर्थ्यं चेत्येतत् । क्षात्रं - क्षत्रियासाधारणम् । स्वभावजम् । कर्म ॥ ४३ ॥

वैश्यशूद्रयोः कर्माह—

कृषिः - फलोत्पादनार्थं कर्षणम्, गोरक्षः - पशुपालनम्, वाणिज्यं - धनागमहेतुभूतं क्रयविक्रयात्मकं कर्म च । वैश्यम् - वैश्यानां सम्बन्धि । स्वभावजम् । कर्म । वैश्यस्य स्वाभाविकवृत्तिरित्यर्थः । परिचर्यात्मकं - त्रैवर्णिकसेवारूपम् । कर्म । शूद्रस्यापि । स्वभावजं - स्वाभाविकं कर्म । वृत्तिरित्यर्थः । अत्र श्लोकद्वयेपि प्रदर्शनार्थं कानिचिद्वर्णानि काश्चिद्वृत्तय-श्चोक्ताः । वस्तुतस्तु त्रैवर्णिकानाम्मुमुक्षुणां शमदमादयएव साधारणधर्माः । असाधारणधर्मवृत्तयस्तु ब्राह्मणानां याजनाध्यापनप्रतिग्रहाः - क्षत्रियाणां जनपद परिपालनादयः, वैश्यस्य यथोक्ताः कृष्यादयः, शूद्रस्य तूक्ता त्रैवर्णिक शुश्रूषा - असाधारणधर्मो वृत्तिश्चेति मन्तव्यम् ॥ ४४ ॥

ननुमोक्षशास्त्रे - तत्तद्धर्मोपदेशस्य कः प्रसंग इत्यत्राह—

स्वेस्वे - तत्तद्वर्णासाधारणे । कर्मणि - यज्ञशौर्यादौ । अभिरतः - निष्ठायुक्तः पुमान् । संसिद्धिं - परमपदम् । लभते । ननु निषिद्धस्य कर्मणः कथं परमपदसाधनत्वसिद्धिरित्याह ( स्वेति ) स्वकर्मनिरतः - स्वधर्मनिष्ठः ।

**पराक्रम, शूरवीरता, तेजस्वी होना, धैर्य, क्षमता चतुराई, युद्ध से न भागना, दान देना, ईश्वर भाव अर्थात् दूसरों की रक्षा करने की सामर्थ्य ये सब क्षत्रियों के स्वाभाविक साथ पैदा होने वाले कर्म हैं ॥ ४३ ॥**

**कृषि कार्य (खेती करना) गौ आदिक पशुओं का पालन करना, अर्थोपार्जन के लिए वस्तुओं का खरीदना बेचना आदि व्यवसाय वैश्यों का स्वाभाविक कर्म या वृत्ति है । ब्राह्मण, क्षत्रिय, वैश्यों की सेवा करना रूप कर्म शूद्र जाति का स्वाभाविक कर्म या वृत्ति है ॥ ४४ ॥**

**स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।**
**स्वकर्मनिरतः सिद्धिं यथा विन्दिति तच्छृणु ॥४५॥**
**यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।**
**स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥४६॥**

पुमान् । यथा - येन प्रकारेण । सिद्धिं - नैष्कर्म्यसिद्धिद्वारेण फलम् । विंदति । तत् - तथा । श्रृणु ॥ ४५ ॥

तदेवाह—

यतः - यस्मात् - मत्तः । भूतानां - सर्वेषां प्राणिनाम् । प्रवृत्तिः - 'अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते ।' इति पूर्वोक्तरीत्या - उत्पत्त्यादि सर्व-क्रियाः, भवंतीत्यर्थः । येन - मया । सर्वम् इदं - अखिलं जगत् । ततं - 'मया ततमिदं सर्वं जगदव्यक्त मूर्तिने'त्यादि पूर्वोक्तरीत्या बहिरं तश्चव्याप्त-मित्यर्थः । तं - अग्नीन्द्राद्यन्तरात्मानम्माम् । स्वकर्मणा - वर्णाश्रमनियत त्रिविधत्यागयुक्तकर्मणां । अभ्यर्च्य - आराध्य । मानवः । सिद्धिं - नैष्क-र्म्यसिद्धिद्वारा परमपदम् । विन्दति - प्राप्नोतीत्यर्थः । शूद्रादेरपि "धर्म-व्याधादयोप्यन्ये पूर्वाभ्यासाज्जुगुप्सिते । वर्णावरत्वे सम्प्राप्तास्संसिद्धिं श्रम-

**(मोक्ष शास्त्र गीता में वर्णाश्रम धर्म के उपदेश का प्रसङ्ग क्यों ? इसका कारण बताते हैं कि अपने-अपने वर्ण आश्रमोचित कर्म यदि फलाभिसन्धिरहित, एवं कर्तापन के अभिमान से रहित होकर केवल भगवद् आराधना रूप से अनुष्ठान करने से भगवद् कृपा प्राप्त होती है उससे भगवत् प्राप्ति रूप सिद्धि प्राप्त होती है । अथवा अपनी कामनानुसार कर्मयोग का अनुष्ठान करने से सिद्धि प्राप्त कर आत्म-दर्शन मिलता है । इस विषय को श्लोक ४५ से ४८ तक वर्णन करते हैं ।)**

**पूर्वोक्त अपने-अपने वर्णाश्रमोचित स्वाभाविक कर्मों में लगा पुरुष सम्यक्रूप से सिद्धि अर्थात् परमपद का लाभ करता है । अपने धर्म में स्थित यह पुरुष जिस प्रकार सिद्धि को प्राप्त करता है उसे सुनो ॥ ४५ ॥**

**जिस परमात्मा से समस्त जीवों की प्रवृत्ति की उत्पत्ति होती है । जिस सर्वेश्वर से यह सम्पूर्ण जगत् में व्याप्त है । अग्नि, इन्द्र के अन्तरात्मा से अवस्थित उस परमेश्वर की कर्तृत्वाभिमान, ममता एवं फलाभिसिन्धि का परित्याग करके अपने-अपने कर्म का अनुष्ठान द्वारा आराधना करके मनुष्य भगवत् प्राप्ति रूप सिद्धि का लाभ करता है ॥ ४६ ॥**



**श्रेयान् स्वधर्मो विगुणः परधर्मा त्स्वनुष्ठितात् ।**
**स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥४७॥**

णीयथे"त्यादि शौनकोक्तरीत्या विदुरादिव त्पूर्वजन्मसिद्धाधिकार सम्पत्त्यावा भावि जन्माधिकार सम्पत्त्या वा परमपदप्राप्ति रविरुद्धे तिभाव । एवं वर्णा-श्रमधर्माणां स्वरूपेणा परित्याज्यत्व परमपदप्राप्ति प्रकारश्चोक्तः ॥ ४६ ॥

अथ 'दैवमेवापरे यज्ञ' मित्यादिना कर्मयोगान्तर्गततया पूर्वोक्तानां योगानां तत्तदधिकार्य परित्याज्यत्वं प्रत्यभिज्ञापयति ॥

स्वनुष्ठितात् - सष्ठु - अनुष्ठितात् - आचरितात् । परधर्मात् - प्रकृति संसृष्टस्य दुश्शकतया तदन्यसांख्य योगनिष्ठयोग्य धर्मात्, सकलेन्द्रियव्यापार नियमनरूप ज्ञानयोगादित्यर्थः । त्रिगुणः - किंचिदगविकलोपि । स्वधर्मः - स्वेन - प्रकृतिसंसृष्टेनैवोपादेयोधर्मः - त्रिविधत्यागयुक्ता भगवदाराधनात्मकः कर्मयोगः । श्रेयान् । प्रकृति संसृष्टस्येन्द्रिय व्यापारात्मकस्य धर्मस्य सुशक-तया स एव प्रशस्त इत्यर्थः । किंच । स्वभावनियतं - प्रकृतिसंसृष्टस्य स्व-भाव प्राप्तम्, अवर्जनीयमित्यर्थः । कर्म - क्रियारूपं कर्मयोगम् । कुर्वन् - आचरन् । किल्बिषं - प्रत्यवायम् । नाप्नोति । विषतरुर्निवादि जातजन्तूनां स्वभावनियताहार सेवावत् प्रकृतिसंसृष्टस्य स्वोचितकर्मयोग सेवाऽनर्थाय न भवति, किन्तु स्वानुचित्त ज्ञान योगसेवैव मर्त्यानाममृतसेवावद्धानये भव-तीत्यर्थः ॥ ४७ ॥

पूर्वं प्रकृति संसृष्टस्य सुशकत्व दुश्शकत्वाभ्यां कर्मयोग ज्ञानयोगयो वैषम्यं स्मारितम् । इदानीं सौकर्या प्रमादाभ्यामपि वैषम्यमाह ॥

हे कौन्तेय ! सहजं स्वभावप्राप्तत्वेन सुशकम् । कर्मसकलेन्द्रिय-व्यापार रूपं कर्मयोगम् । सदोषमपि कष्टं कर्मेतिन्यायेन क्लेश युक्तमपि । नत्यजेत् । इन्द्रियव्यापाररूपस्य कर्मयोगस्य प्राकृतजन सहजत्वेन प्रमादा-भावान् क्लिष्टमपि तदेवोपादेयम्, नतु तद्विपरीतो ज्ञानयोग इति भावः ।

**अपने-अपने वर्ण और आश्रमोचित कर्म यदि निष्काम हो तो वे त्रुटि से युक्त होने पर भी अच्छी प्रकार से अनुष्ठित ज्ञानयोग रूप अनधिकार जनित परधर्म से भी अधिक कल्याण करने वाला होता है । क्योंकि पूर्व पूर्व वासना से होने वाले अपने स्वभाव के अनुसार नियत अतएव अवर्जनीय वर्णाश्रमोचित कर्म अनुष्ठान करने से पाप का भोगने वाला नहीं होता अर्थात् उसे संसार की प्राप्ति नहीं होती है । ४७**

**सहजं कर्म कौन्तेय स दोषमपि न त्यजेत् ।**
**सर्वारम्भा हि दोषेण धूमेनाग्निरिवा वृताः ॥४८॥**
**असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।**
**नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥४९॥**

किंच । क्लेशश्चोभयत्रापि समान इत्याह (सर्वेति) हि - यस्मात् । सर्वारम्भाः - कर्मारम्भाज्ञानारम्भाश्च । दोषेण - क्लेशेन । धूमेन । अग्निरिव । आवृताः । कर्मयोग ज्ञानयोगयोः क्लेशस्त्वविशिष्टः, किन्तु कर्मयोगे सौकर्याप्रमादौ गुणौ - ज्ञानयोगेतु तद्विपर्यव इति भावः ॥ ४८ ॥

यदर्थोयं प्रयास स्तदाह—

सर्वत्र - सर्वेषु मुक्तिव्यतिरिक्तफलेषु । असक्तबुद्धिः - अनासक्त चित्तः । अतएव । जितात्मा - जितमनाः । विगतस्पृहः - परम पुरुषकर्तृत्वानुसन्धानेनात्मकर्तृत्वस्पृहारहितः । पुमान् । संन्यासेन - त्रिविधत्यागात्मकेन संन्यासेन । कर्म कुर्वन्नपीतिभावः । परमां - ज्ञानयोगफलभूताम् । नैष्कर्म्यसिद्धिं - निर्गतानि कर्माणि - इन्द्रियव्यापारोपरतिरूपध्यानयोगः, तस्य सिद्धिलाभम् । अधिगच्छति - प्राप्नोति ॥ ४९ ॥

ततः किं तत्राह—

हे कौन्तेय ! सिद्धिं - अहरहरसक्षीयमानेन कर्मयोगेन ध्यान सिद्धिम् । प्राप्तः - गतः । पुमान् । यथा - येनप्रकारेण । ब्रह्म । आप्नोति । तथा - तं प्रकारम् । मे - मत्तः । समासेनैव - संक्षेपेणैव । निबोध - शृणु । ब्रह्म-

**हे अर्जुन ! अपने पूर्वजन्मार्जित कर्म के अनुगुण प्राप्त अथवा नियत अतएव अवर्जनीय यह कर्मयोग क्लेशरूप दोषयुक्त होने पर भी उसका त्यागना उचित नहीं है । कारण, अग्नि जैसे सर्वत्र धूम से आवृत रहता है वैसे ही कर्मयोग तथा ज्ञानयोग दोनों का आरम्भ क्लेश रूप दोष से आवृत्त होता है आरम्भ में दोनों ही क्लेश साध्य हैं ॥ ४८ ॥**

**जो पुरुष मुक्तिलाभ से भिन्न अन्य समस्त वस्तुओं में आसक्ति रहित अतएव जितेन्द्रिय एवं सम्पूर्ण कर्मों में फल, कर्तृत्व और ममता रहित है, वह पुरुष उक्त त्रिविध त्याग से युक्त होकर कर्मयोग के द्वारा सिद्धि की दशा में कर्म चेष्टाओं से विरत हो ज्ञानयोग की सिद्ध दशा अर्थात् उत्कृष्ट परमात्मध्यान निष्ठ प्राप्त करता है ।४९ ॥**





**सिद्धिं प्राप्तो यथा ब्रह्म तथाऽप्नोति निबोध मे ।**
**समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥५०॥**
**बुद्ध्या विशुद्धया युक्तो धृत्याऽऽत्मानं नियम्य च ।**
**शब्दादीन् विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥५१॥**
**विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।**
**ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥५२॥**

प्राप्तिप्रकार माकर्णयेत्यर्थः । तदेव ब्रह्म विशिनष्टि (निष्ठेति) ज्ञानस्य - ध्यानात्मकस्य । या । परानिष्ठा - परमप्राप्यमित्यर्थः ॥ ५० ॥

तमेव प्रकारं दर्शयति—

विशुद्धया - यथावस्थितात्मतत्त्वविषयया । बुद्ध्या - निर्धारणया । युक्तः । धृत्या - सात्त्विकबुद्धिदार्ढ्यरूपया । आत्मानं - मनः । नियम्य च - विषयेच्छाविमुखीकृत्य च, योग्यं कृत्वाचेत्यर्थः । शब्दादीन् । विषयान् । त्यक्त्वा - दूरीकृत्य । रागद्वेषौ - तत्सन्निधानकृतरागद्वेषौ । व्युदस्य - निरस्य च ॥ ५१ ॥

विविक्तसेवी - विविक्तं - ध्यानविरोधिरहितं देशं, सेवत इति तथाभूतः । लघ्वाशी - लध्वशनशीलः । "नात्यश्नतस्तु योगोऽस्ती" त्युक्तरीत्या अत्यशनानशनरहितः । यतवाक्कायमानसः - यतानि - ध्यानाभिमुखीकृतानि, वाक्कायमानसानि - तत्तद्वृत्तयः, येन सः । नित्यं - अहरहः । ध्यानयोगपरः ध्यानयोगे - प्रधानभूते - निष्ठितः । वैराग्यं - समुपाश्रितः - ध्येयतत्त्वव्यतिरिक्ततत्त्वेषु दोषपरामर्शेन वैराग्यं वर्धयन्नित्यर्थः ॥ ५२ ॥

**हे अर्जुन ! पूर्व के श्लोक में युक्त कर्मयोग के अनुष्ठान द्वारा ज्ञानयोग में सिद्धिरूप ध्यान निष्ठा प्राप्त पुरुष जिस प्रकार ब्रह्म वस्तु का लाभ करता है उसे तुम मुझ से संक्षेप में श्रवण करो । अभिप्राय यह है कि ध्यान से प्राप्त ज्ञान का परम प्राप्तव्य 'परब्रह्म' ही है, अर्थात् ब्रह्म का यथार्थ स्वरूप जाना जाता है ॥५०॥**

**सात्विक बुद्धि से युक्त होकर विशुद्ध धृति (धैर्य) द्वारा मन को शब्दादि विषयों से संयमित करके एवं राग, द्वेष परित्याग करके ॥ ५१ ॥**

**ध्यान करने के अनुकूल निर्जन स्थान सेवी होकर थोड़ा भोजन करके शरीर, मन एवं वाणी को संयमित करके आत्म साक्षात्कार के उपाय रूप ध्यान योगनिष्ठ पुरुष, सम्यक् रूप से वैराग्य का अवलम्बन करके ॥ ५२ ॥**

**अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् ।**
**विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥५३॥**
**ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति ।**
**समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥५४॥**

---

अहंकारं - अनात्मन्यात्माभिमानम् । बलं - तद्विवृद्धिहेतुभूत वासनाबलम् । दर्पं - तत्कार्यममार्गप्रवृत्तिम् । कामम् । क्रोधम् । परिग्रहं - विषयसंग्रहम् । विमुच्य । निर्ममः - सर्वेष्वनात्मीयेष्वात्मीयत्वाभिमानरहितः । शान्तः आत्मानुभवैकसुखः । ब्रह्मभूयाय - ब्रह्मभावाय । कल्पते - समर्थो भवति । सर्वबन्धविनिर्मोचनपूर्वकं यथावस्थितमात्मानमनुभवतीत्यर्थः ॥ ५३ ॥

ततोऽपि किं तत्राह—

ब्रह्मभूतः - प्रभूतयथावस्थितापरिच्छिन्नज्ञानस्वभावः । अतएव - प्रसन्नात्मा - प्रसन्नः - क्लेशकर्मविपाकादिकालुष्यरहितः, आत्मा - चित्तं यस्य सः । अतएव । सर्वेषु । भूतेषु - ब्रह्मादिस्तम्बपर्यन्तेषु प्राणिषु । समः अनादरशीलः । पुमान् । न शोचति । न कांक्षति - 'यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यत' इति पूर्वोक्तरीत्या गुरुशोकेनाप्यविचालितो मद्व्यतिरिक्तं कंचनापि नाभिलषति । किन्तु । परां - अव्यभिचारिणीं । मद्भक्तिं - मयि - सकलहेयप्रत्यनीके कल्याणगुणनिधौ निखिलजगत्कारणे शेषिणि, भक्तिम् । लभते - अनायासेन प्राप्नोति । एतच्च व्याधकुलसम्वर्धितराजकुमारसमाधिना सुस्पष्टं पूर्वमुपपादितम् स्मर्तव्यम् ॥ ५४ ॥

---

**अहंकार, बल, दर्प (घमण्ड) काम, क्रोध एवं धन जन आदि विषयों के संग्रह का परित्याग करके, सम्पूर्ण विषयों में ममकार रहित एवं आत्मा के अनुभव से होने वाले सुख से सुखी होता है । उक्त ध्यानयोग-सिद्ध पुरुष ब्रह्मभाव को प्राप्त होता है—अर्थात् विशुद्ध आत्म वस्तु का अनुभव करता है । यहाँ 'ब्रह्म' शब्द से आत्मा का ग्रहण है ॥ ५३ ॥**

**ब्रह्मभाव प्राप्त अर्थात् यथावस्थित अपरिच्छिन्न ज्ञानस्वभाव आत्मा का दर्शन प्राप्त प्रसन्न निर्मल चित्त पुरुष सब प्रकार के शोकों से तथा आकांक्षा—रहित होता है । इसलिए वह सम्पूर्ण प्राणियों में समबुद्धि (सब में ज्ञान स्वरूप आत्मा एक जैसा है) होकर मेरे प्रति अत्यन्त प्रेम रूपा पराभक्ति प्राप्त करता है ॥ ५४ ॥**





**भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ।**
**ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥५५॥**
**सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।**
**मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥५६॥**

---

तत्फलमाह—

अहम् । यश्च अस्मि - स्वरूपतस्स्वभावतश्च यादृशश्चास्मि । यत्स्वरूपस्वभाववानित्यर्थः । यावांश्च । अस्मि - गुणतोविभूतितश्च यन्महिमा यद्गुणविभूतिश्चास्मीत्यर्थः । भक्त्या - एवंभूतया पूर्वोक्तया भक्त्या । मां - ज्ञात्वा - विशदमनुभूय । तदनन्तरम् । मत्तत्वज्ञानानन्तरम् । ततः - भक्तितः । माम् । विशते - प्रविशति । मत्स्वरूपस्वभावगुणविभूतिज्ञानानन्तर भाविन्या विशदनिरतिशयभक्त्या मां प्राप्नोतीत्यर्थः । पूर्वमपि - 'भक्त्यात्यनन्ययाशक्य अहमेवं विधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परं तपे'ति भक्तेरेव प्रवेशहेतुत्वमुक्तं स्मर्तव्यम् ॥ ५५ ॥

एवं वर्णाश्रमनियतनित्यनैमित्तिककर्मणां कर्तृत्वाद्यभिसन्धिरहितानामनुष्ठितानां परमपुरुषाराधनरूपाणां परिपाकउक्तः । इदानीं काम्यानां कर्मणामप्युक्तरूपेणानुष्ठितानां स एव परिपाक इत्याह—

सदा । मद्व्यपाश्रयः - अहमेव - व्यपाश्रयः - शेषी यस्य सः । मयि

---

**सर्वेश्वर मैं स्वरूप एवं स्वभाव से जिस प्रकार का हूं और जिस प्रकार के गुणों से एवं विभूतियों से विशिष्ट हूं, उस प्रकार मुझे पूर्वश्लोकोक्त पराभक्ति द्वारा अति विस्तृत अनुभव से यथार्थ रूप से जानकर मेरे विषय में इस प्रकार तत्वज्ञान के अनन्तर उक्त साक्षात् दर्शन तुल्य अनुभव से होने वाली पराभक्ति ही अति परिपक्व होकर विस्तृत यथार्थ तत्वज्ञान लाभ के लिए परमभक्ति को प्राप्त होकर (भक्त) मुझ में प्रवेश करता है अर्थात् मुझको प्राप्त करता है ॥ ५५ ॥**

**अब तीन श्लोकों में समस्त कर्मों के कर्तृत्व को परमात्मा के लिए अर्पित करने की बात बताते हैं—**

**जीव सर्वदा ईश्वर का शेष एवं नियाम्य वस्तु है यह समझकर जो व्यक्ति सदैव मुझे विशेष रूप से आश्रय करके अर्थात् मेरे ऊपर सम्पूर्ण कर्मों का कर्तृत्व आदि छोड़कर समस्त कर्मों काम्य कर्मों तक को करने वाला पुरुष मेरी कृपा से नित्य एवं अव्यय परमपद अर्थात् मुझे प्राप्त होता है ॥ ५६ ॥**

**चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ।**
**बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥५७॥**
**मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।**
**अथ चेत्त्वमहंकारान्न श्रोष्यसि विनङ्क्ष्यसि ॥५८॥**

सन्न्यस्तकर्तृत्वादिस्सन् । सर्वकर्माण्यपि - काम्यकर्मसहितानि सर्वाणि कर्माण्यपि । न केवलं नित्यनैमित्तिककर्माण्येवेति भावः । कुर्वाणः - अनुतिष्ठन् । पुमान् । मत्प्रसादात् - मदनुग्रहात् । शाश्वतं - सनातनं । अव्ययं - निर्विकारं । पदं - पद्यते गम्यत इति पदं - प्राप्यम्मां । अवाप्नोति ॥ ५६ ॥

एवं सामान्यत उपदिश्य विशेषतो प्युपदिशति—

चेतसा । सर्वकर्माणि । मयि । सन्नस्य - 'मयि सर्वाणि कर्माणि संन्यस्याध्यात्म चेतसा । निराशीः' इत्युक्तप्रकारेण जीवस्य मच्छेषत्वमन्नियाम्यत्वविषयबुद्धया सर्वाणि लौकिकानि वैदिकानि युद्धादीनि च कर्माणि मत्कर्तृत्वानुसन्धानेन मयि समर्प्येत्यर्थः । मत्परः अहमेव - परः - फलतया - प्रधानभूतः यस्य सः । मदेकप्राप्यत्वाभिसन्धिमानित्यर्थः । बुद्धियोगे । उपाश्रित्व - कर्मानुष्ठान वेलायामिममेव बुद्धियोगमुपजीव्येत्यर्थः सतताम् । मच्चित्तः । भव ॥ ५७ ॥

एवं नित्यनैमित्तिककाम्यरूपाणां दर्शितबुद्धिविशेषयोगसहितानां कर्मयोगशब्दवाच्यानां परम्परया परिपूर्णभगवत्प्राप्ति पर्यन्त परिकरमुपपाद्य सर्वथा कर्मयोगएव कर्तव्य इति निगमयन् विपक्षेऽनिष्टमाह—

अब उसी बात को विशेष रूप से बताते हैं—

हे अर्जुन ! वैदिक एवं लौकिक समस्त कर्मों का कर्तृत्व मेरे ऊपर सम्यक् रूप से छोड़कर मेरे परायण होकर अर्थात् मेरी प्राप्ति ही एकमात्र प्रयोजन है इस प्रकार की भावना से युक्त होकर कर्मों का अनुष्ठान करते हुए, दृढ़ विश्वास रूप निष्काम कर्मयोग अवलम्बन करके तू सर्वदा मुझ में मन को लगा ॥ ५७ ॥

हे अर्जुन ! उक्त प्रकार से मुझ में मन लगाकर अर्थात् कर्तापने का अभिमान मुझ में समर्पण करके समस्त कर्मों का अनुष्ठान करने से मेरी कृपा से मेरी प्राप्ति में प्रतिबन्धक समस्त विघ्नों को पार कर जाओगे । और अहंकार के वश होकर यदि मेरे इस उपदेश को नहीं सुनोगे तो निश्चय ही नष्ट हो जाओगे अर्थात् स्वरूप से गिर जाओगे ॥ ५८ ॥





**यद्यहंकारमाश्रित्य न योत्स्य इति मन्यसे ।**
**मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥५९॥**

मच्चित्तः - मय्येव चित्तं कर्तृत्वानुसन्धानरूपं यस्य सः । एवं सर्वथा कर्माणि कुर्वन्नित्यर्थः । मत्प्रसादात् - तादृशकर्मानुष्ठानमूलमदनुग्रहात् । सर्वदुर्गाणि - सर्वाणि संसारदुर्गाणि । तरिष्यसि । संसाराद्विमोक्ष्यस इत्यर्थः । अथ - एवम्मदुपदेशानन्तरमपि । त्वम् । अहंकारात् - अहमेव कृत्याकृत्यविवेकं स्वयं जानामि - किमन्योपदेशेनेति भावात् । मदुक्तम् । न श्रोष्यसिचेत् । विनक्ष्यसि - नित्यसंसारितया विनिष्टो भविष्यसि । नहि मद्वचतिरिक्तः कश्चित्कृत्याकृत्यविचक्षणः प्रशस्तोऽस्तीति भावः ॥ ५८ ॥

पूर्वत्र स्ववाक्यश्रवणफलतया युद्धाप्रवृत्तौ विनाश उक्तः । इदानीं युद्धप्रवृत्तिरन्यथाप्यवश्यं भाविन्येव - तव मौर्ख्यदोषः परमधिक इत्याशयेनाह—

अहंकारं - अहमेव सर्वं हिताहितं जानामीति स्वातन्त्र्यम् । आश्रित्य । नयोत्स्ये - युद्धं न करिष्ये । इति । यदिमन्यसे अभिमन्यसे चेदित्यर्थः । ते-तव । एषः । व्यवसायः - स्वातन्त्र्याभिमानः । मिथ्या - असत्य इत्यर्थः । तत्र हेतुमाह । प्रकृतिरिति । प्रकृतिः - पूर्ववासना । त्वां । नियोक्ष्यसि - प्रेरयिष्यति । मत्स्वातन्त्र्यनियोगाभ्यांविनाऽपि पशुवदज्ञं त्वां युद्धे प्रकृतिरेव बलात्प्रेरयिष्यतीत्यर्थः ॥ ५९ ॥

और हे अर्जुन ! यदि तुम अहंकार के वश में होकर अर्थात् 'अपने हिताहित के विषय में मैं जानता हूँ' इस प्रकार स्वतन्त्र रूप से मेरे उपदेश का अनादर करके 'मैं युद्ध नहीं करूँगा' इस प्रकार सोचोगे तो तुम्हारे स्वातन्त्र्य से होने वाला सिद्धान्त मिथ्या होगा । क्योंकि तुम्हारी प्रकृति अर्थात् क्षत्रिय-स्वभाव तुम्हें युद्ध करने में नियुक्त करेगा । अर्थात् तुम्हारा इस प्रकार अहंकार से पूर्ण सिद्धान्त के कारण अन्तर्यामी मैं तुमसे उदासीन हो जाऊँगा तब उद्विग्नचित्त अज्ञ की भाँति तुम्हें तुम्हारी प्रकृति (क्षत्रिय स्वभाव) बल पूर्वक (हठात्) युद्ध में नियुक्त करेगी । सारांश यह कि (मेरे कहने के अनुसार यदि तुम कर्म करोगे तो सर्वज्ञ मैं तुम्हारे उन समस्त कर्मों का भार अपने ऊपर लूँगा । किन्तु यदि तुम मेरे कथन का उल्लंघन करोगे तो मैं उदासीन रहूँगा और तब तुम प्रकृति के परवश होकर अहित विषयों में प्रवृत्त होगे) ॥ ५९ ॥

**स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।**
**कर्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोऽपि तत् ॥६०॥**
**ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।**
**भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥६१॥**

---

तदेवोपपादयति—

हे कौन्तेय ! स्वभावजेन - स्वस्य - क्षत्रियस्य तव, भावः - प्राचीन-वासना, तज्जातेन । स्वेन - स्वकीयेन । कर्मणा । 'शौर्यन्तेज' इत्यादि पूर्वोक्तासाधारणधर्मेण । निबद्धः - शमीवन्हिवदनुबद्धः । मोहात् - अज्ञानात् । यत् - युद्धादिकम् । कर्तुम् । नेच्छसि । प्राप्तावसरेऽधर्मत्वबुद्धया न चिकीर्षसि, तदेव । अवशोऽपि - अस्वतन्त्रोऽपि वा । परधर्मणोद्भूततमः प्रेरितस्सन्वा । करिष्यसि । गत जल सेतुबन्धवद्वृथैवावश्यं करिष्यसीत्यर्थः ॥ ६० ॥

ननु त्वदौदाखीन्ये च कथमचेतनया प्रकृत्या मम प्रवृत्ति सम्भवः ? सम्भवेवा कथं तव सर्वप्रवृत्तिहेतुत्वमित्यत्राह—

हे अर्जुन ! ईश्वरः - नियन्ता । नियमनानुकूलव्याप्तिमान् वासुदेव-इतियावत् । यन्त्रारूढ़ानि - यन्त्रं - प्रवृत्तिनिवृत्त्यनुकूलप्रदेशयुक्तरथरूपं शरीरम्, आरूढानि । सर्वभूतानि - 'आत्मानं रथिनं विद्धि शरीरं रथमेव च' इति श्रुत्युक्तरीत्या तत्तद्रथिकत्वेनावस्थितान् सर्वानात्मन इत्यर्थः । मायया - गुणत्रयमय्या प्रकृत्या । भ्रामयन् - पूर्ववासनोद्भूतगुणानुगुणं प्रवतयन्नित्यर्थः । सर्वभूतानां - तेषामेव प्राणिनाम् । हृद्देशे - प्रवृत्तिनिवृत्तिहेतुभूतज्ञानोत्पत्तिदेशे । तिष्ठति - उदादीनवदास्ते । नहि भूतावेशन्यायेन

---

**हे कुन्तीपुत्र अर्जुन ! क्षत्रियधर्मरूप अपने स्वभावगत अपने कर्म से सम्बन्ध युक्त होकर तुम अज्ञान के वश में होकर यदि युद्ध रूप कर्म करने की इच्छा नहीं करते हो, किन्तु क्षत्रिय प्रकृति के वश होकर अवश भाव से तू वह (युद्ध) करेगा ॥ ६० ॥**

**हे अर्जुन ! सर्व नियन्ता परमेश्वर, प्रवृत्ति-निवृत्ति विशिष्ट शरीर रूपी रथ में आरूढ़ हुए समस्त प्राणियों को सत्व आदि गुणमयी माया से जीवों के अपने पूर्व कर्म-वासना से होने वाले स्वभाव के अनुसार प्रवर्तित करता हुआ, उन सब जीवों के हृदय में स्थित है ॥ ६१ ॥**





**तमेव शरणं गच्छ सर्वभावेन भारत ।**
**तत्प्रसादात्परां शान्ति स्थानं प्राप्स्यसि शाश्वतम् ॥६२॥**

---

जीवमीश्वरः प्रवर्तयति; अपितु सत्त्वादिगुणमयान् भावान् पुरस्कृत्य पूर्वपूर्ववासनानुगुण गुणसङ्गद्वारेणेति वासनायाः प्रधर्षणादिवशात्प्रवर्तकत्वेपि नात्मप्रवर्तकत्वहानिः, नचौदासीन्यस्य व्याहतिश्चेति भावः ॥ ६१ ॥

ननु ईश्वरः स्वतन्त्रो यदि मायसा जीवं प्रवर्तयति - परतन्त्रः कथं तां निरस्येदित्यत्राह—

हे भारत ! तमेव । सर्वप्रशासितारमप्याश्रितवात्सल्येन त्वत्सारथ्ये स्थित्वा युद्धं कुर्विति हितोपदेष्टारमेवेत्यर्थः । अनेन परत्वसौलभ्ये सूचिते । एवकारेण तत्प्रयुक्तमायायास्तदन्येनानिवर्तनीयत्वमुक्तम् । सर्वभावेन - हितोपदेष्टृत्वप्राप्यत्वप्रापकत्वादिरूपेण । शरणं - गोप्तारम् । गच्छ - अवगच्छ । अवश्यमन्यथापि भाविन्यायुद्धप्रवृत्तेर्विनाशहेतुत्वेन तदुपदिष्टरीत्यैव युद्धादिधर्मं कुर्वित्यर्थः । एवंसति, तत्प्रसादात् - तस्य - सर्वेश्वरस्य, प्रसादात् - कर्मयोगानुष्ठानजनितानुग्रहात् । परां - उत्कृष्टां । अपुनरंकुरामिति यावत् । शान्तिं - सर्वकर्मनिवृत्तिम् । शाश्वतं - पुनरावृत्तिरहितम् । स्थानं - "तद्विष्णोः परमंपदं सदा पश्यन्ति सूरयः, तेहनाकम्महिमानस्सचन्ते यत्र पूर्वे साध्यास्सन्तिदेवाः" इत्यादि श्रुतिप्रतिपाद्यं लोकम् प्राप्स्यसि ॥ ६२ ॥

गीताशास्त्रार्थं नियमयति—

इति - पूर्वोक्तरीत्या - सम्यक् समग्रं चेति यावत् । गुह्यात् - गुह्यतरं ज्ञानं - आयुर्धनुर्गान्धर्ववेदमूलाल्लोकप्रमाणसिद्धविषय इति गुह्यम्, तस्मात् प्रकृष्टातीन्द्रियपारलौकिकस्वर्गादिसाधन ज्ञानं वेदमूलं गुह्यं, ततोऽपि वेदान्त तदुपबृह्मणं मुमुक्ष्वपेक्षितं यथाधिकारमनुष्ठेयं मुक्तिरूपफलव्यवहिताव्यवहितोपायरूपं कर्मयोगादित्रितयज्ञानं गुह्यतरम् ज्ञानं । मया - सर्वज्ञेन परमाप्तेन च । ते - शिष्यस्तेऽहंशाधिमा' मिति जिज्ञासवे तुभ्यम् । आख्यातं -

---

**पूर्व श्लोकोक्त माया निवृत्ति का उपाय बताते हैं—**

**हे अर्जुन ! तुम उसी सर्वनियन्ता परमेश्वर को ही सर्वभाव से अर्थात् उपदेष्टा, उपाय एवं उपेय या प्राप्य वस्तु रूप से स्मरण करो । तू उस परमात्मा की कृपा से ही परमशान्ति अर्थात् कर्म निवृत्तिरूप उत्कृष्ट शान्ति एवं पुनरावृत्ति से रहित नित्य स्थान को प्राप्त होगा ॥ ६२ ॥**

**इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ।**
**विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥६३॥**
**सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।**
**इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥६४॥**

---

कथितम् । एतत् - मदुक्तम् । अशेषेण - कात्स्नर्येन । विमृश्यसम्यग्विचार्य । यथा - यं धर्मम् । इच्छसि । तथा - तन्धर्मम् । कुरु - आचर । यथाधिकरं कर्मयोगं ज्ञानयोगं भक्तियोगं वाऽनुतिष्ठेत्यर्थः । यतु - युद्धं कुरु माकुरुवेत्यर्थः । अकरणेऽनिष्टस्य स्फुटमुक्तत्वादित्यवगन्तव्यम् ॥ ६३ ॥

एवं शास्त्रार्थभूतानां त्रयाणाम्मध्ये भक्तियोगस्य मोक्षसाधनत्वेन सारार्थतया पुनस्तमुद्धृत्य श्लोकद्वयेन प्रत्यभिज्ञापयति—

सर्वगुह्यतमं - सर्वेषु गुह्यतरेषु कर्मयोगादिषु - गुह्यतमं - अतिशयेन गुह्यं । परमं - साक्षान्मोक्षसाधनविषयत्वात्सर्वोत्तरं । वचः । भूयः । शृणु । 'इदंतुते गुह्यतम' मित्यादिना 'मन्मना भवे' त्यन्तेन नवमाध्यायेन सुनिरूपितत्वेपि सारार्थत्वात्पुनराकर्णयेत्यर्थः । एवमुक्ति र्नोपच्छंदनमात्रं स्तुतिर्वेत्वाह (इष्टइति) मे । दृढं - अत्यर्थं । इष्टः - 'प्रियोहि ज्ञानिनोऽत्यर्थ' मित्युक्त ज्ञानितुल्यः । असि । इति मत्वा । येन, परमहितोपदेशयोग्योऽसि, ततः हेतोरित्यर्थः । ते हितं - अव्यवहितफलसाधनं । वक्ष्यामि - उपदेक्ष्यामि ॥ ६४ ॥

---

अब भगवान श्रीकृष्ण गीता शास्त्र के उपदेश का उपसंहार करते हैं—हे अर्जुन ! गीता के द्वितीय अध्याय के ११ वें श्लोकसे यहाँ तक तुम्हें सम्पूर्ण प्रकार का गुप्त से गुप्त ज्ञान अर्थात् मोक्ष साधक कर्मयोग, ज्ञानयोग, भक्तियोग रूप गुह्यज्ञान का उपदेश दिया है। इस उपदेश को तुम अच्छी प्रकार विचार करके अपने अधिकार के अनुसार कर्म, ज्ञान, भक्ति योगों में से जिसकी इच्छा हो उसी का अनुष्ठान करो ॥ ६३ ॥

(गीता शास्त्र में उपदिष्ट भगवत् प्राप्ति का उपाय रूप कर्मयोग, ज्ञानयोग एवं भक्तियोग इन तीनों को भगवत् प्राप्ति के उपाय रूप से अनुष्ठान न करके, एवं मैं (परमात्मा) ही मेरी प्राप्ति का उपाय है, इस विषय में दृढ़ बुद्धि होकर मेरे शरणागत हो ओ। उक्त कर्मयोग, ज्ञानयोग एवं भक्तियोग का सेवन मेरी सेवाबुद्धि से करते जाओ। अध्याय १८ में श्लोक ४ से ११ तक उपदेश दिया कि फलाभिसन्धि, कर्तृत्वाभिसन्धि एवं मेरापन का अभिमान का त्याग करके कर्मों का अनु-





**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।**
**मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥६५॥**

---

गुह्यतमांगिस्वरूपं फलाव्यवहितसाधनतया निरूपयन् तत्स्वरूपं प्रत्यभिज्ञापयति—

मद्भक्तः - मयि भक्तः । निरतिशयप्रीतिमान् । मन्मनाः - मय्येव मनोयस्यसः - मन्मनाः । भव । मय्यतिशयितप्रीत्या सततं मत्स्मृतिमेव कुर्वित्यर्थः । मद्भक्तस्सन् । मद्याजी - मत्पूजनशीलोभव । मय्यतिप्रीतिरूपाराधनमशेषवृत्तिरूपमाचरेत्यर्थः । मद्भक्तस्सन् । माम् । नमस्कुरु । मय्यतिमात्रप्रीतिरूपं प्रह्वीभावमात्मीयार्पणं च कुर्वित्यर्थः । अत्र सर्वाण्यपि कर्तृविशेषणानि विशिष्टक्रिया रूपभक्तिलाभाय । एवं च क्रियारूपतावन्निरन्तरस्मृत्याराधनेच्छानुसन्धानात्मिका भक्तिः मत्प्राप्तिसाधनमिति पर्यवस्यतीतिध्येयम् एवं कुर्वन् । मामेव । एष्यसि । प्राप्स्यसि । ते - तुभ्यम् । सत्यं - यथार्थम् । प्रतिजाने - प्रतिज्ञां करोमि । यतः । त्वम् । मे । प्रियः - प्रीतिविषयः । असि । मद्भक्तियुक्तत्वादेव ममात्यर्थप्रीतिविषयः, अतस्त्वद्विश्लेषमसहमानस्त्वाम्मामवश्यं प्रापयामीत्यर्थः ॥ ६५ ॥

एवं विस्तरसंग्रहाभ्या मुक्तानां कर्मयोगादीनां त्रयाणां सारतममनुसन्धानविशेषमुद्धृत्य ततएव मामेवैष्यसीत्युक्तेष्टप्राप्तिप्रतिबन्धकभूतानिष्टानां निवृत्तिमाह—

---

ष्ठान ही शास्त्रीय त्याग है। कर्म का स्वरूपतः त्याग शास्त्रीय त्याग नहीं है। भगवान की सेवाबुद्धि से कर्म, ज्ञान, भक्तियोग का अनुष्ठान करना कर्तव्य है। यही गीता का सर्वगुह्यतम श्रेष्ठ उपदेश है। यही चरम-उपदेश भी है। इसके बाद श्री कृष्ण ने कोई उपदेश नहीं दिया।)

हे अर्जुन ! चरम उपदेश रूप सबकी अपेक्षा गुह्यतम मेरे यह श्रेष्ठ वाक्य मैं फिर से कहता हूँ सुनो। क्योंकि तुम मेरे अत्यन्त प्रिय हो इसलिए (भगवत् प्राप्ति के उपायों में) जो सबकी अपेक्षा तुम्हारे लिए हितकर है उसे कहता हूँ ॥ ६४ ॥

मेरा भक्त होकर अर्थात् मेरे प्रति अत्यन्त प्रीतियुक्त होकर, मुझ में मन लगाओ अर्थात् मेरे विषय में सम्पूर्ण रूप से मन को निविष्ट करो। मेरी आराधना करो, मुझे नमस्कार करो—मेरे प्रति अति विनम्र रहो प्रेम पूर्वक ऐसा करने से तुम मुझे ही प्राप्त होगे। तुम मुझे अत्यन्त प्रिय हो इसलिए तुम से इस विषय में प्रतिज्ञा करता हूँ कि यह उपदेश नितान्त सत्य, यथार्थ है ॥ ६५ ।

**सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।**
**अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥६६**

सर्वधर्मान् - पूर्वोक्तानशेषान् धर्मान् - साक्षात्प्ररम्परया च श्रेयस्साधनभूतान् कर्मयोगज्ञानयोगभक्तियोगान् । परित्यज्य - 'त्यागो हि पुरुषव्याघ्र त्रिविधस्सम्प्रकीर्तित' इत्युक्तरीत्या कर्तृत्वममताफलाभिसन्धित्यागेन त्यक्त्वेत्यर्थः । कर्मयोगे फलत्यागस्स्वर्गादिविषयः, ज्ञानयोगे कैवल्यविषयः, भक्तियोगे - ऐश्वर्यादिफलान्तरविषय इत्यवगन्तव्यम् । मां - 'ईश्वरस्सर्वभूताना' मित्युक्तरीत्या अन्तर्यामिणं, 'मयाऽध्यक्षेण प्रकृतिस्सूयते स चराचर' मित्युक्तरीत्या प्राप्यं, 'मत्प्रसादात्परांशान्ति स्थानं प्राप्स्यसि शाश्वत' मित्युक्तरीत्या प्रापकम्, 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव' चेत्युक्तरीत्या सर्व कर्माराध्यक्षञ्च माम् । एकं - मुख्यम् । शरणं - उपायम् । व्रज । अवगच्छ । अहंहि तत्तदाराधनप्रीतः फलं ददामीति सर्वशास्त्रसिद्धः, अतो मामेवोपायत्वेनानुसन्धत्स्व । नत्वविदितवेदान्तवत् - 'प्लवाह्येते अदृढायज्ञरूपाः अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्यूपुनरेवापियन्ती' त्यादि श्रुत्युक्तरीत्या नश्वरसाध्ययज्ञोपासनादिकान् धर्मानिति भावः । अहं - उक्तप्रकारेणाराधितः फलप्रदानौपयिकसर्वज्ञत्व सर्वशक्तित्व परमकारुणिकत्वादिगुणसम्पन्न इति भावः । त्वा - त्रिविधत्यागयुक्ततया धर्माननुतिष्ठन्तम्भवन्तम् । सर्वपापेभ्यः - मज्ज्ञानप्राप्तिप्रतिबन्धकाकृत्यकरणकृत्याकरणरूपेभ्यः । मोक्षयिष्यामि - विमोचयिष्यामि । माशुचः - शोकं मा कृथाः । अथवा - मन्मनाभवेति सारार्थतया प्रकृतस्य भक्तियोगस्य भगवत्प्रियपुरुषनिर्वर्त्यत्वेन तदारम्भ विरोधि पापानामानन्त्यात्परिमित कालेन पुंसा मनन्त प्रायश्चित्ताचरणे शक्तेः दीर्घकालनैरन्तर्यसेवनीयत्वेन दौष्कर्याच्च फलविलम्बशङ्कयाऽऽत्मनोभक्तियोगारम्भानर्हतया शोचन्तमर्जुनम्प्रत्याह (सर्वेति) सर्वधर्मान् - अत्र धर्मशब्देन - 'धर्मेणपापमपनुदती'ति

**हे अर्जुन ! तुम कर्मयोग, भक्तियोग और ज्ञानयोग रूप समस्त धर्मों के अनुष्ठान में उपाय बुद्धि का त्याग करके (न कि स्वरूप त्याग करके) एकमात्र मेरी ही शरण ग्रहण करो अर्थात् एकमात्र मुझे ही कर्ता, आराध्य, प्राप्य एवं उपाय रूप से अनुसन्धान करो । प्रेम पूर्वक उक्त प्रकार से आराधित होकर मैं स्वयं मेरी प्राप्ति के विरोधीरूप समस्त पापों से तुम्हें मुक्त कर दूंगा, तुम निश्चिन्त रहो, शोक मत करो ॥ ६६ ॥**





**इदं ते नातपस्काय नाभक्ताय कदाचन ।**
**न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥६७॥**

श्रुत्युक्त धर्मसंग्रहः । सर्वशब्देन प्रायश्चितरूपधर्माणां विविधत्वं - बहुवचनेनानन्त्यं च विवक्षितम् । विविधानन्तप्रायश्चित्तरूपकृछ्रचान्द्रायणादीनित्यर्थः । परित्यज्य - अशक्तस्य तव दुष्करतया स्वरूपतएव परित्यज्येत्यर्थः । एकं - अनेकप्रतिभटम् । मां - सर्वज्ञं सर्वशक्तं परमकारुणिकं वात्सल्यजलधिं च । शरणं उपायं । 'शरणं गृहरक्षित्रोरुपाये च निगद्यत' इति कोशात् । व्रज - रक्षिष्यतीति महाविश्वासपूर्वकाध्यावसायरूपप्रपदनं कुरु । अहं - सर्वज्ञः सर्वशक्तिः । त्वा - अल्पज्ञमल्पशक्तिं च भवन्तम् । सर्वपापेभ्यः - यथोदितभक्त्यारम्भविरोधी सर्वपापेभ्यः । मोक्षयिष्यामि । मा शुचः । एकेन सुकरेणाबिलम्बेन विविधानन्तपापनिवृत्तौ विवधैरनन्तैर्दुष्करैः फलविलम्बिभिः प्रायश्चित्तैर्नशोकः कार्यइतिभावः । इदानीं भक्त्यारम्भविरोधि पापनिबर्हणोपायतया प्रपदननिर्देशोऽन्येषामपि दुष्करेष्टोदाहरणरूपः । अतः इत्थमेव सुदुष्करेष्टहेतु प्रतिभट तया सर्वत्र शरणागतिरेवैष्टव्या । अतएव 'सुदुष्करेण शोचेद्यो येन येनेष्टहेतुना । स स तस्याहमेवेति चरमश्लोक संग्रह' इत्यभियुक्तैरप्युक्तम् ॥ ६६ ॥

अनधिकार्युपदेशस्यात्यन्तानिष्टत्वात्प्रथमतस्तन्निषेधति—

इदं - परमगुह्यतमं शास्त्रम् । अतपस्काय न विद्यते तपो यस्य तस्मै । अकृततपस इत्यर्थः । ते - त्वया । न वाच्यम् । अभक्ताय – 'यस्यदेवे पराभक्तिर्यथा देवे तथागुरौ । तस्यैते कथिताह्यर्थाः प्रकाशन्ते महात्मन' इति श्रुत्युक्तरीत्या मयि देवे त्वयि वक्तरिच भक्तिमनाचरते पुंसि तप्ततपसेपि । कदाचन । नवाच्यमित्यनुषंगः । अशुश्रूषवेच - मयि देवे त्वयिवक्तरिच भक्ताय तप्ततपसेपि च शुश्रूषामकुर्वते च । नवाच्यं । यः । मां । अभ्यसूयति - मत्स्वरूपरूपगुणादिषु श्रुतेषु दोषानाविष्करोति । तस्मै च पूर्वोक्त शुश्रूषादिगुण सम्पन्नायापि । न वाच्यं । नचाभ्यसूयत इति पूर्वोक्तशैल्या

**शुश्रूषा (सेवा करने की भावना) से युक्त न हो तो ऐसे अशुश्रूषा वाले व्यक्ति को न कहना चाहिए। मुझ से जो अभ्यसूया करे अर्थात् पूर्वोक्त मेरे स्वरूप ऐश्वर्य एवं गुणों का श्रवण करके उनके विषय में दोष की कल्पना करे उसे भी गीता का उपदेश नहीं करना चाहिए, क्योंकि ऐसा असूया से युक्त पुरुष अत्यन्त त्याज्य होता है । ६७ ॥**

**य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।**
**भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥६८॥**
**न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।**
**भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥६९॥**

---

वक्तव्यत्वेपि 'विद्या ह वै ब्राह्मणमाजगाम गोपाय मां शेवधिस्तेऽहमस्मि । असूयकायानृजवेऽयताय न मां ब्रूया वीर्यवती तदा स्या' मिति श्रुतिस्मृति निषिद्ध तथाऽसूयकस्यात्यन्तपरिहरणीयत्वज्ञापनाय विषमशैल्या निर्देश इत्यव गन्तव्यम् ॥ ६७ ॥

एवमनधिकार्युपदेशं निषिध्याधिकार्युपदेशस्य फलमाह—

यः - पुमान् । परमम् । इदम् । गुह्यं - रहस्यम् । मद्भक्तेषु - मयि भक्तिमत्सु । अभिधास्यति । व्याख्यास्यति । अनेन - 'श्रावयेच्चतुरो-वर्णा' निति चातुर्वर्ण्याधिकारेऽपि भक्तानामेवेदं व्याख्यातव्यमित्युक्तम्भवति । सः - पुमान् । मयि । परान् । भक्तिम् । कृत्वा - लब्ध्वा । भक्तेभ्यो व्याख्यानरूपकर्मयोगेनैव भक्तिप्राप्य । मामेव । एष्यति प्राप्स्यति । अत्रै-वकारेणाधिकारिभ्यो गीतां वक्तुर्व्याख्यातुश्च फलान्तरानभिसन्धि जन-यामीति तात्परं द्योत्यते । असंशयः । अत्र संशयो नास्तीत्यर्थः ॥ ६८ ॥

मनुष्येषु - मनुष्याणां मध्ये । तस्मात् - गीताव्याख्यातुः । अन्यः कश्चित् । प्रियकृत्तमः । पूर्वमतिशयेनप्रियकारी । नाभूच्च । किंच । तस्मात् । अन्यः । मे - मम । प्रियतरः । भुवि - लोके । न भविता च - न भविष्यति च । 'प्रोवाचतां तत्त्वतो ब्रह्मविद्या' मिति विहितब्रह्मविद्योप-देशेन मद्भक्तविषये महोपकारकत्वात् ततएव भक्तिं लब्ध्वा मुच्यत इति भावः ॥ ६९ ॥

---

**जो पुरुष उत्कृष्ट इस रहस्य गुह्य उपदेश का मेरे भक्तों के निकट व्याख्यान करेगा, वह मुझ से पराभक्ति को पाकर मुझे ही प्राप्त होगा । इसमें सन्देह नहीं है ॥ ६८ ॥**

**मेरे भक्तों के प्रति इस गीता शास्त्र का व्याख्यान करने वाले पुरुष की अपेक्षा अन्य पुरुषों में कोई भी इस प्रकार का मुझे अत्यन्त प्रिय इससे पूर्व न हुआ और न इस पृथिवी पर अन्य कभी कोई होगा ही ॥ ६९ ॥**





**अध्येष्यते च य इमं धर्म्यं सम्वादमावयोः ।**
**ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥७०॥**
**श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।**
**सोऽपि मुक्तः शुभाँल्लोकान् प्राप्नुयात्पुण्यकर्मणाम् ॥७१॥**

---

एवमुपदेष्टुः फलमुक्त्वाऽध्येतुश्श्रोतुश्च फलमाह द्वाभ्यां—

यः - पुमान् । धर्म्यं - धर्मादनपेतम् । इमं - वर्तमानम् । सम्वादं - बुभुत्सयाऽऽवयोः प्रश्नोत्तररूपं सन्दर्भम् । अध्येष्यते - अध्ययनमपि वा करि-ष्यते । गीतानामुपनिषत्सारत्वादध्येष्यत इत्युक्तिः । भारतस्य धृतराष्ट्रा-दीनामुत्पत्तेः पूर्वमेव भगवत्प्रसादात्कृतत्वेन जनमेजयमुखेन मनुष्यलोक प्रवर्तनमभिप्रेत्याध्येष्यत इतीदानीमेवैतद्ग्रन्थाध्ययनस्य भविष्यत्त्वेन निर्देशः । तेन - पुरुषेण - तावन्मात्रेण । अहं - अवाप्तसमस्तकामः निखिलजगत्का-रणभूतः । लक्ष्म्यादिपरिजनपरिचर्यमाण इत्यर्थ । ज्ञानयज्ञेन - ज्ञानय-ज्ञेनचाप्यन्ये यजन्तो मामुपासते' इत्युक्त भगवदनुसन्धानरूपभक्तियोगेन । इष्टः - आराधितः - स्याम् । इति । मे । मतिः - निश्चयः । 'यं यं क्रतुम-धीते तेन तेनास्येष्टं भवती' त्यध्ययनानुष्ठानयो स्समानफलत्वं श्रूयते । 'यो-ऽश्वमेधेन यजते य उचैनमेव वेदे'ति ज्ञानानुष्ठानयोश्च समानफलत्वं श्रूयते । अतो गीताध्ययनतदर्थज्ञानाभ्यां गीताप्रतिपाद्यज्ञानयोगाराधनेनेव प्रसन्ना-भवामीत्यर्थः ॥ ७० ॥

श्रद्धावान् - आस्तिक्यबुद्धिमान् । अनसूयश्च वक्तरि प्रतिपाद्ये च दोषाविष्काररहितः । यः - नरः । शृणुयादपि - आचार्यमुखात्पाठश्रवण मात्रं कुर्यादपीत्यर्थः । सोपि । श्रवणमात्रकर्ता वर्णाश्रमविहितकर्मपरित्या-ज्यपि । मुक्तः - भक्तिविरोधिपापैर्विमुक्तस्सन् । शुभान् - कल्याणान् ।

---

**जो पुरुष प्रश्नोत्तर रूप में हमारे इस धर्ममय गीता शास्त्र का अध्ययन करेगा, उसके अध्ययन रूप इस ज्ञानयज्ञ से मैं पूजित होऊंगा यह मुझे अभिमत है । सारांश यह है कि केवल गीता के अध्ययन से इसमें जो ज्ञानयज्ञ का विषय कहा गया है, उस ज्ञानयज्ञ के समान मैं आराधित होऊँगा ।। ७० ।**

**श्रद्धावान् एवं अनसूयू अर्थात् गुणों में दोष न देखने वाला पुरुष यदि इस गीता शास्त्र का केवल श्रवण भर करेगा तो उसके प्रभाव से भक्ति विरोधी पापों से मुक्त होकर पुण्यकर्म करने वाले मेरे भक्तों के लोकों को प्राप्त होता है ॥ ७१ ॥**

**कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ।**
**कच्चिदज्ञानसम्मोहः प्रणष्टस्ते धनंजय ॥७२॥**

अर्जुन उवाच—

**नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत ।**
**स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥७३॥**

---

पुण्यकर्मणां - भगवदाराधनरूपपुण्यकर्मकृतां । लोकान् - समूहान् । प्राप्नुयात् - गीताश्रवणजनितभगवदनुग्रहात् महात्मसहवास योगोपदेशद्वारा मुक्तिं प्राप्नोतीत्यर्थः । ननु नरककल्पस्वर्गप्राप्नोति - प्रक्रमविरोधादिति ध्येयम् ॥ ७१ ॥

अथ विदितार्जुनाभिप्रायोऽपि भगवानादरेणाविस्मरणसिद्धयर्थमुपदेश-साफल्यमजानन्निव पृच्छति—

हे पार्थ ! एकाग्रेण - सावधानेन । चेतसा - चित्तेन । त्वया । एतत् मदुक्तमर्थजातं । श्रुतंकच्चित् - मदुपदेशेन ज्ञातं किंवेत्यर्थः । हे धनंजय ! ते - तव । अज्ञानसम्मोहः - अज्ञानमूलकोभ्रमः । प्रणष्टःकच्चित् । निश्शेषं निवृत्तः किंवत्यर्थः । येन सर्वथा न योत्स्यइत्युक्तवानिति भावः ॥ ७२ ॥

अथार्जुनस्स्वस्वकृतज्ञतां द्योतयन्नुपदेशफलसिद्धयोरुत्तरयति—

हे अच्युत - आश्रितरक्षणाच्च्युतिरहित । मोहः - विपरीतज्ञानरूपः । अनात्मनि प्रकृतावात्माभिमानरूपः भगवदात्मकत्व प्रपञ्चस्य तदनात्मकत्वाभिमानरूपः कर्मणो भगवदाराधनतया तत्प्राप्त्युपायभूतस्यासाधनत्वाभिमानरूपश्च सर्वोमोहः । त्वत्प्रसादात् - तवपरमकारुणिकस्य - अनुग्रहात् । नष्टः - निवृत्तः । स्मृतिः - ज्ञातृत्त्वैकाकारतया स्वभावतः प्रकृतिविलक्षण प्रत्यगात्मस्वरूपनिखिलजगदुदयलीलाशेषदोषप्रत्यनीक कल्याणैकस्वरूप स्वाभाविकानवधिकातिशयासंख्येयकल्याणगुणगणमहार्णवसर्वशेषि पर-

---

**हे अर्जुन ! मेरे इस उपदेश को तुमने एकाग्र चित्त से सुना ? एवं सुनकर उसे यथार्थ रूप से समझा ? जिस अज्ञान से होने वाले भ्रम के कारण तुमने कहा कि 'मैं युद्ध नहीं करूँगा' तुम्हारा वह भ्रम नष्ट हुआ ? ॥ ७२ ॥**

**अर्जुन बोला—हे आश्रितों की रक्षा में चूक से रहित भगवन् ! आपकी कृपा से मेरा अज्ञान रूप मोह नष्ट हो गया एवं यथार्थ तत्व का ज्ञान विषयक बुद्धि रूप स्मृतिका लाभ हो गया है और सम्पूर्ण संशयोंसे निवृत्त होकर स्थित हूँ,'युद्ध करो' आपकी इस आज्ञा का मैं पालन करूँगा ॥ ७३ ॥**





संजय उवाच—

**इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।**
**सम्वादमिममश्रौषमद्भुतं रोमहर्षणम् ॥७४॥**
**व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम् ।**
**योगं योगेश्वरात् कृष्णात् साक्षात् कथयतः स्वयम् ॥७५॥**

---

ब्रह्म शब्दाभिधेयपुरुषोत्तमज्ञानरूपा परावरतत्त्वज्ञानाभ्यासपूर्विका अहरहरनुष्ठीयमानविहितकर्मनिषिद्धपरिहारशमदमाद्यात्मगुणनिर्वर्त्यभक्तिरूपो - पासनलभ्यो वेदान्तवेद्यः परमपुरुषो वासुदेवस्त्वमिति ज्ञानरूपा च भवदुपदेशजातबुद्धिरूपास्मृतिः । मया । लब्धा - प्राप्ता । गतसंदेहः - निवृत्तसकलसंशयः । स्थितः । अस्मि । बन्धुस्नेहकारुण्यविवृद्धविपरीतज्ञानमूलविषादद्विमुक्तोऽस्मीति यावत् । तव । वचनं - युद्धं कुर्विति वाक्यम् । करिष्ये - यथोपदिष्टं युद्धादिकं करिष्यामीत्यर्थः ॥ ७३ ॥

मामकाः पाण्डवाश्चैव किमकुर्वत संजयेति पृच्छते धृतराष्ट्राय संजयो वक्ति—

इतीमं - पूर्वोक्तरूपम् । अद्भुतं - अत्याश्चर्यम् । अतएव, रोमहर्षणं पुलकोद्गमकरम् । वासुदेवस्य - वसुदेवसूनोः कृष्णस्य । महात्मनः - महाबुद्धेः । पार्थस्य च - पृथायाः - तत्पितृष्वसुः कुन्त्याः पुत्रस्यार्जुनस्य च । सम्वादम् । अश्रौषम् - श्रुतवानस्मि ॥ ७४ ॥

ननु दूरस्थस्त्वं कथं श्रुतवानित्यत्राह—

व्यासप्रसादात् - व्यासानुग्रहात् । तदनुग्रहलब्धदिव्यचक्षुश्श्रोत्रत्वादिति यावत् । योगं - योगाख्यम् । परं - उत्कृष्टम् । एतत् गुह्यं - गुह्य-

---

**राजा धृतराष्ट्र से संजय बोले—इस प्रकार वासुदेव श्रीकृष्ण एवं कुन्ती पुत्र महात्मा अर्जुन का जो यह रोमांचकारी अद्भुत सम्वाद हुआ, उसे मैंने सुना ॥७४ ।**

**दूर से तुमने यह सम्वाद किस प्रकार सुना ? धृतराष्ट्र के इस प्रश्न का संजय उत्तर देते हैं —**

**श्रीवेदव्यास जी के अनुग्रह से दिव्य नेत्र एवं दिव्य कर्ण प्राप्तकर कर्म, ज्ञान, भक्तियोग रूप उत्कृष्ट इस रहस्य तत्व को योगेश्वर अर्थात् सम्पूर्ण ज्ञान, बल, ऐश्वर्य, वीर्य, शक्ति एवं तेज गुणों से युक्त अतएव गुणों की खान भगवान् श्रीकृष्णचन्द्र के श्रीमुख से इस सम्वाद को मैंने अपने कानों से सुना है ॥ ७५ ॥**

**राजन् संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।**
**केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥७६॥**
**तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।**
**विस्मयो मे महान् राजन् हृष्यामि च पुनः पुनः ॥७७॥**

---

तरम् । योगेश्वरात् - योगः - कल्याणयोगः, तेन ईश्वरात् - सर्वनियन्तुः । साक्षात् । कथयतः - कृष्णात् । अव्यवधानेन तस्मिन् भगवतीति यावत् । स्वयम् । श्रुतवान् - अहमेवाश्रौषमित्यर्थः ॥ ७५ ॥

दूरस्थोऽपि प्रत्यक्षं श्रुतवानस्मीति विस्मितस्सन्नाह द्वाभ्यां—

हे राजन् ! धृतराष्ट्र । अद्भुतं । पुण्यं - ज्ञानयज्ञादिव परमपावनं । केशवार्जुनयोः । इमं । संवादं । मुहुर्मुहुः - पुनः पुनः । सम्स्मृत्यसम्स्मृत्य साक्षाद्भृशं स्मृत्वास्मृवा । हृष्यामि च - पुनः पुनः पुलकित सर्वांगो भवामि च ॥ ७६ ॥

तत् - व्यासप्रसादात्साक्षात्कृतं, हरेः - कृष्णस्य । अत्यद्भुतं - अत्यान्ताश्चर्यं । रूपं च - विश्वरूपं च सम्स्मृत्यसम्स्मृत्य - अपूर्वत्वात्पुनः पुनस्स्मृत्वा स्मृत्वा । हे राजन् ! मे । महान् । विस्मयः । भवति । विस्मयावेशो भवतीत्यर्थः । पुनः पुनः । हृष्यामि च - पुलकितगात्रो भवामिचेत्यर्थः ॥ ७७ ॥

किमत्र बहुनोक्तेन—

यत्र । योगेश्वरः - कृत्स्नस्योच्चावचरूपेणावस्थितस्य चेतनस्याचेतनस्य च वस्तुनो ये ये योगाः - तेषामीश्वरः - स्वसंकल्पायत्तस्वेतर समस्तवस्तुस्वरूपस्थितिप्रवृत्तिभेदः । कृष्णः - वसुदेवसूनुः । अस्ति । यत्र । धनुर्धरः । पार्थः - तत्पितृष्वसुः पुत्रस्तत्पदाम्बुजद्वयैकाश्रयोऽर्जुनश्च । अस्ति ।

---

**इसलिए धृतराष्ट्र ! श्रीकृष्ण भगवान् एवं अर्जुन के इस पवित्र एवं कल्याण कारक अद्भुत संवाद को लगाकर बारबार स्मरण करके मैं पुनः पुनः प्रसन्न होता हूँ ॥ ७६ ॥**

**( हे धृराष्ट्र ! ) अर्जुन के ऊपर कृपा करने के लिए प्रकाशित एवं मेरे द्वारा साक्षात्कार किये श्रीहरि के उस ऐश्वर्यमय अत्यद्भुत रूप (विश्वरूप) को भी बारबार स्मरण करके मेरे चित्त में महान् आश्चर्य होता है और मैं बारम्बार हर्षित होता हूँ ॥ ७७ ॥**





**यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।**
**तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥७८॥**

॥ इति श्रीभगवद्गीतायां अष्टादशोऽध्यायः ॥ १८ ॥

---

तत्र । श्रीः । विजयः । भूतिः । नीतिश्च । इत्येते । ध्रुवाः । निश्चलाः सन्ति । इति । मम - मतिः - निश्चयः । अस्ति ॥ ७८ ॥

इति श्रीभगवद्गीताभाष्यार्थसंग्रहतात्पर्यदीपे श्रीवरवरमुनिविरचितायां बालबोधिन्यपराभिधानायां गीतार्थसंग्रहदीपिकायां ।

अष्टादशोध्यायः ॥ १८ ॥



---

**हे धृतराष्ट्र राजन् ! अधिक क्या कहा जाय जहाँ योगेश्वर श्रीकृष्ण भगवान् हैं एवं जहाँ गाण्डीव धनुष धारण करने वाला अर्जुन है वहां पर श्रीविजय, विभूति, और नीति ये सब समृद्धियाँ निश्चल भाव से रहती हैं, यह मेरा सिद्धान्त है । ७८॥**

**ॐ तत्सदिति श्रीमद्भगवद् गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसम्वादे मोक्षसंन्यासयोगो नामाष्टादशोध्यायः । १८ ॥**

**हरिः ॐ तत्सत् ३**